अहं हि भवता गोपु सततं प्रकृतः पुरा ।
तत्सर्वं मे सुविदितमन्यच्चापि विशांपते ॥ ८ ॥
वृषभानपि जानामि राजन्पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ॥ ९ ॥
सोऽहमेवं चरिष्यामि प्रीतिरत्र हि मे सदा ।
न च मां वेत्स्यति परस्तत्ते रोचतु पार्थिव ॥ १० ॥

युधिष्ठिर उवाच ।

इयं तु नः प्रिया भार्या प्राणेभ्योऽपि गरीयसी ।
मातेव परिपाल्या च पूज्या ज्येष्ठेव च स्वसा ॥ ११ ॥

8 *a* Edns C सततं E भवतां FH भवतः M भविता for भवता । Edns C भरता H प्राकृतः for सतत । Edns EN प्रहितः B प्रहितं G प्राहितः H सतत M सत्कृतः for प्रकृतः ।
*b* E सुविहितं K अस्ति विदित for सुविदितम् । Edns BCLGHKLN महीपते ।

9 *a* DK राज for राजन् ।
*b* L ह्यपि for अपि ।

10 *a* H अत्र K एव for एवम् । L प्रीतिं । N तस्य भविष्यति for अत्र &c. H अभवत् for सदा ।
*b* Edns BCEGL वेत्स्यते कश्चित् A² वेत्सिते कश्चित् । H जनः for परः । Edns BCEG तोषयिष्ये च पार्थिवम् for तत्ते &c. D पार्थिव रोचतां । H तत्र रोचत पाडव K पार्थिव रोचते । M पार्थिव N न नृप for पार्थिव ।

11 *a* Edns CGKN हि for तु । F मनः for तु नः ।
*b* D प्रतिपाल्या । K वै for च । Edns पूज्य° । L यथा for इव च । H reads v. 11 and 12 *a* after v. 13 *a*.

---

8 *a* SG, SL भवतो SA भविता । SK प्रहितः सतत SA, SL प्रकृतः सतत ।
*b* SK, SG, ST तत्सर्वम् । SL, SA महीपते SG महामते for विशांपते ।

9 *a* SA, SL ऋषभानपि for वृष० । ST पूजितलक्षणान् ।
*b* ST प्रजायते ।

10 *a* S. cl. परा हि मे for हि मे सदा ।
*b* SA¹ मे योत्स्यति । SA² न हि मा । SL तत्तु रोचत पार्थिवः ।

11 *a* SA² हि for तु । ST प्राणेरपि ।
*b* ST प्रतिपाल्या । S. cl. ज्येष्ठा स्वसेव च ।

केन सा द्रौपदी कृष्णा कर्मणा विचरिष्यति ।
न हि किंचिद्विजानाति कर्म कर्तुं यथा स्त्रियः ॥ १२ ॥
सुकुमारा सुबाला च राजपुत्री यशस्विनी ।
पतिव्रता महाभागा कथं हि विचरिष्यति ॥ १३ ॥
माल्यान्गन्धानलंकारान्वस्त्राणि विविधानि च ।
एतान्येव हि जानाति यतो जाता हि भामिनी ॥ १४ ॥

द्रौपद्युवाच ।

सैरन्ध्र्योऽरक्षिता लोके भुजिष्याः सन्ति भूभृताम् ।
नैवमन्याः स्त्रियः सन्ति इति लोकस्य निश्चयः ॥ १५ ॥

12 *a* Edns CN स्म BDE असौ K अत्र L इह for सा। BEHKLN interchange द्रौपदी and कर्मणा। H तत्र for कृष्णा।
*b* H किंचन जानाति। D च जानाति L न जानाति for विजानाति। K omitts *b*.

13 *a* Edns BGHMN सुकुमारी। Edns BGLMN च for सु (बाला) H सुशीला।
*b* Edns BCEN नु G तु L च for हि। L अनुचरिष्यति। K omits this v; H *b* only.

14 *a* Edns CDGKL माल्य॰ BEN माल्यं॰। H वस्त्रगंधमलंकारं। H मृदूनि शयनानि for वस्त्राणि विविधानि। K अपि for च।
*b* Edns AEGKLN अभिजानाति। BEK साधु साध्वीव्रते स्थिता for यतो &c. H च for हि। L यशस्विनी for हि भामिनी। N भाविनी।

15 *a* B लोक H स्त्रीणां for लोके। Edns BCEGHKLN भारत for भूभृताम्।
*b* M एवं for एवम्। N नैरेमन्य॰। for नैवमन्याः। D न मोग्यतां कचित् for नैवमन्याः स्त्रियः। Edns AEGHKLN यान्ति for सन्ति। AF add तु before इति। M कृत॰ for इति। H adds after सन्ति–यथैताः प्राकृताः स्त्रियः। एकपत्न्यः स्त्रियश्चैता–( इति लोकस्य निश्चयः। )

---

12 *a* SK, SG, ST केनात्र कर्मणा SL केन स्म कर्मणा SA केना(वि ?) स्मि। S. cl. द्रौपदी for कर्मणा।
*b* ST किंचावजानाति SA किंचन जानामि।

13 *a* S. cl. सुकुमारी सुशीला।
*b* SK नु for हि। S. MSS omit *b*. The order of these verses in S. cl. is:–12, 14, 13 *b*, 11, 13 *a*.

14 *a* S. cl. except SA[1] माल्य॰।
*b* S. cl. except SA[2] एतावन्येवाभि॰ SA[2] ॰न्येव वि॰। SK यथा for यतो। S. cl. except SA[2] च for हि।

15 *a* SG लक्षिताः। S. cl. स्त्रीणां for लोके। SA[1] सैरन्ध्रीरक्षणाः। S. cl. भारत for भूभृताम्।
*b* S. cl. एकपत्न्यः स्त्रियश्चैता। & omits तु। ST इति लोके विनिर्णयः।

साहं ब्रुवाणा सैरन्ध्री कुशला केशकर्मणि ।
युधिष्ठिरस्य गेहेऽस्ति द्रौपद्याः परिचारिका ॥ १६ ॥
उषितास्मीति वक्ष्यामि पृष्टा राज्ञा च भारत ।
आत्मगुप्ता चरिष्यामि यत्त्वं मामनुपृच्छसि ॥ १७ ॥
सुदेष्णां प्रत्युपस्थास्ये राजभार्यां यशस्विनीम् ।
सा रक्षिष्यति मां प्राप्तां मा ते भूद्दुःखमीदृशम् ॥ १८ ॥

युधिष्ठिर उवाच ।

कल्याणं भाषसे कृष्णे कुले जाता यथा वदेत् ।
अपापामभिजानामि साधु साध्वीव्रते स्थिताम् ॥ १९ ॥

16 *a* H कुशला केशकारिका ।
*b* Edns BCEGKLN वै DF अस्मिन् AM अस्मि । H omits *b*.

17 *a* omitted in H.
*b* BDE भविष्यामि । Edns BCEGHKLN interchange मां and त्वम् । A मा for माम् । Edns AEGHKLN परिपृच्छसि ।

18 *a* H किं त्व समभिमन्यसे for राज° &c.
*b* H पूजयिष्यति मां प्रीत्या for सा &c. Edns BCEGHKLN मा भूत्ते । H चित्तं M भुवं for दुःखम् ।

19 *a* M भद्रे for कृष्णे । Edns CDEK असि भामिनि H यशस्विनी N हि भाविनी for यथा वदेत् ।
*b* Edns EGHKLN न पापमभिजानामि । A अपि जानामि । BC न पापमभिजानामि । Edns CL साध्वी साधुव्रते । Edns BCEGKLN स्थिता । H पतिव्रते for °व्रते स्थिताम् ।

---

16 *b* SK वै गेहे ST गेहेस्मिन् । SG, SL, SA omit *b*.

17 *a* ST एषा रक्षा for पृष्टा राज्ञा ।
*b* ST एवं च वि° for आत्मगुप्ता । SK यन्मां त्व परि° । SG, SA, SL omit this verse.

18 *a* ST सुदेष्णां ।

19 *a* SG, ST, SA भाषसे कृष्णा । SK, SG, SL, SA यथा कौन्तेयकी तथा । ( SG कालेयकी ) ST यथाकाल यशस्विनी ।
*b* SK पापमभिजानामि SG, SA, SL न पापमनवद्यांगी ST न पापमनवद्यांगी । S. MSS. भाषसे धर्म्यहासिनी SK साध्वी साधुव्रते स्थिता ।

यथा न दुर्हृदः पापा भवन्ति सुखिनः पुनः ।
कुर्यास्तथा त्वं कल्याणि लक्षयेयुर्न ते यथा ॥ २० ॥

इति विराटपर्वणि पाण्डवप्रवेशे द्रौपदीवाक्यं
नाम तृतीयोऽध्यायः ॥ ३ ॥

## ॥ चतुर्थोऽध्यायः ॥

युधिष्ठिर उवाच ।

कर्माण्युक्तानि युष्माभिर्यानि तानि करिष्यथ ।
मम चापि यथाबुद्धि रुचितानि विनिश्चये ॥ १ ॥
पुरोहितोऽयस्माकमग्निहोत्राणि रक्षतु ।
सूतपौरोगवैः सार्द्धं द्रुपदस्य निवेशने ॥ २ ॥
इन्द्रसेनमुखाश्चेमे रथानादाय केवलान् ।
यान्तु द्वारवतीं शीघ्रमिति मे वर्तते मतिः ॥ ३ ॥

20 *a* H तथा for यथा । H सुहृदः । B सुखिना H असुखि° ।
*b* Edns तत् त्व हि for तथा त्वम् । FLMN कुर्यात् । H यथा न ते । Edns C तथा । A[2] जनः M जनाः for यथा ।

* * *

IV. 1 *a* Edns CGKL यानि for तानि ।
*b* D omits च । D रुचिता for यथा । KN बुध्या for बुद्धि । Edns EG रुचिता विधिनिश्चयात् BKN रुचितानि विनिश्चयात् D यथास्थितानि विनिश्चये H रुचिता हि विनिश्चिता L रुचितां तां निबोधत AFM रुचिताभि° ।
2 *b* Edn[2] HK सूदपौरोगवैः ।
3 *a* BEHN इंद्रसेनादयः । F इमान् G एव H एते M एतान् for इमे ।
*b* HKL द्वारावतीम् ।

---

20 *a* SK, ST नो for न ।
*b* SK, ST जनाः for यथा । SK interchanges vv. 19 & 20, and SG, SL, SA omit v. 20 altogether.

* * *

IV. 1 *a* SK, ST, SL, SA चरिष्यथ । SA[1] वैश° for युधिष्ठिर° ।
*b* SK, SG, ST हि विनिश्चयात् SA °श्चयात् SL भुवि निश्चयात् ।
2 *b* SG, ST, SA[2] सूदाः SL सूत ः । SA[1] द्रौपदस्य निवेशनम् ।
3 *a* SG ST, SA एते for इमे । SL सेनाद्य° ।

इमाश्च नार्यो द्रौपद्याः सर्वशः परिचारिकाः ।
पाञ्चालानेव गच्छन्तु सूतपौरोगवैः सह ॥ ४ ॥
सर्वैरपि च वक्तव्यं न प्रज्ञायन्त पाण्डवाः ।
गता ह्यस्मानपाकीर्य सर्वे द्वैतवनादिति ॥ ५ ॥

धौम्य उवाच ।

विहितं पाण्डवाः सर्वं ब्राह्मणेषु सुहृत्सु च ।
याने प्रवहणे चैव तथैवाग्निषु भारत ॥ ६ ॥
त्वया रक्षा विधातव्या कृष्णायाः फाल्गुनेन च ।
विदितं वो यथासर्वं लोकवृत्तमिदं नृप ॥ ७ ॥

4 *a* H मता. for इमा । Edns ABCEGLN सर्वान्त H सर्व च for सवश । H परिचारकाः ।
*b* Edn[1] BEGN पचाल्वान् । Edn[2] CKH सूतपौगे° ।

5 *a* H finishes its Adh. 3 after v. 5 naming it as मन्त्रनिर्णय ।
Edns BCEIGHKLM प्रज्ञायत D मज्ञायत N माज्ञायन्तु for मज्ञायन्त ।
*b* AMK गतास्मान G गताचास्मान् HL गतानस्मान् for गता ह्यस्मान् । Edn[2] CH अपहाय K अपाकृय । H ते चाश्रमात् for द्वैतवनात् । B इत K अपि for इति ।

6 *a* BEN विदित H विहिता for विहित । H पांडवे । BCDEM सव H सर्वे for सर्वं ।
*b* C माने प्रमादने । Edns BDLGKN प्रहरणे H वाहनेष च यानेषु for याने प्रवहणे चैव । N यथा for तथा । DN च for एव । H वृषु for अग्निषु । A omits v. 6

7 *b* BE या for व । L यथापूर्वं N यथान्याय for यथासर्वं । H लोकतत्वं K लोकवृत्त । AD इम for इदम् । Edns CG नव KLN नृपा for नृप । A omits *a*

---

4 *a* SK सर्वाश्च S. MSS सर्वत । SA[1] °चारका ।
*b* SG, ST सूद° SA[2], SL सूदा ।
5 *a* SK, SA[2] प्राज्ञा° । SA[1] प्राज्ञायन्त ।
*b* S. cl. अपहाय ।
6 *a* SA[1] विहितेषामित्यनध्य ।
*b* SA[1] वहनं पाण्डुपेषेव । SK, SG, ST, SL, SA[2] omit v. 6.
7 *a* omitted in SK, SG, ST, SL, SA[2] । SA[1] कृष्णायां ।
*b* omitted in SG, ST, SL, SA[2] । SK वै for वा । SK नाहं ।

यथा न दुर्हृदः पापा भवन्ति सुखिनः पुनः ।
कुर्यास्तथा त्वं कल्याणि लक्षयेयुर्न ते यथा ॥ २० ॥

इति विराटपर्वणि पाण्डवप्रवेशे द्रौपदीवाक्यं
नाम तृतीयोऽध्यायः ॥ ३ ॥

## ॥ चतुर्थोऽध्यायः ॥

युधिष्ठिर उवाच ।

कर्माण्युक्तानि युष्माभिर्यानि तानि करिष्यथ ।
मम चापि यथाबुद्धि रुचितानि विनिश्चये ॥ १ ॥
पुरोहितोऽयस्माकमग्निहोत्राणि रक्षतु ।
सूतपौरोगवैः सार्द्धं द्रुपदस्य निवेशने ॥ २ ॥
इन्द्रसेनमुखाश्चेमे रथानादाय केवलान् ।
यान्तु द्वारवतीं शीघ्रमिति मे वर्तते मतिः ॥ ३ ॥

20 *a* H तथा for यथा । H सुहृदः । B सुखिना H असुखि॰ ।
*b* Edns तत् त्वं हि for तथा त्वम् । FLMN कुर्यात् । H यथा न ते । Edns C तथा । A[2] जनः M जनाः for यथा ।

* * *

IV. 1 *a* Edns CGKL यानि for तानि ।
*b* D omits च । D रुचिता for यथा । KN बुध्या for बुद्धि । Edns EG रुचिता विधिनिश्चयात् BKN रुचितानि विनिश्चयात् D यथास्त्वानि विनिश्चये H रुचना हि विनिश्चिता L रुचिता तां निबोधत AFM रुचिताभि॰ ।
2 *b* Edn[2] HK सूदपौरोगवैः ।
3 *a* BEHN इंद्रसेनादयः । F इमान् G एव H एते M एतान् for इमे ।
*b* HKL द्वारावतीम् ।

---

20 *a* SK, ST नो for न ।
*b* SK, ST जनाः for यथा । SK interchanges vv. 19 & 20, and SG, SL, SA omit v. 20 altogether.

* * *

IV. 1 *a* SK, ST, SL, SA चरिष्यथ । SA[1] वैश॰ for युधिष्ठि॰ ।
*b* SK, SG, ST हि विनिश्चयात् SA ॰श्चयात् SL बुधि निश्चयात् ।
2 *b* SG, ST, SA[2] सूदाः SL सून । । SA[1] द्रौपदस्य निवेशनम् ।
3 *a* SG ST, SA एते for इमे । SL सेनाद्य॰ ।

यो न यानं न पर्यङ्कं न पीठं न गजं रथम् ।
आरोहेत्संमतोऽस्मीति स राजवसतिं वसेत् ॥ १२ ॥
अथ यत्रैनमासीनं शङ्केरन्दुष्टचारिणः ।
न तत्रोपविशेद्यो वै स राजवसतिं वसेत् ॥ १३ ॥
न चानुशिष्येद्राजानमपृच्छन्तं कदाचन ।
तूष्णीं त्वेनमुपासीत काले समभिपूजयन् ॥ १४ ॥
असूयन्तीह राजानो जनाननृतवादिनः ।
तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ॥ १५ ॥
नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कथंचन ।
अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च ये ॥ १६ ॥

12 *a* H न सायुज्य for यो न यानं । FM नापीठं H नासनं for न पीठं । N ह्यं for रथं । H न च वै for न गज ।

13 *a* Edn[2] G यत्र for अथ ।
*b* E यत्र for तत्र । DM उपवसेत् । D असौ for वै । H जातु for यो वै । H यः for सः । CL omit the whole verse.

14 *a* Edns BCDEFMN न चानुशिष्यात् G न जातु शिक्षेत् K न जातु शिष्यात् ।
*b* Edn[1] D चैनं FLM त्वेवं for त्वेनं । Edns AGK समभिपूजयेत् । H omits the whole verse.

15 *a* Edns ABDEGKLN असूयति हि । K जनानामनुशासनात् ।
*b* D अनुमन्यंते for अवमन्यन्ते । K एवं for एव । H omits the whole verse.

16 *a* H प्राज्ञो मैत्रीं । Edns CDFKMN कदाचन ।
*b* D ये F न for च । D द्वेष्ट्या न कथंचन । K द्विष्टयात गताः K[2] according to text. L द्वेष्टारो न हिताश्रये । M दुष्टयानहिताश्च ये । H omits *b*.

---

12 *a* S. cl. reads नास्य युग्यं न पर्यङ्कं नासनं न रथं तथा । (SA[2] नान्य° ।)
*b* SG, SA[2] सान्वितो° SA[1] सन्वितो for संमतो । S. cl. यो for स ।

13 *a* S. cl. यथैन यत्र च for अथ यत्रैनम् । SK शङ्कयेत् । SK, SG, ST, SL, SA[1] °चारिणम् ।
*b* ST, SA[1] °वसेत् for °विशेत् । S. cl. जातु यो for यो वै स ।

14 *a* SK °शिष्यात् ।
*b* SK पूजयेत् । S. MSS omit the whole verse.

15 *a* SK हि for इह । S. MSS omit the whole verse.

16 *a* SK, SG, SL, SA प्राज्ञो मैत्रीं ST राज्ञो मैत्रीं ।
*b* S. cl. omits *b*.

अनुकूलो भवेच्चास्य सर्वासु च कथासु च ।
अप्रियं च हितं यत्स्यात्तदस्मै नानुवर्णयेत् ॥ २१ ॥
नाहमस्य प्रियोऽस्मीति मत्वा सेवेत पण्डितः ।
अप्रमत्तश्च यत्तश्च हितं कुर्यात्प्रियं च यत् ॥ २२ ॥
नास्यानिष्टानि सेवेत नाहितैः सह संविशेत् ।
स्वस्थानान्न विकम्पेत स राजवसतिं वसेत् ॥ २३ ॥
दक्षिणं वाय वामं वा पार्श्वमासीत पण्डितः ।
रक्षणा शत्रुशस्त्राणां स्थानं पश्चाद्विधीयते ॥ २४ ॥

21 *a* C अनुकूलोद्भवे for अनुकूलो भवेत् । Edns BCDEGHKLMN सर्वार्थेषु ।
*b* BEK वा for च । Edns BCDEGKN अहितं for हितं । GN अनुवर्तयेत् for अनुवर्णयेत् । H omits the whole verse.

22 *b* Edns CG सततं A शांतश्च FM दांतश्च K दक्षश्च for यत्तश्च । FM तत् for यत् । DH omit the whole verse.

23 *a* Edn² BCDEGL संवदेत् Edn¹ FKN संवसेत् for संविशेत् । H reads न राज्ञः प्रतिकूलानि सेवमानः सुखीभवेत् ।
*b* E ना⁰ for न । H omits *b*.

24 *a* L चाय । DH अपि for अथ । H बाहुमाश्रित्य for पार्श्वमासीत् ।
*b* Edns BCGHKLN रक्षिणां D रक्षणे EM रक्षिणा A रक्षण for रक्षणा । Edns BCDEFGHLMN ह्यात्तशस्त्राणां for शत्रुशस्त्राणां । H पश्चात्स्थान L पार्श्वस्थानं A स्थान पार्श्वात् for स्थान पश्चात् ।

---

21 omitted in S. cl.

22 omitted in S. cl.

23 S. cl. reads:—न राज्ञः प्रतिकूलानि सेवमानः सुखीभवेत् ।(SA¹ राज्ञः प्रतिकूलेषु ।)
*b* omtted in S. cl.

24 *a* SG, ST, SL, SA वापि for वाथ । SK भागमाश्रित्य S. MSS बाहुमाश्रित्य for पार्श्वमासीत ।
*b* SK, SG, SA, SL रक्षिणा ST दक्षिणां । S. cl. आत्त⁰ for शत्रु⁰ । S. cl. पश्चात्स्थानम् ।

विदितान्यस्य कुर्वीत कार्याणि सुलघून्यपि ।
एवं विचरतो राज्ञि न क्षितिर्जायते क्वचित् ॥ १७ ॥
यत्नाच्चोपचरेदेनमग्निवद्देववच्च ह ।
अनृतेनोपचीर्णो हि हन्यादेनमसंशयम् ॥ १८ ॥
यच्च राजानुयुञ्जीत तदेवाप्यनुवर्तयेत् ।
प्रमादमवहेलां च क्रोधं च परिवर्जयेत् ॥ १९ ॥
समर्थनासु सर्वासु हितं च प्रियमेव च ।
संवर्णयेत्तदेवास्य हितादपि प्रियं वदेत् ॥ २० ॥

17 *a* Edns BCDGKLN विदिते चास्य E विहिते चास्य for विदितान्यस्य । BCE सुयहूनि for सुलघूनि । G interchanges कुर्वीत and कार्याणि ।

*b* N विचारितः for विचरतः । MN राज्ञः for राज्ञि । Edns CGKLMN क्षतिः BE च्युतिः D क्षर्ति for क्षितिः । H omits the whole verse.

18 *a* M देवतश्च for देववच्च । Edns BCGL त्विह D च हि for च ह ।

*b* BE अनृते चोपकीर्णः F अनृते चोपचीर्णः M अनृते चोपचीर्णे । BEKLN हिंस्यात् for हन्यात् । Edns BCEG एव M एवः for एनं । Edns BCEG न संशयः M नसंशयं । H omits the whole verse.

19 *a* Edns CGK यद्भर्ता A यत्र राजा BELN यच्च भर्ता । Edns तत्तदेवानुवर्तयेत् AGK तदेवास्यानुवर्तयेत् C °अनुवर्तयन् L तदेवमुपवर्णयेत् M तदेवाभ्यनुवर्णयेत् N तदेवाद्यनु° ।

*b* E प्रसाद for प्रमाद । Edns CGN अवलेपं K परिवाद for अवहेलां । Edns BCEGLN कोपं for क्रोधं । D omits *b* and H omits the whole verse.

20 *b* Edn[1] ALMN प्रियादपि हितं वदेत् Edn[2] BCEG प्रियादपि हितं भवेत् D यदेवास्मै हितं भवेत् K प्रियादपि हितं च यत् । D omits *a* and H omits the whole verse.

---

17 *a* SK विदिते चास्य° ।

*b* SK क्षतिः । S. MSS. omit the whole verse.

18 omitted in S. cl.

19 omitted in S. cl.

20 omitted en S. cl.

यस्य कोपो महाबाधः प्रसादः सुमहाफलः ।
कस्तस्य मनसापीच्छेदनर्थं प्राज्ञसंमतः ॥ २९ ॥
न चोष्ठौ निर्भुजेज्जातु न च वाक्यं समाक्षिपेत् ।
सदा वातं च वातं च ष्ठीवनं चाचरेच्छनैः ॥ ३० ॥
हास्यवस्तुषु चाप्यस्य वर्तमानेषु केषुचित् ।
नातिगाढं प्रहृष्येत न चाप्युन्मत्तवद्धसेत् ॥ ३१ ॥
नातिधैर्यं चरेत्तत्र गुरुतां हि तथा व्रजेत् ।
स्मितं तु मृदुपूर्वेण दर्शयेदप्रमादजम् ॥ ३२ ॥

29 *a* Edns ABCDEGHKLN च M तु for नु° ।
*b* D त्वस्य for तस्य । BE अनर्थान् for अनर्थं । DF प्राप्य समत. L प्राज्ञ सत्तमः N प्राज्ञसम्मत. for प्राज्ञसमत. ।
30 *a* F विभुजिद्वातु K विभजेज्जातु Edns BCDEGHN न भुजौ जानू ।
*b* Edns DN वात च वाच च । KH वा for च । K वाक्यं for वाचम् । FM चरेत् for आचरेत् । A omits the whole verse. H तथा क्षुत च वातश्च ।
31 *a* H हर्षं° for हास्य° । Edn² C चान्यस्य G वान्यस्य H वाप्यत्र for चाप्यस्य । G क्वचित् for केषुचित् ।
*b* H अतिगाढ. for अतिगाढं । D प्रहस्येत H प्रहृष्ट.स्यात् N प्रहास्येत for प्रहृष्येत । H तान्येवास्यानुपूजयेत् । FLM वदेत् for हसेत् । A omits the whole verse
32 *a* Edns CFGLM न चातिधैर्येण चरेत् BE न चातिदैन्यमारेत D तथाहि धैर्येण चरेत् K न चापि धैर्येण चरेत् । L भ्रुकुटिं न समाव्रजेत् । BCDEFGKM व्रजेत्तथा Edns व्रजेत्तत for तथा व्रजेत् ।
*b* HL च for तु । Edn² CFGM दर्शयेत H दर्शनाय for दर्शयेत् । Edn² CGH प्रसादज K तत्प्रसादज for अप्रमादज । D स राजवसतिं वसेत् । H omits *a* and A omits the whole v.

---

29 omitted in S cl
30 *a* SK, SG, SL, SA, ST न भुजौ जानू ।
SA² पादौ for वाक्य ।
*b* S cl तथा क्षुत for सदा वाच । SK, SG, ST, SA निष्ठावम् ।
31 *a* SK, ST, SA हर्ष° SG हर्षो° SL महत्° for हास्य° । SK, SG, ST, SA चाप्यत्र SL अप्यत्र ।
*b* SG, ST, SA प्रहृष्ट. स्यात् । S cl. तान्येवास्यानुपूजयेत् for नचाप्यु &c.
32 *a* omitted in S cl.
*b* SG, SA स्मृत for स्मित । SK, ST, SA दर्शयाम SG दशयान SL दर्शयेत S cl. प्रसाद° ।

नित्यं विप्रतिषिद्धं हि पुरस्तादासनं महत् ।
न च संदर्शने किंचित्प्रवृद्धमपि संजपेत् ॥ २५ ॥
अपि ह्येतद्दरिद्राणां व्यलीकस्थानमुत्तमम् ।
न मृषाभिहितं राज्ञो मनुष्येषु प्रकाशयेत् ॥ २६ ॥
शूरोऽस्मीति न दृप्तः स्याद्बुद्धिमानिति वा पुनः ।
प्रियमेवाचरन्प्राज्ञः प्रियो भवति भोगवान् ॥ २७ ॥
ऐश्वर्यं प्राप्य दुष्प्रापं श्रियं प्राप्य च राजतः ।
अप्रमत्तो भवेद्राज्ञः प्रियेषु च हितेषु च ॥ २८ ॥

25 *a* Edns CFGM हि A च for वि॰ । Edns CDGKLM तु BEN च for हि । BE त्यजेत् for महत् । *a* omitted in H.
*b* D सदर्शन L अस्य दर्शने for सदर्शने । Edns DG प्रवृत्त BCE अबद्ध KHL प्रबुद्ध for प्रवृद्ध । H राज्ञः for किंचित् । M अभि for अपि । Edn² CLG संजयेत् KM सवदत् H सनयेत् for सजपेत् ।

26 *a* H च for हि । D एत for एतत् । D नरेंद्राणां for दरिद्राणां । AF व्यलीक स्थानम् ।
*b* Edns BCDELN राज्ञां GK राज्ञा for राज्ञः । H omits *b*.

27 *a* D पूज्यः for शूरः । G धृष्टः for दृप्तः ।
*b* K आचरेत् for आचरन् । Edns BCDEFGKMN राज्ञः for प्राज्ञः । F प्रियं M प्रिया for प्रिय. । K गौरवात् for भोगवान् । H omits the whole verse.

28 *a* BEHN दुष्प्राप्यं for दुष्प्राप । N. cl. except A प्रिय for श्रिय । N भारत for राजतः ।
*b* N प्राज्ञः G राज॰ for राज्ञः ।

---

25 *a* SK तत् S. MSS तु for हि । S. cl मतम् for महत् ।
*b* SK, SG राज्ञां ST, SG, SA राज्ञः for किंचित् । SK, SG, SA, SL प्रबन्धम् ST प्रबुद्ध for प्रवृद्धम् । SK, SG अभि॰ for अपि ।

26 *a* S cl. च for हि ।
*b* S. cl मिथो॰ for मृषा॰ । ST भाषण SK, SG, SL, SA भाषितं for अभिहितम् ।

27 omitted in S. cl

28 omitted in S cl

श्रेयः सदात्मनो दृष्ट्वा परं राज्ञा न संवदेत् ।
विशेषयेच्च राजानं योग्यभूमिषु सर्वदा ॥ ३८ ॥
अम्लानो बलवांच्छूरश्छायेवानुगतः सदा ।
सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत् ॥ ३९ ॥
अन्यस्मिन्प्रेक्ष्यमाणे तु पुरस्ताद्यः समुत्पतेत् ।
अहं किं करवाणीति स राजवसतिं वसेत् ॥ ४० ॥
अभारे चैव भारे च राज्ञा यश्चैव सर्वदा ।
आदिष्टो न विकम्पेत स राजवसतिं वसेत् ॥ ४१ ॥

38 *a* D प्रियः for श्रेयः । C आत्मने for आत्मनः । BDEMN पर॰ for परं N राज्ञां ।
*b* Edn[1] BDELN न for च । BE योग्यो भूमिषु । LN योग्याभूमिषु । AH omit the whole verse.

39 *a* H reads the line as:—अन्वेच्छुर्धृतिमान् राजन् छायेवात्मपगच्छयः । (?) D अनपगः for अनुगतः ।
*b* L सद्वासन्निहिताश्रयः । H reads the line as:—ऋजुर्मृदुःसत्यवादी यः स राजसु सिध्यति । A omits the whole verse.

40 *a* H अन्येषु प्रेष्यमाणेषु पुरस्तादुत्पतेत्तुयः । Edns CGLN प्रेष्यमाणे D प्रेर्यमाणे । EM समुत्स्यजेत् for समुत्पतेत् ।
*b* H करिष्याम्यहमित्येव यः स राजसु सिध्यति । A omits the whole verse.

41 *a* Edns CG आतरे K अभावे for अभारे । E आरभेनैव । Edns CG वाह्ये K भावे for भारे । Edn[2] CG अथ for एव ।
*b* Edns CG एव for वि॰ ( कंपेत ) K विकल्पेत । K[2] न विकम्पेत according to text. AHL omit the whole verse.

---

38 omitted in S. cl.

39 *a* SK, SA अल्पेच्छो SG, ST, SL अल्पेछुः for अम्लानो । SK धृतिमान्राजन् SG, ST, SL धृतिमान्राज्ञः SA मतिमांछ्रीमान् । SA ॰नपगः for ॰नुगतः ।
*b* S. cl. reads:—ऋजुर्मृदुः सत्यवादी यः स राजसु सिध्यति । S. MSS सत्यवादी । ( *b* omitted in SG )

40 *a* S. cl. अन्येषु प्रेष्यमाणेषु पुरस्ताद्धीर उत्पतेत् । ( ST न च for धीर । )
*b* S. cl. करिष्याम्यहमित्येव यः स राजसु सिध्यति । ( ST तरिष्यामि । ST, SA[2] एवम् । ST राजानु॰ । )

41 omitted in S. cl.

लाभेन हर्षयेद्यस्तु न व्यथेद्योऽवमानतः ।
असंमूढस्तु यो नित्यं स राजवसतिं वसेत् ॥ ३३ ॥
राजानं राजपुत्रं वा संवर्णयति यः सदा ।
अमात्यः पण्डितो भूत्वा स चिरं तिष्ठति श्रिया ॥ ३४ ॥
प्रगृहीतश्च योऽमात्यो निगृहीतश्च कारणैः ।
न निर्बध्नाति राजानं लभते च श्रियं पुनः ॥ ३५ ॥
प्रत्यक्षं च परोक्षं च गुणवादी विचक्षणः ।
उपजीवी भवेद्राज्ञो विषये वापि यो वसेत् ॥ ३६ ॥
अमात्यो हि बलाद्भोक्तुं राजानं प्रार्थयेत्तु यः ।
न स तिष्ठेच्चिरं स्थाने गच्छेच्च प्राणसंशयम् ॥ ३७ ॥

33 *a* D लोभेन for लाभेन । L दर्शयेत् for हर्षयेत् । D यं for यः । Edns CDF GKMN अवमानितः for अवमानतः ।
*b* Edns CDGKMN च for तु । L व्रजेत् for वसेत् । FM read v. 44 after this v. AH omit the whole verse.
34 *a* D यो वर्धयितुमिच्छति । GK सवर्तयति M सवर्णयति for सवर्णयानि ।
*b* Edns CDFG तिष्ठते for तिष्ठति । Edns BCEG प्रियः D प्रिये L श्रिय FMN श्रियः for श्रिया । A omits this v.
35 *a* L नित्य for अमात्यः । Edn² G °स्त्वकारणैः DKL °श्चकारणात् for °श्चकारणैः ।
*b* Edns CDLK निर्वदति BLN निबध्नाति M निद्यति for निर्बध्नाति । F omits न निर्बध्नाति राजान । L लभेत for लभते । Edns CGKN सपद BEDLM प्रग्रह for च श्रियं । AH omit the whole verse.
36 *b* FM उपजीवे for उपजीवी । Edns योऽपि वा DKN चापि यो for वापि यो । Edns BCEG भवेद् for वसेत् । AH omit the whole verse.
37 *a* BEL अपि for हि । Edn² CGKL प्रार्थयेत N प्रार्थयेच for प्रार्थयेत्तु ।
*b* M सतिष्ठेत् । Edn² BCEG स्थान । FM सगच्छेत् for गच्छेच्च । K प्राण-सक्षय N प्राणसशयः । AH omit the whole verse.

---

33 *a* S. cl. reads:–नैव लाभाद्धर्षमियान्न व्यथेच्च विमानितः । (ST, SL °चावमानितः ।)
*b* S. cl. समः पूर्णतुलेवस्यात् ( SA¹ पूर्णे । ) S. cl. यो for स ।
34 omitted in S. cl.
35 omitted in S. cl.
36 omitted in S. cl.
37 omitted in S. cl.

यानं वस्त्रमलंकारं यच्चान्यत्संप्रयच्छति ।
तदेव धारयेन्नित्यमेवं राज्ञः प्रियो भवेत् ॥ ४५ ॥
संवत्सरमिमं तात तथाशीला बुभूषवः ।
अथ स्वविषयं प्राप्य यथाकामं चरिष्यथ ॥ ४६ ॥

युधिष्ठिर उवाच ।

अनुशिष्टाः स्म भद्रं ते नैतद्वक्तास्ति कश्चन ।
कुन्तीमृते मातरं च विदुरं च महामतिम् ॥ ४७ ॥
यदेवानन्तरं कार्यं तद्भवान्कर्तुमर्हति ।
तारणायास्य दुःखस्य प्रस्थानाय जयाय च ॥ ४८ ॥

45 *a* D अलंकारान् N अलंकारः for अलंकारम् ।
*b* A धारयन् for धारयेत् । Edns ACFGKMN नियतग: for राज्ञः प्रियः । H omits the whole verse.

46 *a* G इदं for इमम् । H तावदेवं° for तात तथा° । Edn[1] ताताः । AL यथाशीला। Edn[2] CGH बुभूषत A बभूवथ ।
*b* H ततः for अथ । N इम for स्व° । Edn[2] G करिष्यथ C तरि° L चरिष्यत ।

47 *a* H अनुज्ञातोसि for अनुशिष्टास्म । K एव for एतत् ।
*b* Edns CDGHKLN नः for च । Edns CDGHKLN वा for च (last).

48 *a* ABCDEHK वक्तुं for कर्तुं । FHL अर्हसि for अर्हति ।
*b* D विनाशाय for तारणाय । G वै for च ।

---

45 omitted in S. cl.

46 *a* SG, SA इदं for इम । S. cl. तावदेव° for तात तथा° । *SG, SL* बुभूषत SA[1] °तः SK °थः ST निवत्स्यथ ।
*b* S. cl. ततः for अथ । SA[1] तथा for यथा° । ST निवत्स्यथ। ( S. cl. begins a separate Adh. from here. )

47 *a* S. cl. °शिष्टोऽस्मि । SG न तत् ।
*b* SK, SG मातर नः । SA[1], SK, SG पितर for विदुर । SK यशस्विनम् for महामतिम् ।

48 *a* SK, ST, SA वक्तुम् for कर्तुम् ।
*b* SK, SG तु SL, SA सु° for ऽस्य । SK, SL, ST भवाय SA, SG अभयाय for जयाय ।

यो वै गृहेभ्यः प्रवसन्प्रियाणां नानुसंस्मरेत् ।
दुःखेन सुखमन्विच्छेत्स राजवसतिं वसेत् ॥ ४२ ॥

समवेषं न कुर्वीत नात्युच्चैः समितौ विशेत् ।
न मन्त्रं बहुधा कुर्यात्स राजवसतिं वसेत् ॥ ४३ ॥

न कर्मणि नियुक्तः सन्धनं किंचित्ततः स्पृशेत् ।
प्राप्नोति चाहरन्द्रव्यं बन्धनं वधमेव वा ॥ ४४ ॥

42 *a* F हि for वै । D नैव for नानु॰ ( सस्मरेत् ) । N प्रिय नैवानुसस्मरेत् ।
*b* A न चाभिमुख FK दु खेन दुःख for दु खेन सुख । BE अन्विन्छन् । A omits *a*, and CHLM omit the whole verse.

43 *a* BN सम वेष E सम वर्ष । Edns CGKN नोच्चै सन्निहितो । BEL सन्निधौ for समितौ । Edn[1] BEKN हसेत् Edn[2] CG वसेत् L भवेत् for विशेत् । D omits *a*, FM read this v. after our v 34. FM read *b* also after v 41. as:—न मत्र बहुधा कुर्यादेव राज्ञा प्रियो भवेत् । ( F राज्ञः ) । A omits the v
*b* DKLN मत्र न । L विविध for बहुधा । Edns BCDEGKLN एव राज्ञः प्रियो भवेत् । ( G प्राज्ञ । )

44 *a* BEGL कमाणि for कर्मणि । D नियुक्तस्य for नियुक्त. सन् । K द्रव्य for धन । Edn[2] CGKLN अपि Edn[1] BDE उप for तत ।
*b* Edns BCDEGKLN हि हरन् for चाहरन् । D शीघ्र for द्रव्य । Edns BCDEGKLN यदि वा वध A यदि वा धन M वधमेव च for वधमेव वा । H omits the whole verse

---

42 *a* SG प्रपतेत् for प्रवसन् । SK, SG, ST क्रियमाणमनुस्मरन् SL क्रियमाणमनुस्मरेत् SA[1] आत्मानमनुसस्मरन् SA[2] आत्मानमनुस॰ ।
*b* S. cl. यो for स ।

43 omitted in S cl (which reads *a* as –राजवेष च विस्पष्ट सेवमानो न वर्धते।)

44 *a* S. cl. नैषा कर्मसु सयुक्तो धन किंचिदुपस्पृशेत् । ( SA[1] सयत्तो । ST, SA अपि for उप॰ । )
*b* S. cl प्राप्नुयात् । SK, ST आददानो वा SG, SA, SL आददानो हि । SK, ST, SL बन्ध वा SA[1] दण्ड वा for बन्धन ।

इन्द्रसेनादयश्चेमान्यथोक्तान्प्राप्य यादवान् ।
रथानश्वांश्च रक्षन्तः सुखमूषुः सुसंवृताः ॥ ५३ ॥

इति विराटपर्वणि पाण्डवप्रवेशे धौम्यानुशासनं आनुयात्रिकं संप्रेषणं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## ॥ पञ्चमोऽध्यायः ॥

वैशम्पायन उवाच ।

ते वीरा बद्धनिस्त्रिंशास्ततायुधकलापिनः ।
बद्धगोधाङ्गुलित्राणाः कालिन्दीमभितो ययुः ॥ १ ॥
ततस्ते दक्षिणं तीरमन्वगच्छन्पदातयः ।
निवृत्ता वनवासाद्धि स्वराष्ट्रं प्रेप्सवस्तथा ॥ २ ॥

53 *a* Edns ACDGHKN एव BE अथ L अपि for इमान् । Edns BCEGH LN यथोक्ताः K यथोक्तं for यथोक्तान् ।
*b* L तु for च ।

*　　　*　　　*

V. 1 *a* L ततस्ते for ते वीराः । AFK बद्धनिस्त्रशा° । Edn² ACDFGHKLM तथा E ततो for तता° । Edn² ACGK बद्धकला° E युद्ध° ।
2 *b* Edn² CG निवृत्तवनवासा हि BEL निवृत्तवनवासास्ते । K विराटं for स्वराष्ट्रं । K प्रेप्सवः । Edns BCDEGHKLN तदा ।

---

53 *a* SK, ST इन्द्रसेनमुखाश्चैव यथोक्तं प्राप्य निर्वृताः ।
*b* ST सुसम्मताः for सुसंवृताः । whole v. omitted in SG, SA, SL. SK reads this v. as v. 14 of the next Adh.

*　　　*　　　*

V. 1 *a* S. cl. धनुर्धारा° for तताायुध° ।
*b* S. cl. अगच्छन्भीमधन्वानः काम्यकाद्यमुनां नदीम् । (SG काम्यकात् । ST यमुना° ।)
2 *a* S. cl. reads this l. after our v. 4. SK, SG, SL ते तस्या ST, SA कालिन्द्या° for ततस्ते । SG अनुगच्छन् ।
*b* omitted in S. cl.

वैशंपायन उवाच।

एवमुक्तस्ततो राज्ञा धौम्योऽथ द्विजसत्तमः।
अकरोद्विधिवत्सर्वं प्रस्थाने यद्विधीयते ॥ ४९ ॥
तेषां समिध्य तानग्नीन्मन्त्रवच्च जुहाव सः।
समृद्धिवृद्धिलाभाय पृथिवीविजयाय च ॥ ५० ॥
अग्नीन्प्रदक्षिणं कृत्वा ब्राह्मणांश्च तपोधनान्।
याज्ञसेनीं पुरस्कृत्य पाण्डवास्ते प्रवव्रजुः ॥ ५१ ॥
गतेषु तेषु वीरेषु धौम्योऽपि जपतां वरः।
अग्निहोत्राण्युपादाय पाञ्चालानभ्यगच्छत ॥ ५२ ॥

49 *a* B राजा for राज्ञा। BEH स धौम्यः D धौम्योसौ for धौम्योऽथ। L मुनिपुंगवः for द्विजसत्तमः।

50 *a* D सु L स for च। DL च for सः। H has–तेषां प्रतिष्ठमानानां मंत्रविद् ब्राह्मणोजपत्। ततः पावकमुज्वाल्य मत्रहव्यपुरस्कृतम्।

51 *a* DGHN अग्निं for अग्नीन्। Edns BCDELN प्रदक्षिणीकृत्य। A ब्राह्मणाः for ब्राह्मणान्। D स्वस्तिवाच्य च for च तपोधनान्।
*b* Edns BCEGHL पडेवाथ K पांडवाथ for पांडवास्ते।

52 *a* A धीरेषु G दूरेषु for वीरेषु। Edns CDGK अथ BE वि for अपि। BE KM जयतां H यजतां for जपतां।
*b* BE अग्निहोत्रान् for अग्निहोत्राणि। Edns GLN पंचालान् B पांचालीन् for पांचालान्।

---

49 omitted in S. cl.

50 S. cl. reads for this v:–वैशम्पायन उवाच। तेषां प्रतिष्ठमानानां धौम्यो मंत्रानथा जपत्। ( ST मत्रं त्वाथ° SA[1] मन्त्रांस्तदा° SA[2] मन्त्रांस्तथा°। ) सर्वविघ्नप्रशमनानर्थसिद्धिकरांस्तथा। ततः पावकमुज्वाल्य मन्त्रहव्यपुरस्कृतम्।

51 *a* S. cl. तेऽग्निम् for अग्नीन्। SG प्रदक्षिणीकृत्य SK, ST, SL, SA ब्राह्मणं च। S. cl. पुरोहितम्।
*b* S. cl. reads:–याज्ञसेनीं पुरस्कृत्य सर्व एव महारथाः। प्राद्रवन् सह धौम्येन बद्धशस्त्रा वनाद्वनम्।

52 omitted in S. cl.

व्यक्तं पुरो विराटस्य राजधानी भविष्यति ।
वसामेहापरां रात्रिं बलवान्मे परिश्रमः ॥ ७ ॥

युधिष्ठिर उवाच ।

धनंजय समुद्यम्य द्रौपदीं वह भारत ।
राजधान्यां निवत्स्यामो विमुक्ताश्च वनादितः ॥ ८ ॥

वैशंपायन उवाच ।

तामादायार्जुनस्तूर्णं द्रौपदीं गजराडिव ।
संप्राप्य नगराभ्यासमवतारयदर्जुनः ॥ ९ ॥
स राजधानीं संप्राप्य कौन्तेयोऽर्जुनमब्रवीत् ।
क्वायुधानि समाधाय प्रविशामः पुरं वयम् ॥ १० ॥

7 *a* Edns BCDEFGHKLMN दूरे for पुरो ।
*b* D वसामोद्य वै L वसामोद्यात्र वै for वसामेहापराम् ।

8 *a* BE समुद्दिश्य । Edns BCEGHKLN पाञ्चालीम् ।
*b* L राजधानीं प्रवेश्यामो । BDEL स्म for च । H विप्रमुक्ताः for विमुक्ताश्च ।

9 *b* CGH नगराभ्याश । DEFM अवतारयत N अवातारयत् ।

10 *b* Edns ACDFGHKLMN समासज्य for समाधाय । Edns BCEGHKN प्रवेक्ष्यामः F प्रविष्याम L प्रवेश्यामः । K वय पुर ।

---

7 *a* S. cl. दूरे for पुरो । ST[2] नगर मत्तषभ for राजधानी भविष्यति ।
*b* SA, SL परां for अपराम् ।

8 *a* omitted in S. cl.
*b* SK प्रमुक्तमिव नो वन SG मुक्तमिव नो वन ST मुख्यकर्मिव नो वन SA, SL सुमुक्तमिव नो वन for विमुक्ता &c.

9 *a* line omitted in SK. S. MSS पार्थः for तूर्णम् । SG, ST, SA हस्तिराट् ।
*b* S. cl. except SA[2] आनीय SA[2] आगम्य for संप्राप्य । S. cl. °भ्याशम् । SK, SG अवतारयत् । SA अन्युनः for अर्जुनः । End of Adh. in S. cl.

10 *a* S. cl. पार्थिवः for कौन्तेयः ।
*b* S. cl. reads for this—इमानि पुरुष्व्याघ्र आयुधानि परंतप ।
कस्मिन्न्यासमिवन्यानि गुप्तिर्भवेत् कथ भवेत् ॥
( SA[1] परंतपः । ST नेत्रा for पुरुष । )

वसन्तो गिरिदुर्गेषु वनदुर्गेषु धन्विनः ।
विध्यन्तो मृगजातानि महेष्वासा महाबलाः ॥ ३ ॥
उत्तरेण दशार्णांस्ते पाञ्चालान्दक्षिणेन च ।
अन्तरेण यकृल्लोमान् शूरसेनांश्च पाण्डवाः ॥ ४ ॥
लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन्वनात् ।
धन्विनो बद्धनिस्त्रिंशा विवर्णाः श्मश्रुधारिणः ॥ ५ ॥
ततो जनपदं प्राप्य कृष्णा राजानमब्रवीत् ।
पश्यैकपद्यो दृश्यन्ते क्षेत्राणि विविधानि च ॥ ६ ॥

3 *a* L interchanges वन° and गिरि° । K धन्विन कवचान्विता D वनेषु च महाबला for वन° &c
*b* AD जातीनि K यूथानि for जातानि । D ययुस्तदा for महाबला ।

4 *a* FM दशार्णा । Edns ACDFGHKLM ते BE तु for वै । Edns N पञ्चालान् LM पाञ्चाला । A दक्षिणेव । KN तु for च ।
*b* M उत्तरेण । AI LM बृहल्लो° DHN सरुल्लो° K तु मत्स्याना for यकृल्लो° । K पञ्चरान् for च पाण्डवा ।

5 *a* A लुब्धान् BDE ऋद्धि I[2] गुणान् K लब्धु for लुब्धा । K प्रसाद for ब्रुवाणा । MN विषयान् । H प्रविशन् । D तथा for वनात् ।
*b* EKL स्मश्र° ।

---

3 *a* SK, SG ST, SA[2] वसाना for वसन्तो । S cl वनदुर्गेषु रमणीयेषु for गिरि° &c ।
*b* ST वाक्षन for विध्यन्त । SK, SG, SA मृगजातानि ST, SL मृगजालानि ।

4 *a* S cl दशार्णाना । तु for च ।
*b* SK, SG यकृल्लोम्न ST च साल्वाना SA, SL यकृल्लोम्नां । this v comes in S cl after v 1

5 *a* SK, ST लुब्धान् SG, SA, SL वेद for लुब्धा । SA ब्रुवाण । S cl तदा for वनात् ।
*b* ST विवण । line omitted in others

6 *b* ST, SA, SL add द्रौपद्युवाच before *b* SA[1] वश्यैकपल्य SA[2] वश्यैकपद्य । SK क्षेत्रेगोष्ठ समाश्रिता ST, SA[2], SL क्षत्रगोष्ठसमावृता SG क्षत्रागोष्ठसमावृत SA[1] क्षत्रगोष्ठसमावृते for क्षत्राणि &c

उत्पथे हि वने जाता मृगव्यालनिषेविते ।
समीपे हि श्मशानस्य गहनस्य विशेषतः ॥ १५ ॥
समासज्यायुधान्यस्यां गच्छामो नगरं प्रति ।
एवमत्र यथाजोषं विहरिष्याम भारत ॥ १६ ॥

वैशंपायन उवाच ।

एवमुक्त्वा स राजानं धर्मात्मानं युधिष्ठिरम् ।
प्रचक्रमे निधानाय शस्त्राणां भरतर्षभ ॥ १७ ॥
येन देवान्मनुष्यांश्च सर्पानेकरथोऽजयत् ।
स्फीताञ्जनपदांश्चान्यानजयत्पाण्डुनन्दनः ॥ १८ ॥

15 *b* Edns CKLN च G वा H अत्र D तु for हि । BE समीपतः for विशेषतः । K दृश्यते महती शमी for गहनस्य &c ।

16 *a* Edns CG समाधायायुधं शम्याम् । D गच्छाम । N वय for प्रति ।
*b* L यत्र for अत्र । Edns CDGHMN यथायोग ABEL यथालोक्य । BE पार्थिव for भारत । G विहरिष्यामहे वयम् ।

17 *a* BE स before एवमुक्त्वा । Edns C धर्मराजम् ।
*b* HL भरतर्षभः ।

18 *a* all MSS except A add च after सर्पान् ।
*b* Edns CGHK कुरुपुङ्गवः BELN कुरुनन्दनः ।

---

15 *a* S. cl reads this l after v 13 S cl. उत्पथे चापि जातेयम् । SK मनुष्यैर्ननिषेव्यते SG अमनुष्यनिषेविता ST, SL अमनुष्यनिषेविते SA निर्जने गहने वने ।
*b* SK च ST अपि for हि । SK गृह नाम्य for गहनस्य । l. omitted in SG, SA, SL

16 *a* SK गच्छामो । SK त्वत्र for प्रति । S. MSS omit this. SK has a similar line again after a few vs more ( vide App ), this line being found also in S. MSS..—शम्यामायुधमासज्य गच्छाम नगरं वयम् । ( SA[1] गच्छेम SL गच्छाम । )
*b* omitted in SK, SG, ST विहराम यथासुख SA[2] विहरेम, SL विहरामो &c.

17 *a* SA, SL omit वैश° । S cl धनंजयः for युधिष्ठिरम् ( SA[1] धनंजयं ) ।
*b* ST भारतर्षभः ।

18 *a* S cl adds between मनुष्यांश्च and सर्पांश्च:–पिशाचोरगराक्षसान् । पिशाच-यक्षगन्धर्वान् दैत्यांश्च परंतपः । कालकेयांश्च दुर्धर्षान् । S cl. सर्वाश्चैकरथो ।
*b* SG omits च । S cl कुरुनन्दनः for पाण्डुनन्दनः ।

सायुधाश्च वयं तात प्रवेक्ष्यामः पुरं यदि ।
समुद्वेगं जनस्यास्य करिष्यामो न संशयः ॥ ११ ॥
ततो द्वादशवर्षाणि वनवासो हि नः पुनः ।
एकस्मिन्नपि विज्ञाते प्रतिज्ञातं हि नस्तथा ॥ १२ ॥

अर्जुन उवाच ।

इयं कूटे मनुष्येन्द्र गहने महती शमी ।
भीमशाखा दुरारोहा श्मशानस्य समीपतः ॥ १३ ॥
न चापि विद्यते कश्चिन्मनुष्य इह पार्थिव ।
योऽस्मान्निदधतो दृष्ट्वा हरेच्छस्त्राणि पाण्डव ॥ १४ ॥

11 *a* Edns BCEGKLN interchange वय तात and प्रवेक्ष्यामः । K प्रविक्ष्यामः L प्रवेश्यामः ।
*b* BEL पुरस्य for जनस्य । L सशयम् ।
12 *a* Edns BCEGLN प्रेवष्टव्यं H प्रवेष्टव्यानि K वस्तव्यानि for वनवासो । Edns CGKN वनं BEL वन DH पुनः for हि नः ।
*b* L परिज्ञातो M प्रतिज्ञाते । H च for हि । K तदा for तथा । line omitted in BE.
13 *a* Edns ABCDEGL गहना । L वर्तते for महती ।
*b* K वरारोहा । H स्मशान° ।
14 *a* H अत्र for अपि । Edns BEGHKLN इति मे मतिः for इह पार्थिव । C इव for इह ।
*b* Edn[1] विदधतो । Edns BCEGHKN द्रष्टा for दृष्ट्वा । Edns BCEGHKN भवेत् for हरेत् । BEL अस्त्राणि । FM पार्थिव Edns CG पाण्डवाः ।

---

11 *a* S. cl. हि for च ।
12 *a* S. cl. interchanges *a* and *b*. S. cl. भूयः for ततः। S.cl. except SA प्रविशेम वनं वयम् SA प्रविशेम वय वनम् for वनवासो &c.
*b* SA[1] इव for अपि । SA[2] एतस्मिन् । SK, ST, SL समयं मो व्यतीत्य च SG, SA समय न व्यतीत्य च for प्रतिज्ञातं &c
13 *a* SK, SG, SA omit अर्जुन उवाच । S. cl. वने for कूटे । SK, SG, SL, SA महतीदृश्यतेशमी ST दृश्यते महतीशमी ।
*b* SA[1] वरारोहा ।
14 *a* S. cl. न चास्यां चारयिष्यन्ति मनुष्याः पार्थ केचन । ( SG, SL संचरिष्यंति SA[2] च चरिष्यन्ति । ) this comes in S. cl after v. 16 *a*.
*b* omitted in S cl

अजयत्पश्चिमामाशां धनुषा येन पाण्डवः ।
माद्रीपुत्रो महाबाहुस्ताम्रास्यो मितभाषितः ॥ २४ ॥
तस्मान्मौर्वीमपाकर्षच्छूरः संक्रन्दनो युधि ।
कुले नास्ति समो रूपे नकुलस्तेन स स्मृतः ॥ २५ ॥
दक्षिणां दक्षिणाचारो दिशं येनाजयत्प्रभुः ।
अपज्यमकरोद्वीरः सहदेवस्तथायुधम् ॥ २६ ॥
खड्गान्सुपीतांस्तीक्ष्णाग्रान्कलापांश्च महाधनान् ।
विपाठान्क्षुरधारांश्च धनुर्भिर्निदधुः सह ॥ २७ ॥

24 *b* KM ताम्राक्षः । Edns ABDEGHL मितभाषिना K मृदुभाषिता MN मित भाषणः ।

25 *a* Edns BCEGHKLN तस्य for तस्मात् । F मूर्वी M मुर्वी । H अपाकर्षः I अपाकार्षीत् ।

*b* Edns BCEGHKLN यस्येति नकुलः स्मृतः for नकुल &c. DM सं° for स

26 *b* Edns BCDEFGHKN तदा for तथा ।

27 *a* Edns BCEGLN च for सु° । H दीर्घांश्च दीप्तांश्च K दीर्घान्दीप्तांश्च for सुपीता &c. । Edns CG दीप्तान् for पीतान् । Edns ABCDEFGLN दीर्घांश्च for तीक्ष्णाग्रान् ।

*b* A विपाठान् H विपर्वान् for विपाठान् । AE क्षर° for क्षुर । G निदधेसह ।

---

24 *a* SK adds वैशम्पायन उवाच before this.

*b* SK मितभाषिता । SG, ST omit the whole verse, & SA, *b* only.

25 *a* SK तस्य for तस्मात् ।

*b* SK यस्येति नकुलः स्मृतः S. MSS. omit the whole v.

26 *a* SK, SA[1] दक्षिणाम् ।

*b* SK तदा for तथा । SA[1] अमज्य for अपज्यम् । स्वं for तथा । SA[2] reads this v.:–अजयत् दक्षिणामाशां धनुषा येन पांडवः । तत्संसपित्वा ज्याघातं निघातुं धनुराहरत् ॥ SG, ST omit this v. altogether.

From v. 27 ff. S. cl. presents a different account of the placing of arms, for which see the appendix.

27 *a b* S. cl.:–दीप्तान् मह्रांश्च सुदृढान् सुनीक्ष्णान् कनकासहन । विविधान् क्षुरनाराचान्निशितांश्च शरानपि । आयुधानि च गताणि गदाः निदधुःसह ॥ (*a*–SA adds युधिष्ठिर उवाच before this. SG दीप्तांश्च महान् ST, SA, SL दीर्घांश्च महान् । SG, ST, SA[2], SL विविधान् SA[1] विमलान् for सुतीक्ष्णान् । *b*–SA[1] नाराचांश्च for निशितांश्च । c-SG, ST, SA[2], SL विधुरास्तथा SA[1] गदांश्च विधुरास्तथा for निदधु &c. )

तदुदारं महाघोरं सपत्नगणसूदनम् ।
अपज्यमकरोत्पार्थः गाण्डीवमभयंकरम् ॥ १९ ॥
येन वीरः कुरुक्षेत्रमभ्यरक्षत्परंतपः ।
अमुञ्चद्धनुषस्तस्य ज्यामक्षय्यां युधिष्ठिरः ॥ २० ॥
पाञ्चालान्येन संग्रामे भीमसेनोऽजयत्प्रभुः ।
प्रत्यषेधद्बहूनेकः सपत्नांश्चैव दिग्जये ॥ २१ ॥
निशम्य यस्य विस्फारमव्यथन्त रणे परे ।
पर्वतस्येव दीर्णस्य विस्फोटमशनेरिव ॥ २२ ॥
सैन्धवं येन राजानं पर्यामृषत चानघः ।
ज्यापाशं धनुषस्तस्य भीमसेनोऽवतारयत् ॥ २३ ॥

19 *a* Edns CGH महाघोपम् । Edn[2] CG सपत्नबल⁰ for सपत्नगण⁰ । A जन⁰ for गण⁰ ।
*b* N तत्र for पार्थः । Edns GN शुभय⁰ M सभय⁰ ।
20 *a* F कुरून्क्षेत्र H विनिर्जित्य for कुरुक्षेत्रम् । H परपक्षान् for अभ्यरक्षत् ।
*b* H अमुंचन् । AD अक्षज्या ।
21 *a* FMN पश्चालान् ।
*b* M ⁰बह्नेकः । D सपत्नोंघान्हि G सपत्नानेव ।
22 *a* L निशाम्य । Edns ABCEGHM व्यद्रवन्त F व्यद्रवन्ति KLN विद्रवन्ति for अव्यथत । Edns C रणात् । L परे रणे ।
23 *a* K चैव for येन। Edn[2] CG ⁰मृषितवानघ । B ⁰वानध for ⁰चानघः । HM पर्यामृशत K पर्यमर्षत L परामृषत । DEFM अनघ L अनघम् । D विजिग्ये शतधानघ *for* पर्या &c.

---

19 *a* SA[1], SG तमुद्यम SK, ST, SL, SA[2] तदुद्यम । SG, SA[1] महाघोरम् ।
*b* S. MSS असज्यम् for अपज्यम् । SK च भयकरम् ST धनुरुत्तमम् for अभयंकरम् ।
20 *b* S. cl. धनूरत्न महातेजा जृंभयामास पाण्डवः ।
21 *a* SK पुरा for प्रभुः ।
*b* SK, SA, ST, SL सपत्नांश्चापि SG संपन्नान् चापि for सपत्नांश्चैव । SA[2] दिग्जयी SL निर्जये ।
22 *a* S. cl. विस्फार । S. cl. विद्रवन्ति for अव्यथत ।
23 *a* S. cl. जित्वा युद्धः परामृशत् ( SG परानयत् ) for पर्या &c.

कुलधर्मोऽयमस्माकं पूर्वैराचरितोऽपि च ।
समासजाना वृक्षेस्मिन्निति वै व्याहरन्ति ते ॥ ३२ ॥
आगोपालाविपालेभ्य आचक्षेयुः परंतपाः ।
आजग्मुर्नगराभ्याशं पार्थाः शत्रुनिबर्हणाः ॥ ३३ ॥
जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
इति गुह्यानि नामानि तेषां चक्रे युधिष्ठिरः ॥ ३४ ॥
ततो यथाप्रतिज्ञाभिर्नगरं प्राविशन्महत् ।
अज्ञातचर्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ॥ ३५ ॥

इति विराटपर्वणि पाण्डवप्रवेशे आयुधनिक्षेपो नाम
पञ्चमोऽध्यायः ॥ ५ ॥

---

32 *a* Edns CGK वा for च ।
*b* Edns BCEGKLN समासज्ज्यायं H समासृजाना for समासजाना । D समासज्यायुधानीत्यन्योन्यं व्याहर° ।

33 *a* Edns CHKN आचक्षाणाः BE आचम्यन्तः D आचक्षन्तः G आचक्षुस्ते L ह्याचक्षाणाः for आचक्षेयुः । Edn[1] परंतप H परं तथा ।
*b* Edn[1] DN नगराभ्यासम् ।

34 *b* N नामानि गुह्यानि । all MSS except N चक्रे तेषाम् । BDE read this and the following v. after the दुर्गास्तोत्र–vide App

35 *a* BEN प्रतिज्ञातं । Edns BEGHKLN प्राविशन्नगरम् । N तानि for महत् ।
*b* G अज्ञातवास । L त्रयोदशे ।

---

32 *a* SG, SA[1] आचरितं । S. cl. पुरा for अपि च ।
*b* omitted in S. cl.

33 *a* S. cl. reads this v. before v. 31 *b*. SA श्रावयतः पुनः पुनः for आचक्षेयुः &c. SK, SG, ST कर्षकेभ्यः SL काकेभ्यश्च for आचक्षेयुः । SK परतप ।
*b* SK दर्शयन्तः । SG, ST, SL श्रावयन्तः पुनः पुनः for पार्थाः &c. SA omits $a^2$ and $b^1$ and reads श्रावयन्तः &c. after °विपालेभ्यः ।

34 *a* S. cl. except ST जयेशो for जयन्तो ।
*b* SK, SG, ST अतश्छद्मानि SA, SL अथ छद्मानि for इति गुह्यानि । S. cl. धकारेषाम् for तेषां चक्रे । S. cl. interchanges *a* and *b*.

35 *a* S. cl. reads this v. before v. 31. SK repeats it at the end of this Adh. also. S. cl except SA[1] समाज्ञम SA[1] समज्ञं for प्रतिज्ञाभिः । SK, SA, ST महत् for तदा । SG प्राविशन्नगरन्नगरं तथा । SL तदा for महत् ।
*b* S. cl. धनिनु for वत्स्यन्तो । S. cl वर्षं राष्ट्रे ।

तामुपारुह्य नकुलो धनूंष्यभ्यादधत्स्वयम् ।
यानि तस्या वकाशानि दृश्यरूपाण्यमन्यत ॥ २८ ॥
यत्र चापस्य तस्यैव तिरोवर्षति वासवः ।
तत्र तानि दृढैः पाशैः सुगाढं पर्यबन्धत ॥ २९ ॥
शरीरं मृतकस्यैकं समादाय न्यबन्धत ।
वर्जयिष्यन्ति हि नरा दूरादेव हि तां शमीम् ॥ ३० ॥
आबद्धं शवमत्रेति गन्धमाघ्राय पूतिकम् ।
अशीतिशतवर्षेयं माता न इति वादिनः ॥ ३१ ॥

28 *a* Edns CDKN निदधे BEHL अवदधे G विदधत् for अभ्यादधत् ।
*b* D यस्य for तस्य । Edns C दिव्य° BDEGHN दृष्ट° K इष्ट° L दृष्ट° for दृश्य° ।

29 *a* D तत्र for यत्र । Edns ACFGMN चापश्यत स वै D चापश्यतः सर्वे H चोपश्यतः सर्वे K चापश्यत सर्वे L वा पश्यति स वै for चापस्य तस्यैव । Edns ABEGHKL तिरोवर्षाणि वर्षति C तिरोवर्षाणि भारत FM शरोवर्षाणि वर्षति N तिरोवर्षेण वर्षति ।
*b* F नाति° for तानि । DH पर्यबन्धयत् । H सुगाढैः ।

30 *a* Edns ABDEGKN च मृतस्य C च मृत च for मृतकस्य । Edns CDGH-N समबन्धन्त पाण्डवाः BE समबन्धन्त पाण्डवाः K समबन्धत पाण्डवः L समबन्धत बान्धवः । M निबन्धयत् ।
*b* Edns BCDEGHKLMN विवर्जयिष्यन्ति नराः । Edns B and add CD-EG and add HKLMN शमीमिमाम् ।

31 *a* D आबद्धशवमन्वेति ।

---

28 *a*, *b* omitted in S. cl.

29 *a* SK चापश्यत स वै । SK वर्षति for वासवः ।
*b* SK पर्यमन्धत । S. MSS omit this v.

30 *a* omitted in S cl
*b* S cl. दूरात्परिहरिष्यन्ति सशवेय शमी इति । ( SA[1] परिमविष्यंति ससत्वेयं । ST शवब्धां । ST शमीनि वै SG शमीनि हि SL शमीति ह । )

31 *a* omitted in S cl.
*b* SA[1] शर° for शत° । SA अस्मास्मिहेति च SK, ST, SG, SL अस्माकमिहेतिके for न इति वादिनः । S cl reads this line after v. 33,

तमापतन्तं प्रसमीक्ष्य पाण्डवम् ।
विराटराडिन्दुमिवाभ्रसंवृतम् ॥
सभागतं पूर्णशशिप्रभाननम् ।
सहानुचारैरचिरेण दृष्टवान् ॥ ४ ॥
स च द्विजान्सूतमुखांस्तथा विशः ।
ये चानुगास्तत्परिषत्सु ते स्थिताः ॥
पप्रच्छ को वः प्रसभं समेयिवान् ।
नरो हि यो वै प्रसमीक्षते सभाम् ॥ ५ ॥
न च द्विजोऽयं भविता नरोत्तमः ।
पतिः पृथिव्या इति मे मनोगतम् ॥
न चास्य दासा न रथो न कुण्डले ।
समीपतो भ्राजति चायमिन्द्रवत् ॥ ६ ॥

4 *c* Edn[2] ABCEGN समागत D सभाप्रतः K सभागतः for सभागतं । D प्रभाननः K प्रभावः for प्रभानन ।
*d* Edns CGM महानुभाव for सहानुचारैः । Edns CGM न चिरेण for अचिरेण ।

5 *a* Edns CG मनिद्विजान् D सत्वद्विजान् BEHKLN स तु द्विजान् । Edns BEGHKLN विशस्तथा ।
*b* Edns BCDEGHKLN ये चापि केचित् A ये चानुगास्त । Edns ABDE GHKLN परितः समासते C परतः° ।
*c* Edns ABCDEGHKN अथ for व. । Edns ABCDEFGHLMN प्रथम for प्रसभ । Edns BE समीयिवान् ।
*d* Edns CGN नृपोपमोयं A नरो हि योय BE इहागतोय D कुतोयमायाति FM नरो हि येषां H दूरेण नायं K नृपापमो यः । Edns BEGM समवेक्षते D च वीक्ष्यते C समवेक्ष्यते L प्रसमीक्ष्यते ।

6 *a* Edns BCDEGHKLN तु FM नु for च H द्विजोत्तमः for नरोत्तमः ।
*c* Edns BCEGL दासो KN वाजी for दासाः । Edns GKN कुञ्जरः H यानं for कुण्डले । *d* G इन्दुवत् for इन्द्रवत् ।

---

4 *a* SK, ST, SG, SA[2] समायजन्त SA[1] समायजन्त । SK, ST, SG, SA omit *b*, *c*, *d*.

5 S. cl. omits this verse.

6 S. cl. omits this verse.

## ॥ षष्ठोऽध्यायः ॥

वैशंपायन उवाच ।

ततो विराटं प्रथमं युधिष्ठिरः ।
राजा सभायामुपविष्टमाव्रजत् ॥
वैडूर्यनद्धान्प्रतिमुच्य काञ्चनान् ।
अक्षान्स कक्षे परिगृह्य वाससा ॥
नराधिपो राष्ट्रपतिं यशस्विनम् ।
महायशाः कौरववंशवर्धनः ॥
महानुभावो नरराजसत्कृतः ।
दुरासदस्तीक्ष्णविषो यथोरगः ॥ २ ॥
परेण रूपेण नरर्षभो महान् ।
तथाश्विरूपेण यथामरस्तथा ॥
महाभ्रजालैरिव संवृतो रविः ।
यथानलो भस्मवृतश्च वीर्यवान् ॥ ३ ॥

1 *c* Edns BCEGHKLN वैडूर्यरूपान् । ADH प्रविमुच्य । KN प्रतिगृह्य ।
*d* F कक्ष्ये D परिधाय K परिरभ्य । BEF वाससि AD वाससी ।

2 *a* D राष्ट्रपतिः । A यशस्विनम् । *d* AD उरगः E महोरगः ।

3 *a* Edns BCEGHMN बलेन D स तेन for परेण । D युवा for महान् ।
*b* AFHM गन्धर्वरूपेण Edns CG अपूर्वरूपेण BE नरस्वरूपेण H अश्वरूपेण K अथ स्वरूपेण L मनुष्यरूपेण । D उपावृतः कंचुकवान्यथोरगः for गन्धर्वरूपेण &c. H यथा नरः ।
*d* H भस्मभृतः for भस्मवृतः ।

---

1 *b* S. cl :–ददर्शदूरात्सुसमृद्धतेजसं ( ST स समय तेजस ) S. cl. interchanges *a*, *b* and *c*, *d*.
*c* SK नियद्धवैडूर्यसितान्स SL, ST निषध्यवैडूर्यचितान्स SG निषद्धवैडूर्यचितान् स SA[1] निषध्यवैडूर्य सितान्स । SA[2] वैडूर्यचित्रान्सुगुणान् मृगासितान् ।
*d* SK, ST, SG नृपस्तथा ( SL, SG, SA[1] तदा ) क्षाम् । S. cl. परिवेष्य वाससा ( SA[1] परिवेष्य । SK वाससः । )

2 S. cl. omits *a b c*.
*d* S. cl. दुरासदं तीक्ष्णविष यथोरगम् ।

3 SL, SK, SG ST, SA[2] omit this verse.
*a* SA[1] अनेन for परेण । SA[1] वृतो for महान् ।
*b* SA[1] द्विजाति for गन्धर्व । SA[1] महोदधः for अमरस्तथा ।

कामेन ताताभिवदाम्यहं त्वाम् ।
कस्यासि राज्ञो विषयादिहागतः ॥
गोत्रं च नामापि च शंस तत्वतः ।
किंचापि शिल्पं तव विद्यते कृतम् ॥ १० ॥

युधिष्ठिर उवाच ।

युधिष्ठिरस्यासमहं सखा पुरा ।
वैयाघ्रपद्यः प्रवरोऽस्मि वाडवः ॥
अक्षान्प्रवप्तुं कुशलोऽस्मि देवने ।
कङ्केति नाम्नास्मि विराट विश्रुतः ॥ ११ ॥

10 *a* A मीत्या for तात । ADKL add विराट उवाच before this
*b* E कस्यास्य ।
*c* DL नाम्ना सह for नामापि च ।
*d* CK वा for च । DFL शल्य for शिल्प ।
L कङ्क for युधिष्ठिर ।

11 *a* D युधिष्ठिरस्यास्मि सखा मतीतः । Edns BCEHKLN पुरा सखा ।
*b* BE वैयाघ्रपादः । Edns ABCDFGHKLM पुनरस्मि for प्रवरोऽस्मि । Edns C विप्रः ABDEGM ब्राह्मणः H सत्कृतः K गोत्रगः L गोत्रतः N वै द्विजः for वाडवः ।
*c* Edns BCEGHLMN प्रयोक्तुं for प्रवप्तुं । Edn[2] देविनां । Edn[1] BCEF GKN देविता M देव for देवने ।
*d* H अथ for अस्मि ।

---

10 S. cl. omits *a*, reads *b* (after विसृजामि ते पुरम् in app.) and for *c*, *d* श्रुतं च शील च कुलं च शंस मे गोत्र तथा नाम च देशमेव ते । (in app.) SG, ST, SL, SA च for ते SA[2] च ते for तथा । SA[1] गोत्र च देश च समाप्य विप्र for गोत्र &c.

11 *a* SL, SK, ST, SG अपि समाभवं पुरा SA अस्मि समाभवं पुरा ।
*b* ST वैयाघ्रपद SA वैयाघ्रपद्यः । SL, SK, SA, ST अस्मि नरेन्द्र गोत्रतः (तः SA[2]) SG अस्म्यमरेन्द्र गोत्रतः for प्रवरोऽस्मि वाडवः ।
*c* SK, SL, SA[2] निवप्तुं ST विधातुं SG विहर्तुं । SA[1] अक्षानिवाप्तु । SK, ST कुशलोऽस्म्यहं सदा SG कुशलोऽहं सदा ।
*d* omitted in S. cl.

शरीरलिङ्गैरुपसूचितो ह्ययम् ।
मूर्द्धाभिषिक्तो मम चेतसि स्थितम् ॥
समीपमायाति च मे गतव्यथम् ।
यथा महीं तामरसीं महागजः ॥ ७ ॥

वितर्कयामास च तं नरर्षभः ।
युधिष्ठिरोऽभ्येत्य विराटमब्रवीत् ॥
सम्राड्विजानीहि हि जीवितार्थिनम् ।
विनष्टसर्वस्वमुपागतं द्विजम् ॥ ८ ॥
इहाहमिच्छामि तवानघान्तिके ।
वस्तुं यथा कामचरस्तथा विभो ॥
तमब्रवीत्स्वागतमित्यनन्तरम् ।
राजा प्रहृष्टः प्रतिसंग्रहेण च ॥ ९ ॥

7 *a* D वपुस्वरूपेण च सूचितः । BE °रिव सूचितः C रपि सूचितः ।
*b* Edn² CG इति Edn¹ HKN त्विति L ह्यति for मम । BE मूर्द्धाभिषिक्तोयमितीव मानसं Edns मे मनोगतं CGHKLN मेत्र मानसं for चेतसि स्थितम् ।
D स्थितः for स्थितम् ।
*c* Edns BCDEGHKLN गतव्यथः for गतव्यथम् ।
*d* Edns BCEGKHLN गजः AD महान् for महीम् । Edns BCEGHK LN मदोत्कटः for महागजः ।

8 *a* Edns BCEGHKLN वितर्कयंतं ( D वितर्कयानं ) तु ( BEL स ) नरर्षभस्तथा ( K नरर्षभं N तथा नरर्षभं BCDEL °स्तदा ) ।
*c* D भवान् M साम्राट् for सम्राट् । Edns ABDEKLN विजानात्विह F विजानामिह H द्विजानात्विह M द्विजानामिह for विजानीहि हि । Edns GHLK MN जीवनार्थिनं ।

9 *a* K तवानश्च for तवानघान्तिके । BE °अन्तिकं ।
*b* A तवामि भो for तथा विभो । D °विभोः FM अभिते H प्रभो for विभो ।
*d* H अपि हृष्टः for प्रहृष्टः । Edns ABCDFGHKMN प्रतिसंगृह्यण E प्रतिसंग्रहण । L प्रहृष्टरूपो जगृहे तथागतं । CG omit च ।

---

7 S. cl. omits this verse.
8 S. cl. omits this verse.
9 S. cl. omits this verse.

विराट उवाच ।

हन्यामवध्यं यदि तेऽप्रियं चरेत् ।
विवासयेयं विषयाद्विजांस्तथा ॥
शृण्वन्तु मे जानपदाः सभागताः ।
कङ्को यथाहं विषये प्रभुस्तथा ॥ १४ ॥

समानजातोऽसि भवांश्च मे सखा ।
प्रभूतवस्त्रो बहुपानभोजनः ॥
पश्येस्त्वमन्तश्च बहिश्च सर्वदा ।
कृतं मया द्वारमपावृतं यतः ॥ १५ ॥

14 *a* Edns BCEG अवश्य for अवध्यं ।
*b* Edns BEGKLN प्रवाजयेयं C प्रवाजयेय H प्रवासयेयं for विवासयेयं । DK द्विजं H द्विपः for द्विजान् ।
*c* Edns BCEFGHKLM समागताः AN समागता for सभागताः । H पौर॰ जनाः for जानपदाः । D न तेन कार्यं तव योप्रियं चरेत् ।
*d* L तथा प्रभुः । D यथाहमेव विषये प्रभुर्भवान् ।

15 *a* Edns CG यानः for जातः । FM अस्मि for असि । Edns BCEGHKL N भवितासि for असि भवांश्च । D परःप्रियः for भवांश्च मे ।
*b* BE भोजन for भोजनः ।
*c* CHL पश्ये D पश्य M पश्यः for पश्येः । K सपश्य मे for पश्येस्त्वम् ।
*d* Edns BCEGHKN च ते L चरे for मया । N अपाकृतं for अपावृतम् । Edns BCEGHKLN मया D तव for यतः ।

---

14 *a*, *b* S. cl. ममान्तिके यश्च तवाप्रियचरेत्तमासमे तं परिचिन्त्य मानवम् । ( SG तवा-प्रियो वसेत् SL यस्तु for यश्च । SG, SL, SI, SA मरिचिन्त्य ) SA[1] प्रवासयेयम् ।

15 S. cl. omits this verse.

विराट उवाच ।

दद्रामि ते हन्त वरं यमिच्छसि ।
प्रशाधि मत्स्यान्वशगोऽस्मि ते द्विज ॥

प्रिया हि धूर्ता मम देविनः सदा ।
भवांश्च देवोपमराज्यमर्हति ॥ १२ ॥

युधिष्ठिर उवाच ।

आप्तो विवादः परमो विशांपते ।
न विद्यते किंचन मत्स्य हीनतः ॥
न मे जितः कश्चन धारयेद्धनम् ।
वरो ममैषोऽस्तु तव प्रसादजः ॥ १३ ॥

12 *a* Edn[1] N दद्रानि । HK (अ)ह तु for हन्त । CN यत् for यम् ।
*b* L गम्यान् for मत्स्यान् ।Edns CDGHKLN वशगोह्यहं तव । AM द्विजः for द्विज । BE वशगोस्म्यहं तव ।
*c* Edns C च for हि । L पूर्तान् M द्यूता for धूर्ता ।
*d* F अर्हसि ।

13 *a* Edns GHK[2]L प्राप्तः for आप्तः । H विवादं L विराटः for विवादः । Edns ACDFGHKLMN प्रथमं for परमः ।
*b* Edns CG कचन D किंतु न H किं नव for किंचन । C हीनः for हीनतः । H[2] हीनवर्ण इति पाठः ।
c AL जित्तं for जितः ।
*d* H अपि for एषः । BEHMN प्रसादनः ।

---

12 *a* ST दद्रामि तेऽह वरमन्यदीप्सितं । SK, SA, SG, SL यदीप्सितं for यमिच्छसि ।
*b* S. cl. यदि मन्यते ( SG मन्यसे ) भवान् for वशगोऽस्मि ते द्विज ।
*c* SA[2] यथाहि । S. cl. ध्याक्षकोविदाः for देविनस्सदा ।
*d* SK, SG, ST, SL, SA[1] त्व चापि SA[2] स्वं चापि for भवांश्च । SK देवो मम । S. cl. except SA[1] अर्हसि ।

13 *c* S. cl. जित । S. cl. कचन । SL, SK, SA[2], SG, ST धारये SA[1] कारये for धारयेत् । *b* and *d* are omitted in S cl.

विराट उवाच ।

हन्यामवध्यं यदि तेऽप्रियं चरेत् ।
विवासयेयं विषयाद्द्विजांस्तथा ॥
शृण्वन्तु मे जानपदाः सभागताः ।
कङ्को यथाहं विषये प्रभुस्तथा ॥ १४ ॥

समानजातोऽसि भवांश्च मे सखा ।
प्रभूतवस्त्रो बहुपानभोजनः ॥
पश्येस्त्वमन्तश्च बहिश्च सर्वदा ।
कृतं मया द्वारमपावृतं यतः ॥ १५ ॥

14 *a* Edns BCEG अवश्य for अवध्यं ।
*b* Edns BEGKLN प्रव्राजयेयं C प्रव्राजयेय H प्रवासयेयं for विवासयेयं । DK द्विजं H द्विपः for द्विजान् ।
*c* Edns BCEFGHKLM समागताः AN समागता for सभागताः । H पौर-जनाः for जानपदाः । D न तेन कार्यं तव योऽप्रियं चरेत् ।
*d* L तथा प्रभुः । D यथाहमेवं विषये प्रभुर्भवान् ।

15 *a* Edns CG यातः for जातः । FM अस्मि for असि । Edns BCEGHKL N भवितासि for असि भवांश्च । D परःप्रियः for भवांश्च मे ।
*b* BE भोजन for भोजन. ।
*c* CHL पश्ये D पश्य M पश्यः for पश्येः । K सपश्य मे for पश्येस्त्वम् ।
*d* Edns BCEGHKN च ते L चरे for मया । N अगारुत for अपावृतम् । Edns BCEGHKLN मया D तव for यतः ।

---

14 *a*, *b* S. cl. ममान्तिके यश्च तवाप्रियचरेत्प्रवासये तं परिचिन्त्य मानवम् । ( SG तवा-प्रियो चरेत् SL यस्तु for यश्च । SG, SL, ST, SA प्रतिचिन्त्य ) SA[1] प्रवासयेयम् ।

15 S. cl. omits this verse.

ये त्वानुसंधेयुरवृत्तिकर्शिताः ।
ब्रूयाश्च तेषां वचनेन मे सदा ॥
दास्यामि सर्वं सततं न संशयः ।
न विद्यते ते मम सन्निधौ भयम् ॥ १६ ॥

वैशंपायन उवाच ।

एवं तु लब्ध्वा स वरं समागमम् ।
विराटराजेन नरर्षभस्तदा ॥
उवास वीरः परमार्चितः सुखी ।
न चापि कश्चिच्चरितं बुबोध तत् ॥ १७ ॥

इति विराटपर्वणि पाण्डवप्रवेशे युधिष्ठिरप्रवेशो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

16 *a* Edns ये त्वानुवादेयुः A ये त्वानुयाचेयुः CDG ये त्वानुवादैः BEHN ये त्वानुयाचेयुः K ये त्वां च याचेयुः L ये त्वानुधावेयुः for ये त्वानुसंधेयुः । Edn[1] अवृत्तिकर्षिताः CDG पुरवृत्तिकर्षिताः for अवृत्तिकर्शिताः ।

*b* D दिशत्वमर्थं for ब्रूयाश्च तेषां । D मम योऽस्ति कश्चन for वचनेन मे सदा । Edns GKN मां for मे । BE सर्वदा for मे सदा ।

*c* D सुखी शुभस्तः प्रियरूपममानिशः for the whole line. Edns BCEGHK LN तदह for सततं ।

*d* D वसत्वमस्मिन् भुवने यथा सुख for the whole line. Edns ABCEGHK LN न ते भय for न विद्यते । Edns BEHLN विद्यति AGK विद्यते for ते मम । Edns ABCEGHKLN मम for भयम् ।

17 *a* Edns BEFGKLMN एव सः for एवं तु । Edns BCDEFGKLMN तु for स । GL पर for वर । D इत्येवमुक्तस्तु युधिष्ठिरस्तदा for this line. FHM समागमे for समागमम् ।

*b* DGN राज्ञा तु for राजेन । D सुवा N तथा for तदा ।

*c* Edns N धीरः for वीरः ।

*d* D बुबुधे पृथग्जनः for चरितं बुबोध तत् ।

---

16 S. cl. omits this verse.

17 *a* SK, ST, SL, SA स for तु । SK, ST नृपतिः SA, SL नृवरः SG मधर्मं for स वर । S. cl. विराटराजेन for विराटराज्ञा तु । SG तथा for तदा ।

*c* SG उवाच for उवास ।

*d* S. cl. न चान्य for न चापि । SA[1] किंचिद् for कश्चित् । ST न बोधि for बुबोध ।

## ॥ सप्तमोऽध्यायः ॥

वैशंपायन उवाच ।

अथापरो भीमबलः श्रिया ज्वलन् ।
उपाययौ सिंहविलासविक्रमः ॥
खजां च दर्वीं च करेण धारयन् ।
असिं च कालाङ्गमकोशमव्रणम् ॥ १ ॥
स सूदरूपः परमेण वर्चसा ।
रविर्यथालोकमिमं प्रकाशयन् ॥
सुकृष्णवासा गिरिराजसारवान् ।
स मत्स्यराजं समुपेत्य तस्थिवान् ॥ २ ॥

1 *a* M अथापरैः K त्विषा L श्रियो for श्रिया ।
*b* D मत्तगजेन्द्रविक्रमः K सिंहबलोरुविक्रमः ।
*c* ALM खज D खर्वीं F खड्गं H खर्वं for खजाम् ।
*d* D कालायसकोशमव्रणां G कालाननकोश॰ ।

2 *a* L सु for स ।
*c* Edn² CFGHLM स कृष्णवासा. BE स कृष्णवास ।
*d* Edns CFG स मत्स्यैराज N मत्स्यस्य राज । D समेत्य राजानमुपेत्य ।

---

1 *a* SA omits वैशंपायन उवाच ।
S. cl. अथापरस्यां दिशि भीमदर्शनः ।
*b* S. cl. वृकोदरोऽदृश्यत सिंहविक्रमः ।
*c* SK, SG interchange *c* and *d*. । SA², SG खज SA¹ खग ST सुर्रिं ।
*d* SK असिप्रवेके प्रतिमुच्य शोणिते SL, SG असि प्रसेवे प्रतिमुच्यशाणके ST असिं च कालायसकोशमव्रणम् SA कालाशनिकाशमव्रणम् ।

2 *a* SK, ST, SL गभीररूप परमेण तेजसा SG गभीररूप परमेण तेजसा SA गभीररूपः for स सूद &c. ।
*b* SG, ST, SL प्रभासयन् SA विभासयन् ।
*c* SK स कृष्णवासा ।
*d* SK, ST, SG, SL समत्स्यराज SA¹ समात्स्यराज for मत्स्यस्य राज । SA² समात्स्यराजानमुपेत्य for मत्स्यस्य राज समुपेत्य ।

वनवासगतायाश्च सैन्धवेन दुरात्मना ।
परामर्शं द्वितीयं तत्सोढुमुत्सहते तु का ॥ ४ ॥
मत्स्यराज्ञः समक्षं तु तस्य धूर्तस्य पश्यतः ।
कीचकेन पदा स्पृष्टा का नु जीवेत मादृशी ॥ ५ ॥
एवं सुबहुभिः क्लिष्टां क्लिश्यमानां च भारत ।
न मां जानासि कौन्तेय किं फलं जीवितेन मे ॥ ६ ॥
योऽयं राज्ञो विराटस्य कीचको नाम नामतः ।
सेनानीः पुरुषव्याघ्रः श्यालः परमदुर्मतिः ॥ ७ ॥

4 *a* BEL तु for च । L तत्र वासु° for वनवास° ।
*b* Edn¹ परामर्शं Edn²CG परामर्शं B परामृश N परामर्ष । Edns CG द्वितीयो वै N द्वितीयस्य । BCDEL द्वितीय च । GL नु N अत्र for तु । BE क for का । H reads this v. as —मयानुभूत दु:स च सैन्धवाधापि कृपणम् । दुर्गं त्वापदि सर्वाणि त्वयि जीवति पांडव ॥
5 *a* BEH मत्स्यराजसमीप for मत्स्य°–°क्ष । BDEFLMN च for तु । N वृत्तस्य for धूर्तस्य । A पश्यत E स्पृश्यत ।
*b* Edns ABCDEFLM परामृश्य G पदामृश्य । Edns CGL जीवति for जीवेत । v. omitted in K
6 *a* Edns BCDEGKLN बहुविधैः H बहुविध M सबहुभि. । Edns CDEGKN क्लेशै BL दुःखै. H क्लिष्टा for क्लिष्टां । LN °मान ।
*b* K मां न । L नव जानासि दु:खार्तां for न मां etc.
7 *a* F राज्ञा । Edns BCDEGHKLN भारत for नामत ।
*b* AFL सेनानी । Edns BCDEGHKLN °व्याघ्र । F °व्याघ्रा । BE स्याल: L श्याल: ।

---

4 *a* S. cl वनवासगता चाहं for वनवासगतायाश्च ।
*b* S cl परामृश्य for परामर्शं । S cl च for तत् । S. cl. नु for तु ।
5 *a* S cl मत्स्यराज for मत्स्यराज्ञ ।
*b* SA³ परामृश्य for पदा स्पृष्टा ।
6 *a* S cl. बहुविधैर्दुःखै for सुबहुभि क्लिष्टां । SA ST, SG क्लिश्यमाना । S cl पाण्डव for भारत ।
*b* SA¹ मां । बहु । दु मा । ... म ... न म ।
7 *a* S cl भारत for नामत । ?-ST कृतः for भारत । S cl. पुरुषव्याघ्र ।

स मां सैरन्ध्रिवेषेण चरन्तीं राजवेश्मनि ।
नित्यमेवाह दुष्टात्मा भार्या भव ममेति वै ॥ ८ ॥

तेनोपमन्त्र्यमाणाया वधार्हेण सपत्नहन्‌ ।
कालेनेव फलं पक्वं हृदयं मे विदीर्यते ॥ ९ ॥

भ्रातरं च विगर्हस्व ज्येष्ठं दुर्द्यूतदेविनम्‌ ।
यस्यास्मि कर्मणा प्राप्ता दुःखमेतदनन्तकम्‌ ॥ १० ॥

को हि राज्यं परित्यज्य सर्वस्वं चात्मना सह ।
प्रव्रज्यायैव दीव्येत विना दुर्द्यूतदेविनम्‌ ॥ ११ ॥

8 *a* Edn[1] ⁰वशेन । Edns ACGHLN वसन्तीं D वसता for चरन्तीम्‌ ।
*b* H एवाहि । Edns BCEGHKN मम भव । K च for वै ।

9 *a* G तनोप⁰ N केनोप⁰ । L मन्त्रमाणा⁰ । F वधायार्हेण H वधार्हे । FM सपत्नहा K सपत्नजित्‌ ।
*b* BE च for इव । H विशीर्यते ।

10 *a* H स भ्रातर and omits च । K ते L वै for च । Edns ABCEGHL N ⁰स्व । DK विगर्हयेय for विगर्हस्व । A दुर्यूति⁰ BE ⁰वादित DH ⁰देदिनम्‌ ।
*b* BE अस्य M अस्मिन्‌ for अस्मि । L कारणात्‌ for कर्मणा । K अनर्थकम्‌ ।

11 *a* H यो for को । K नु for हि । B वात्मना⁰ ।
*b* D परिव्रज्याये E प्रत्याज्या⁰ K प्रव्रज्यामुपसेवेत L प्रव्रज्यायैमदीव्येत । A ⁰र्दूति⁰ H वेद्गिन ।

---

8 *a* SK, ST, SA[2] वसती for चरन्तीं ।
*b* SK, ST, SG मम भवेति for भव ममेति ।

9 *a* SK, SG तेनैवमुच्यमानायाः ST तेनैव चोद्यमानायाः SA तेनैव चोद्यमानायाः for तेनोपमन्त्र्यमाणाया । SG यथार्हेण for वधार्हेण । S. cl. अरिसूदन for सपत्नहन्‌ ।
*b* SA, ST, SG कालेनैव ।

10 *a* S. cl. विगर्हस्व for विगर्हस्व ।
*b* SA[1], ST अनन्तरम्‌ for अनन्तकम्‌ ।

11 *a* S. cl. सपुत्रपशुबान्धवम्‌ for सर्वस्वं चात्मना सह ।
*b* S. cl. reads—प्रमत्तेन महारण्यमजिनैः परिवारितः । ( SA महारण्ये । ST अजुनैः SG क्रिमैः for अजिनैः । )

यदि निष्कसहस्रस्य यच्चान्यत्सारवद्धनम्।
सायंप्रातरदेविष्यदपि संवत्सरान्बहून् ॥ १२ ॥
रुक्मं हिरण्यं वासांसि दासीदासमजाविकम्।
अश्वाश्वतरसंघातं न जातु क्षयमानयेत् ॥ १३ ॥
सोऽयं द्यूतप्रमादेन ऐश्वर्यादवरोपितः।
तूष्णीमास्ते यथा मूढः स्वानि कर्माणि चिन्तयन् ॥ १४ ॥

12 *a* Edns BCDEGHN °सहस्रेण। G यथा for यच्च। FM वधनात्सारयेत् for यच्चान्यत्सारवत्। N अन्यं for अन्यत्। ADHL °वर्द्धनम्।
*b* M सोय for सायं। K अदेव्यप्यत्।

13 *a* H रत्न for रुक्म। Edns BCDEGHLN यान K यान° for दासी°। Edns BCEGHKN युग्य D युग्म for °दासम्। L युग्यसमाविकम् for दास etc. D गजाविकम्।
*b* Edns BCDEG °सघाश्च L °सघाता M °संधान N °सघांश्च। CDGKN आवहेत्। L क्षय ननु समाविशेत् for न जातु etc.

14 *a* Edns BCDEGHKLN °प्रवादेन। Edn¹ CDGHN श्रिया प्रत्यव° Edn² BEKL श्रियः प्रत्यव° for ऐश्वर्यादव°।
*b* K कार्याणि for कर्माणि।

---

12 *a* S. cl. निष्कसहस्राणि। SK, SG यद्वान्यत्सारवद्धनम् SA¹, ST यद्वान्यत्सारवर्धन for यच्चान्यत्सारवद्धनम्।
*b* S. cl. सवत्सरायुतम् for संवत्सरान्बहून्।

13 *a* SA, SG यानयुग्यमजाविकम् SK, ST यान युग्यमजाविकम् for दासीदासमजाविकम्।
*b* SA अश्वाश्वरथसघांश्च SG अश्वाश्वरथसग्या च ST अश्वाश्वरथसघांश्च for अश्वाश्वतरसघातं। SK °सद्गाश्च for °सघात। SK, ST, SG आवयेत् for आनयेत्।

14 *a* SK, SG, ST, SA¹ द्यूतप्रवादेन SA² द्यूतप्रभावेण for द्यूतप्रमादेन। SK, SG श्रियश्चैवावरोपितः ST श्रियः पर्यवरोपितः SA श्रिया पर्यवरोपितः for ऐश्वर्यादवरोपितः।
*b* S. MSS. कर्माण्यचिन्तयन्।

दशनागसहस्राणि पद्मिनां हेममालिनाम् ।
यं यान्तमनुयान्तीह सोऽयं द्यूतेन जीवति ॥ १५ ॥
तथा शतसहस्राणि नृणाममिततेजसाम् ।
उपासन्ते महाराजमिन्द्रप्रस्थे युधिष्ठिरम् ॥ १६ ॥
शतं दासीसहस्राणि यस्य विप्रानुपासते ।
पात्रीहस्ता दिवारात्रौ अतिथीन्भोजयन्त्युत ॥ १७ ॥
एष निष्कसहस्राणि प्रदाता ददतां वरः ।
द्यूतजेन हि अर्थेन महता समुपावृतः ॥ १८ ॥

15 *a* L नागादश° । Edns CG हयाः H बलिनां L पद्मिनो for पद्मिनां । L हेमशालिन ।
*b* BE स F य for य । H स्म for इह ।

16 *a* Edns CG रथा HL यथा for तथा । Edns CH नृपाणाममितौजसां M नृपाणामर्पितेजसा GL नृपाणामतितेजसाम् । AD नृणां N राज्ञां for नृणाम् ।
*b* Edns BCEG उपासत K उपासति L उपासत । line omitted in N

17 *a* Edns CDGHK °सहस्राणाम् । Edns BCDEGHK यस्य नित्य महानसे L नित्य यस्य महानसे for यस्य विप्रा etc
*b* Ldn¹ GK °हस्त° H पात्रिहस्ताम् । Edns BCDEGHK °रात्र L °रात्र । Edn¹ HKN भोजयति । I M उत for उत । v omitted in N

18 *a* L हेम for एष । K °सहस्राणाम् । Edns BCEFGHLN प्रदाय for प्रदाता ।
*b* ABCDEFGHKM अनर्थेन । Edns CGL समुपाश्रित M समुपाकृत । v omitted in N.

---

15 *a* S cl पुरा दशसहस्राणि । S cl दन्तिनां for पद्मिनाम् । SK वाजिनामपि for हेममालिनाम् ।
*b* S cl स्म for इह ।

16 *a* SA दशसहस्राणि । S cl राज्ञां for नृणाम् ।
*b* SK, SA, ST उपासते स्म राजानं SG उपासन्ते स्म राजानम् for उपासन्ते महाराजम् ।

17 *a* S cl °सहस्राणाम् । नित्य महानसे for विप्रानुपासते ।
*b* S cl पात्रहस्ता । दिवारात्रम् ।

18 *a* S cl दश ग्रामान्ते दिन for प्रदाता etc
*b* S cl अनर्थेन ।

एनं हि स्वरसंपन्ना बहवः सूतमागधाः ।
सायंप्रातरुपातिष्ठन्सुमृष्टमणिकुण्डलाः ॥ १९ ॥
सहस्रमृषयो यस्य नित्यमासन्सभासदः ।
वृत्तश्रुतोपसंपन्नाः सर्वकामैस्तु पूजिताः ॥ २० ॥
अन्धान्वृद्धांस्तथा बालान्सर्वराष्ट्रेषु दुःखितान् ।
बिभर्त्यविमना नित्यमानृशंस्याद्युधिष्ठिरः ॥ २१ ॥
स एष निरयं प्राप्तो मत्स्यस्य परिचारकः ।
सभायां देविता राजा कङ्को ब्रूते युधिष्ठिरम् ॥ २२ ॥

19 *a* E यस्य FM एवं for एनं । L सु° for हि । M सूतमागतम् ।
*b* H उपादिष्टन् L उपातिष्ठन् । L °मृष्टि° ।
20 *a* D यस्मिन् for यस्य ।
*b* Edns BCDEGHKLN तपः M वृत्तः for वृत्त° । Edns CDGH उपस्थिताः N सपूजिताः for तु पूजिताः । BEK °कामसुखोचिताः । H सर्वे । L सर्वे कामैरुपाश्रिताः ।
21 *a* L वृद्धः° Edns ABCEGHK अनाथान् D पंगून् L सर्व° for बालान् । Edns GL बाल्यान् BCE सर्वान् for सर्व° । DKN स्वराष्ट्रे सर्वदुर्गतान् । Edns BCEF GHM दुर्गतान् L निर्गतान् ।
*b* Edns BCEGN विविधान् FH विमना for अविमना । Edns CGN राजा for नित्यं । DK विविधाकारान् for अविमना नित्यम् । H आनृशंस्यो । Edns A²CDGKN add betwen $b^1$ and $b^2$ :—धृतिमान्सत्यविक्रमः । संविभागमना-नित्यं । ( DN यः संविभज्य विनयात् for सवि° etc. )
22 *a* FM निलयम् ।
*b* Edns CGH राज्ञः । Edns CD कंकः । H कङ्कभूतो L कंकव्याजो for कंकं ब्रूते । Edns ACFHKLM युधिष्ठिरः ।

---

19 *a* S. cl. सु for हि ।
*b* S. cl. सुम for सायम् ।
20 *b* SK, SG, SA तपः for वृत्त° । ST °सम्पन्नान् । SK उपास्थिताः SA उपस्थिताः SG उपस्थितः ST उपस्थितान् for तु पूजिताः ।
21 *a* SK अनाथांस्तु for तथा बालान् । SA, SG अनाथान् for बालान् । ST एष ह्यन्धांश्च वृद्धांश्च for अन्धान्वृद्धां etc. ST सर्वराष्ट्रसुदुःखितान् ।
*b* S. cl. बिभर्त्यस्मार्थिनः for बिभर्त्यविमना ।
22 *a* SA¹ एव for एष । ST, SK निलयम् । SA मात्स्यस्य । SG परिचारिकः ।
*b* SK, ST, SG विनतः SA विदितः for देविता । S. cl. राज्ञः for राजा । SK, ST, SG कङ्को नाम युधिष्ठिरः SA कंकनामा युधिष्ठिरः for कंकं ब्रूते etc.

इन्द्रप्रस्थे निवसतः समये यस्य पार्थिवाः ।
आसन्बलिभृतः सर्वे सोऽद्यान्यैर्भूतिमिच्छति ॥ २३ ॥
पार्थिवाः पृथिवीपाला यस्यासन्वशवर्तिनः ।
स वशे विवशो राजा परेषामद्य वर्तते ॥ २४ ॥
प्रताप्य पृथिवीं सर्वां रश्मिवानिव तेजसा ।
सोऽयं राजा विराटस्य सभास्तारो युधिष्ठिरः ॥ २५ ॥
यमुपासन्त राजानः सभायां वृष्णिभिः सह ।
तमुपासन्तमद्यान्यं पश्य पाण्डव पाण्डवम् ॥ २६ ॥

23 *a* BE इन्द्रप्रस्थं । M पार्थिवः ।
*b* K बलिकराः L बलिप्रदाः । D सद्यः for सर्वे । D सोन्यस्माद् K सोद्य वै । Edns ABCDEHKLN भूतिं for भूतिम् । K जीविकः for मिच्छति ।

24 *a* KL पृथिव्यां for पार्थिवाः । L आशन् for आसन् ।
*b* BE राज्ञां for राजा । अनु⁰ for अद्य ।

25 *a* L मेदिनी for पृथिवीम् । C सर्वां । Edns N रश्मिमान् ।
*b* Edns BCDEFGHKLMN राज्ञः for राजा ।

26 *a* BE समुपा⁰ । All except FM ऋषिभिः for वृष्णिभिः ।
*b* H समु⁰ । Edn² BCDEFGLMN उपासीनं Edn¹ A उपासतम् । BE मद्यान्य LN अद्यान । H भारत भारत for पांडव etc. M पांडव ।

---

23 *a* SG निवसता । SA¹ पाण्डवाः for पार्थिवाः ।
*b* S. cl. बलिकराः । SK, ST, SG, SA² सोन्येभ्यो भृतिं SA¹ सोन्येभ्यो भूमिं for सोऽद्यान्यैर्भूतिम् ।

24 *b* SK, SG, ST राज्ञां SA राज्ञ for राजा ।

25 *a* S. cl. संताप्य for प्रताप्य । SK कृत्स्नां for सर्वाम् । SG, SA रश्मिमान् ।
*b* S. cl. अद्य for अयं । SK, SG, SA राज्ञः for राजा ।

26 *a* SK, ST, SG उपासत SA उपासन्ति । S. cl. राजानं । S. cl. ऋषिसत्तमाः ।
*b* S. cl. उपासीन for उपासन्तम् ।

अतदर्हं महाभागं जीवितार्थे हि संवृतम् ।
तं दृष्ट्वा कस्य नो दुःखं धर्मात्मानं युधिष्ठिरम् ॥ २७ ॥

उपास्ते स्म सभायां यं कृत्स्ना वीरवसुंधरा ।
तमुपासीनमन्यस्य पश्य भारत पाण्डवम् ॥ २८ ॥

एवं बहुविधैर्दुःखैः पीड्यमानामनाथवत् ।
शोकसागरमध्यस्थां किं मां भीम न पश्यसि ॥ २९ ॥

इति विराटपर्वणि कीचकवधे द्रौपदीविलापो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

27 *a* Edns अतदर्थं A[2] इतमर्थं BE अतदर्हं K तदर्हं M अनदाहेम् । Edns A[2]B CDEGHKN महाप्राज्ञम् । BE जीविनार्थां । H °तामिश्र K तार्थां । H omits हि । Edns CG अभिसंस्थितम् A[2] समाश्रितम् BLN अभिसंश्रितम् D अनिसश्रितम् K न सश्रितम् for हि संवृतम् ।
*b* Edns BCDEGHKN दृष्ट्वा कस्य न दुःखं स्यात् । A[2] omits तम् । v. omitted in L.

28 *a* H च K य for स्म । K समस्तेयं for सभायां य । B वीरकृत्स्ना E वीरकृत्स्न° Edn[1] कृत्स्नवीर । BE वसुन्धराम् ।
*b* K उपासन्त° M उपासीत° । Edns CGH °मत्यन्यम् BDEKLN °मद्यान्यम् AFM °मत्स्यम्य । H पाण्डव for भारत । Edns BDEGKN भारतं C भारत for पाण्डवम् । L जीवितार्थिनमागतम् for पश्य etc.

29 *a* A पीडयमानम् । L सनाथवत् ।
*b* H क्लेश° for शोक° । FM प्रपश्यति ।

* * * * *

---

27 *a* S. cl. अनर्थं for अतदर्हम् । महाप्राज्ञ for महाभागम् । जीवितार्थेन for जीवितार्थे हि ।
*b* S. cl. दृष्ट्वा कस्य न दुःखं स्यात् । धर्मराज for धर्मात्मानम् ।

28 *a* S. cl. अपि च for वीर° ।
*b* S. cl. अद्यान्य for अन्यस्य । भारत for पाण्डवम् ।

* * * * *

## ॥ अष्टादशोऽध्यायः ॥

द्रौपद्युवाच।

इदं तु मे महद्दुःखं यत्प्रवक्ष्यामि भारत।
न तेऽभ्यसूया कर्तव्या दुःखादेतद्ब्रवीम्यहम् ॥ १ ॥
सूदकर्मणि हीने त्वमसमे भरतर्षभ।
ब्रुवन्मे बल्लवो नाम तेन मे शुष्यते मनः ॥ २ ॥
यदा महानसे सिद्धं विराटमुपतिष्ठसे।
ब्रुवाणो बल्लवः सूदस्तदा सीदति मे मनः ॥ ३ ॥

XVIII. 1 *a* Edns DGL ते for मे। KN दुःखम् for मे महद्। KN कौंतेय for दुःखम्। K मामसह्य निबोध तद् N ममासज्य निबोध तद् for यत्प्रवक्ष्यामि भारत।
*b* Edns BCDEGHLMN मे for ते। K तेन for न ते। L ह्यसूया N अभ्यासूय। H दुःख for दुःखात्। H ते for अहम्।

2 *a* L सूदकर्मनिर्हीन for सूदकर्म°। BEGHKM भीम for हीने। BE आत्मा न HL असम। L भरतर्षभः।
*b* A ते for मे। Edns BCDEGHKLN ब्रुवन्बल्लवजातीयः कस्य शोकं न वर्धयेः। (H जातीय। L नामेति for जातीयः। H शोको न बाधते।)

3 *a* K महानसे यदा। Edns ABCDEGHKN सिद्धे M सिद्धि। Edn² CGHK LN °तिष्ठसि M °तिष्ठति।
*b* D करालो for ब्रुवाणो। HK बल्लवम् M बल्लव A बल्लवो। H सूद D तस्य for सूदः। v. omitted in F.

---

XVIII 1 *a* S. cl दुःखतर for महद्दुःख। SK, ST यत्त्वां वक्ष्यामि SG, SA यत्त्वा वक्ष्यामि। SG तच्छृणु for भारत।
*b* S. cl. मे for ते। SA¹, SG ह्यसूया। SA¹ एव for एतद्।

2 *a* ST सूपकर्मणि। अधीनस्तु समये for हीने त्वमसमे। SK, SG, SA omit vv 2-3.
*b* ST ब्रुवन्बल्लवमात्मानं किंतु दुःखतरं ततः।

3 *a* ST तथा त्वं सूपकर्तासि यत्कर्म न समं तव।
*b* ST पाकुर्वाणेन सपत्न ततो दुःखतरं नु किम्।

स यदा हृष्टसाम्राज्यस्त्वां योधयति कुञ्जरैः ।
हसन्त्यन्तःपुरे नार्यो ममतूद्विजते मनः ॥ ४ ॥

शार्दूलैर्महिषैः सिंहैरगारे युध्यसे यदा ।
कैकेय्याः प्रेक्षमाणायास्तदा मे कश्मलो भवेत् ॥ ५ ॥

प्रेक्ष्य ते उत्थिता वापि कैकेयी ताः स्त्रियोऽवदत् ।
प्रेक्ष्य मामनवद्याङ्गी कश्मलोपहतामिव ॥ ६ ॥

4 *a* Edns CD यदा प्रहृष्टः सम्राट् त्वाम् N यदा महृष्टसम्राट् सः for स यदा हृष्टसाम्राज्यः । GKL यदा च हृष्टः for स यदा हृष्ट । H समरे K सम्राज्य GL सम्राट् त्वां for साम्राज्यः । Edns CG सयोधति D योधयिष्यति L नियोजयसि for त्वां योधयति ।
*b* F °पुरा for °पुरे । D चोद्विजते G रुद्विजते for तूद्विजते । v. omitted in BEM.

5 *a* Edns ABCEGHMN आगारे K अगारैः for अगारे । Edns BCDE योत्स्यसे M युध्यते । DM सदा for यदा ।
*b* B कैकेय्यः N कैकेय्यां । All except HN प्रेक्ष्यमाणायाः N प्रेक्षमाणायां । Edn² AFKM कश्मल । Edn¹ G अभवत् for भवेत् ।

6 *a* Edns BCDEGHK प्रेष्याः समुत्थिताश्चापि A प्रेष्याः समुचिता यापि L प्रेष्याः समुत्थिताश्चापि N प्रेष्याः समुत्थिताश्चापि for प्रेक्ष्य ते उ° । Edns CGHKL कैकेयीम् A कैकेय्या । Edns C अमुवन् BEM वदेत् ADGHL अवदन् ।
*b* N प्रेक्ष । BE °ध्यांगि । H कश्मल महदाविशत् for कश्मलोपहतामिव ।

---

4 *a* ST यथा दृष्टस्तु सम्राट् च त्वं विधेयोसीह कुञ्जरैः ।
*b* ST समाजे विहू कौन्तेय विराटस्येव पश्यतः । SK पेशं निरीक्ष्य च for तूद्विजते मनः । l. om. in SG, SA.

5 *a* S. cl. नागैः for सिंहैः । योत्स्यसे । सदा for यदा । SA² reads also भवान् for यदा ।
*b* ST कैकेय्यां प्रेक्षमाणायां । S. cl. अभवत् ।

6 *a* omitted in S. cl.
*b* SK, SG, ST अनवद्याङ्गीम् । S. cl. अभिहतां for उपहतां ।

स्नेहं संवासजं मन्ये सूदमेषा शुचिस्मिता ।
योध्यमानं महावीर्यमिमं समनुशोचते ॥ ७ ॥
कल्याणरूपा सैरन्ध्री बल्लवश्चातिसुन्दरः ।
स्त्रीणां च चित्तं विज्ञेयं युक्तरूपौ च मे मतौ ॥ ८ ॥
सैरन्ध्री प्रियसंवासा नित्यं करुणवेदिनी ।
अस्मिन्राजकुले चेमौ तुल्यकालनिवासिनौ ॥ ९ ॥
इति ब्रुवाणा वाक्यानि सा मां नित्यमवेक्षति ।
क्रुध्यन्तीं च ततः प्रेक्ष्य समाशङ्कऽति मामिति ॥ १० ॥

7 *a* Edns BCDEGHKLN स्नेहात् । Edns BCDEGHKLN सवासजात् ।
Edns G धर्मात् for मन्ये । D सूदस्य for सूदम् । L एन for एषा ।
*b* Edn[1] BCEGKLN °वीर्यैः D °वीरैः । Edns BCEGKLN इय for इमम् ।
Edns BCDEGHK °शोचति L शोचित । N यदनुशोचति ।

8 *a* Edns CEG अपि for अति । L °शोभनः for °सुदरः ।
*b* Edns ACF चित्त च D हि चित्त K वृत्त हि G वृत्त M च वृत्त for च चित्त ।
Edns ABCDEGHKLM दुर्ज्ञेय F युक्तरूप । L हि for च ।

9 *a* Edn[1] N सैरिन्ध्री । Edns BDEGKM प्रियसवासात् L चिरसंवासा N प्रिय-सवादा । Edns CGHK करुणवादिनी D हि प्रियवादिनी ।
*b* M न for च । CG उभौ for इमौ ।

10 *a* AL स for सा । Edns CG अतर्जयत् N अतेजयत् BDEHK अवेदयत्
LM अवेक्ष्यते A अनोदयत् F अवेक्षती ।
*b* A त्रस्यन्ती BCDE कुप्यन्ती । K अपि Edns ABCDEFGHLMN मां
for च । Edns ACDGHLN च संप्रेक्ष्य । BE सुसंप्रेक्ष्य । Edns ABCDE
GHKLN समशक्त । AH सा त्वयि C मे त्वयि D मा त्वयि K मामिय M मा
मतिः Edns BEGLN मां त्वयि for मामिति । F कुप्यीं च मा &c.

---

7 *a* S. cl. स्नेहात् । SK, ST, SA सवासजादेव SA[2] सवादजादेव SG सवास-
जातेष for सवासज मन्ये । SK, SG, ST तदा वै चारुहासिनी SA सदा वै चारु-
हासिनी for सूदमेषा शुचिस्मिता ।
*b* S cl. युध्यमान । SA[1] महावीर्यं SG अह वीर्यं । SA[1] भीम SG अहं for
इम । S. cl. °शोचति ।

8 *a* SK, SG, SA वलव for बल्लवः । S. cl अपि for अति ।
*b* SK, SG, ST चित्त हि SA चित्त च for च चित्त । S. cl. दुर्ज्ञेय । S. cl. हि for च ।

9 *a* SK, ST °सवासात् SG °संवादा । SK °वादिनी ।
*b* SK, ST, SG एनौ for इमौ ।

10 *a* SG, SA[1] सा मां SA[2] सा मा for सा माम् । S cl अर्जाजयत् for अवेक्षति ।
*b* SG, ST क्रुध्यन्ता । S. cl. मां च संप्रेक्ष्य for च ततः प्रेक्ष्य । S. cl.
पर्यशङ्कत मां त्वयि ।

तस्यामेवं ब्रुवन्त्यां तु दुःखं मे महदाविशत् ।
शोके यौधिष्ठिरे मग्ना नाहं जीवितुमुत्सहे ॥ ११ ॥
यः स देवान्मनुष्यांश्च सर्पांश्चैकरथोऽजयत् ।
सोऽयं राज्ञो विराटस्य कन्यानां नर्तको युवा ॥ १२ ॥
योऽतर्पयदमेयात्मा खाण्डवे जातवेदसम् ।
सोऽन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ॥ १३ ॥
यस्माद्भयममित्राणां सदैव पुरुषर्षभात् ।
स लोकपरिभूतेन वेषेणास्ते धनंजयः ॥ १४ ॥
यस्य ज्याक्षेपविहितौ बाहू परिघसंमतौ ।
स शङ्खपरिपूर्णाभ्यां शोचन्नास्ते धनंजयः ॥ १५ ॥

11 *a* C यथा K तस्याः for तस्याम् । Edns BEGHKLN तथा C तयो D तस्य for एवम् । Edns BEGHKN ब्रुवत्यां L वदन्त्याः for ब्रुवन्त्याम् । N हि for तु । A दुःख L शोकः for दुःखम् । Edns BCDEGKL मां for मे । BEL समुपाविशत् ।
*b* M शोक । F युधिष्ठिरे H युधिष्ठिरो । H मग्नो । A नानु for नाहम् ।
12 *a* BELN च for सः । Edns DGHN सर्वान् & omit च C सर्वाः ।
*b* BE कन्या नर्तयते ।
13 *a* D अतर्पयेत् । AF पाण्डवे । A हव्यवाहन for जातवेदसम् ।
*b* Edns D पार्थ । C क्षयोर्मिः L गर्त्तभिः ।
14 *a* N सदेव । BE पुरुषर्षभ M पुरुषर्षभात् ।
*b* N लोके° for लोक° । F च M इव for आस्ते ।
15 *a* Edns ABCEGKMN ज्याक्षेपकठिनौ D ज्याघोषकठिनौ K ज्याघोषनिहतौ । Edns ABCEGHKLN परिघसन्निभौ D स्तनकिणाङ्कभौ । F reads 16 *a* before v. 15, and K reads this v. after v. 18

---

11 *a* S. cl. मथा for एव । ST वदन्त्यां ST हि SA[1] च for तु । SK, SG, SA भीमो भीमपराक्रमः for दुःखं मे महदाविशत् ।
12 *a* SK, ST यस्तु for यः स । S cl. सर्वानेक° for सर्पांश्चैक° ।
*b* SG कन्यानर्तको SA कन्यानर्तनको ।
14 *a* SG पुरुषर्षभः ।
15 ver. omitted in S. cl.

यस्य ज्यातलनिर्घोषात्समकम्पन्त शत्रवः ।
तं स्त्रियो गीतवाद्यार्थं मुदिताः पर्युपासते ॥ १६ ॥
किरीटं सूर्यसंकाशं यस्य मूर्धनि शोभते ।
स वेणीकृतकेशान्तः शोचन्नास्ते धनंजयः ॥ १७ ॥
यस्मिन्नस्त्राणि दिव्यानि समस्तानि महात्मनि ।
सर्वसत्वाकरः श्रीमान्सर्वविद्यासु निश्चितः ॥ १८ ॥
यं स्म राजसहस्राणि पुरा व्यूढानि पाण्डवम् ।
समरे तानि वर्तन्ते वेलामिव महोदधेः ॥ १९ ॥

16 *a* D ज्याघात° N ज्याक्षेप° for ज्यातल°। K °घोषेण for °निर्घोषात् ABCDEFGL °कंपत । l. omitted in M.
*b* Edns ABCDEFGHKMN स्त्रियो गीतस्वनं तस्य ( G द्रष्टु for तस्य ) ।

17 *a* Edns CGLN अशोभत ।
*b* Edns ABCEGLN वेणीविरुतकेशांतः K तं वेणीरुतकेशांतं। Edns ABCEGHL सोयमद्य K अद्य पश्य । K धनंजयं । line omitted in D.

18 *a* B सहात्मनि ।
*b* Edns ABCDEGHKLN read:—आधारः सर्वविद्यानां ( C भूतानां ) स धारयति कुंडले ।

19 *a* Edn[2] स्पष्टुं for य स्म । A यस्मिन् Edn[1] CDGHN यस्य । M राजा सहस्राणि। Edns ABCDEGHKLN तेजसा for पुरा । Edns ABDEGKN अप्रतिमानि वै CHL ऽप्रतिमेन वै M व्यूढानि पांडव ।
*b* Edns BCDEGKN नाभ्यवर्त्तंत A नाभिवर्त्तन्ते H नोपवर्त्तंत L नातिवर्त्तन्ते । A वेलानिव । Edns ABCDEGHK[2]N महार्णवः L महोदधिः ।

---

16 *b* S. cl. स्त्रियो गीतस्वना ( SK स्वरा ) तस्य ।

17 *a* SK, ST, SA अशोभत ।
*b* SK, SG, SA वेणीविरुतकेशान्तः ST वेणीकृतमुखः कान्तः । S. cl सोयमद्य for शोचन्नास्ते ।

18 *b* S. cl. आधारः सर्व विद्यानां स ( SK यो SG वि ) धारयति कुण्डले ।

19 *a* S. cl. वै for स्म । तेजसाप्रतिमं भुवि for पुरा व्यूढानि पाण्डवं ।
*b* S. cl. नातिवर्तन्ते for तानि° । महार्णवः for महोदधेः ।

सोऽयं राज्ञो विराटस्य किंकरः समुपस्थितः ।
आस्ते वेषपरिच्छन्नः पश्य दैवविपर्ययम् ॥ २० ॥

यस्य स्म रथघोषेण कम्पतीव वसुंधरा ।
सपर्वतवना भीम सहस्थावरजङ्गमा ॥ २१ ॥

यस्मिञ्जाते महाभागे कुन्त्याः शोको व्यनश्यत ।
स शोकयति मामद्य भीमसेन तवानुजः ॥ २२ ॥

20 *a* Edns ACDFGHMN कन्यानां for किंकरः । Edns ACDFGHMN नर्तको युवा for समुपस्थितः । l. om. in K.
*b* Edns ABCDEGLN वेष (Edn¹ N श) मति (BE वि)च्छन्नः । Edns BC DEGLN कन्यानां ( BE मत्स्यानां ) परि ( G मनि )चारकः । K सौतःकन्यापुग्गत. किंकर. परिचारकः । M दैवा° for दैव° । line omitted in H.

21 *a* AKL वै M स्व H अस्य for स्म । F °घोषेन M °घोषेण । Edns BCDEG HLN समकम्पत मेदिनी A समकम्पत मेदिनी K समकम्पति मेदिनी for कम्पतीव वसुन्धरा ।
*b* Edn¹ भीमा । N सपर्वतवनद्वीपा । DL °जगमाः FM °जगम. ।

22 *a* A° व्यनश्यत K व्यनीनशत् M विनश्यते ।
*b* Edns BCDEFHKMN शोचयति । L पश्यत्वजतयत्र for शोकयति मामद्य । H मां नित्य for मामद्य ।

---

20 *a* SK, ST कन्यानां नर्तको युवा SA, SG कन्यानर्तनको युवा for किंकरः समुपस्थित. ।
*b* SK, SA, SG °शनिच्छन्न । S. cl. कन्याना परिचारिक for पश्य देवविपर्यय ।

21 *a* SK, SG निर्घोषात् for °घोषेण । S cl समकम्पत मेदिना for कम्पतीव वसुन्धरा ।
*b* SK, SG, ST, SA °वनाकाशा SA² °वनाकाश for °वना भीम । SA °जङ्गमे ।

22 *a* S. cl महेश्वाधे for महाभागे । S cl. शोनिरश्यत for शोको व्यनश्यत ।
*b* SK, SA न म शोचति SG म न शोचति ST न शोम ( च ) यति for स शोकयति । SG मामाद्य for मामद्य ।

भूषितं तमलंकारैः कुण्डलैरुपशोभितम् ।
वेत्रपाणिं समायान्तं दृष्ट्वा सीदति मे मनः ॥ २३ ॥

तं वेणीकृतकेशान्तं भीमधन्वानमर्जुनम् ।
कन्यापरिवृतं दृष्ट्वा भीम सीदति मे मनः ॥ २४ ॥

यस्य नास्ति समो वीर्ये कश्चिदुर्व्यां धनुर्धरः ।
सोऽद्य कन्यापरिवृतो गायन्नास्ते धनंजयः ॥ २५ ॥

धर्मे सत्ये च शौर्ये च जीवलोकस्य संमतः ।
तमद्य पण्ढकं दृष्ट्वा भीम सीदति मे मनः ॥ २६ ॥

23 *a* Edns CDGLN परिहाटकैः ABEHK परिहारकैः for उपशोभितम् ।
*b* Edns ABCEGHKLN कंबुपाणिनम् M चित्रपाणीस° for वेत्रपाणि स° ।

24 *a* D वेणीविरुतकेशान्त । BE त्वं for तम् । Edns CGN read this v. after v. 17.

25 *a* M वीरः for वीर्ये । N धनुधरः ।
*b* CL अय for अद्य ।

26 *a* Edns BCDEFGKM शौर्ये च सत्ये । N °लोके च for °लोकस्य । Edns BCEGHKL संमत N सन्मत for समतः ।
*b* Edns ABCDEGHKLN स्त्रिवेष ( Edn[1] H श ) विरु-( HN धृ ) तम् for तदद्य पण्ढकम् । Edns ABCDEGHKLN पार्थं दृष्ट्वा for दृष्ट्वा भीम ।

---

23 *a* SK, SG विभूषितं for भूषित त । SK परिपातुकैः SG, SA परिपाडुकैः ST परिपाण्डुरैः for उपशोभितम् ।
*b* S. cl. कम्बुपाणिं for वेत्रपाणिं । SK अथायान्त SG तथायान्त ST अपायान्तं SA अयोयान्त ।

24 *a* S. cl. वेणीविरुत° for त वेणीकृत° ।
*b* S. cl. शोक गच्छति for भीम सीदति ।

25 ver. omitted in S. cl.

26 ver. omitted in S. cl.

यदा पुनः परिवृतं कन्याभिर्देवरूपिणम् ।
स्तम्बेरमं यथा मत्तं परिकीर्णं करेणुभिः ॥ २७ ॥

मत्स्यमर्थपतिं पार्थं विराटं समुपस्थितम् ।
पश्यामि परिपन्मध्ये दृशो नश्यन्ति मे तदा ॥ २८ ॥

नूनमार्यो न जानाति कृच्छ्रप्राप्तं धनंजयम् ।
अनर्हंवपप्रच्छन्नं भस्मच्छन्नमिवानलम् ॥ २९ ॥

27 *a* K यथा for यदा । Edns ABCDEGHLN ह्येनम् for पुनः ।
*b* Edns ABCDLGHKLN प्रभिन्नमिव मातगम् for स्तम्बेरम यथा मत्तम् । K प्रविकीर्णं ।

28 *a* N अर्थमति । A पार्थं । AD विराट् ।
*b* Edns CGHLN तूर्य–BDE सूर्य–K तूर्ये–मध्यस्थम् for परिपन्मध्ये । Edns BCDEFGMN दिशा L दृष्टि. for दृशा । A नश्यति । FKMN सदा for तदा ।

29 *a* Edns BCDEGHKLN आया A पार्थः F आय M आर्यो for आर्यः । D जानामि for जानाति । Edns BCDEN कृच्छ्राप्त ।
*b* Edns ABCEGKLN अजातशत्रुम् D आजानशत्रु H अजानशत्रु for अनर्हवेष० । Edns ABCDEGHKN कौन्तेय L कौन्तेय for °प्रच्छन्नम् । Edns CDLGHKN मम दुर्यूतदेविनम् AB मम दुयूतदेविनम् L मम दुयूतसेवनम् for भस्मच्छन्नमिवानलम् ।

---

27 *a* SA[1] यदि । SK, SA ह्येन for पुन । ST पश्य चेन for यदा पुन ।
*b* S cl. प्रच्छन्न ( ST भिन्न ) मिव मातग for स्तम्बेरम यथा मत्तम् । SK, SA, SG परिपूर्णम् ।

28 *a* S. cl मात्स्य पार्थं च गायन्त for मत्स्यमर्थपतिं पार्थम् । SG पर्युपस्थितम् ।
*b* S. cl तांतु ( SK तुय ) मध्यस्थ for परिपन्मध्ये । SK, SG, SA[2] दृशा for दृशा । SK, SG मुष्णति SA[2] मुष्णन्ति for नश्यन्ति । SK मनः ST सदा SG अभितो SA[2] दिशा for तदा । SA[1] तदा मुष्णात म मन for दृशो &c.

29 *a* S cl. आर्या for आर्या । SK, SA, SG कृच्छ्रं मागम ST कृच्छ्रमागम for कृच्छ्रप्राप्तम् ।
*b* S cl अजातशत्रु कौन्तेय मम दुयूतदेविनम् ।

तथा दृष्ट्वा यवीयांसं सहदेवमुपस्थितम् ।
गोषु गोवृन्दमायान्तं स्थाणुभूतास्मि भारत ॥ ३० ॥
सहदेवस्य वृत्तानि चिन्तयन्ती पुनः पुनः ।
न निद्रामभिगच्छामि भीमसेन कथंचन ॥ ३१ ॥
दूयामि भरतश्रेष्ठ दृष्ट्वा ते भ्रातरं प्रियम् ।
गोषु गोवृषसंकाशं मत्स्येनाभिनिवेशितम् ॥ ३२ ॥
संरब्धं रक्तनेपथ्यं गोपालानां पुरःसरम् ।
विराटमभिनन्दन्तं क्षिप्रं मे भवति व्यथा ॥ ३३ ॥

30 *a* K कनीयांसं । Edns DGKN गवां पतिम् ABCEHL युधां पतिं for उपस्थितम् ।
*b* K गोपालतुल्यं N गोपालवेषं for गोषु गोवृन्दम् । Edn² CG गोवेषं Edn¹ गोवेशं BDEFHLM गोविंदम् for गोवृन्दम् । Edns ABCDEGKLN पाण्डुभूता N पांडुभूता for स्थाणुभूता । C स्म for अस्मि ।
31 *b* BE अत्र CLN अधि⁰ D उप⁰ for अभि⁰ । All except FM कुतो रतिम् for कथंचन ।
32 *a* ABEK दूये च DL दूयेह N दूयेत for दूयामि । Edns BCDEGHKLMN ⁰श्रेष्ठ । A चापरं for भ्रातरम् । D तदा for प्रियम् ।
*b* BE गोष्ठे for गोषु । K गोविंदसंकाशं M गोवृषसंकाशः । D अनिनिवे⁰ ।
33 *a* Edns ABCDEGHKLN पुरोगमम् for पुरःसरम् ।
*b* Edns BCDEGHN अथ A ततो K तथा L अत्र for क्षिप्रम् । A भवते । Edns ABCDEGHKLN ज्वरः for व्यथा ।

---

30 *a b*. The sense is expressed in S. cl. by the following lines:—
तथा दृष्ट्वा यवीयास सहदेव युधांपतिं । तं दृष्ट्वा गोषु गोसख्यं वत्सचर्मक्षितिशायम् । दुःखशोकपरीताङ्गी पाण्डुभूतास्मि पाण्डव ॥ [ SA गोष्ठ⁰ for गोषु । SA¹ ⁰संख्ये । SA¹ SG वत्सकर्म⁰ । SA, ST भारत ]
31 *a* SA¹ पुनः सदा ।
*b* omitted in S. cl.
32 *a* SK, ST, SG भरतश्रेष्ठ ।
*b* SK मात्स्येनापि निवेशितं SG, SA मात्स्येनाभिमर्शितं ST मात्स्येनाभिसमुक्षितं ।
33 *a* SK संरब्धनरसंकाशं SG संरक्तनरसंकाशं ST, SA संरब्धनरसंकाशं for संरब्धं रक्तनेपथ्यं । SK, SA, SG पुरोगम ST पुरोगतं for पुरःसरं ।
*b* SK चिरं ST, SG, SA अथ for क्षिप्र । S. cl. ज्वरः for व्यथा ।

सहदेवं हि मे वीरं दृष्ट्वा कुन्ती ह्युवाच माम् ।
त्वया सदैव रक्ष्योऽयं कृष्णे मद्वाक्यगौरवात् ॥ ३४ ॥
ह्रीनिषेवो मधुरवाग्धार्मिकश्च प्रियश्च मे ।
सुतेनैतेन बोद्धव्यं पाञ्चालि विषमेष्वपि ॥ ३५ ॥
सुकुमारं च शूरं च राजानं चाप्यनुव्रतम् ।
ज्येष्ठानुयायिनमिमं स्वयं पाञ्चालि भोजयेः ॥ ३६ ॥

34 *a* K च for हि । A ते for मे । D वीरं मे for मे वीरं । Edns ABCDEGH-KLN नित्यमार्या प्रशंसति for दृष्ट्वा &c. F ष्युवाच ।

*b* Edns ABCEGHKLN महाभिजनसंपन्नः शीलवान्वृत्तवानिति । ( E संपन्न । BEL इति मे मतिः for वृत्तवानिति । H नृतवान् K श्रुतवान् N बलवान् । )

35 *a* HKL निषेधः । FM सु for the first च ।

*b* Edns ABCDEGLN स तेऽरण्येषु HK स त्वरण्येषु for सुतेनैतेन । Edns BCDEGHKLN बोद्धव्यः A बोद्धव्यः । Edns ABCEGHKL याज्ञसेनि DN याज्ञसेनी for पाञ्चालि । Edn² ABCDEGHKLN क्षपासु Edn¹ रुपासु for विषमेषु । D च for अपि ।

36 *a* Edns ABCDEGHKN सुकुमारः–शूरः–अनुव्रतः ।

*b* Edns ACDGKL ज्येष्ठा ( Edn¹ ष्ठो ) पचा ( CGK या ) यिनम् । Edns CDGL वीरम् K नित्यं for इमम् । A पूजय D भोजये H भोजय । H finishes its Adh. after this v.

---

34 *a* S. cl. नित्यं for वीरम् । S. cl. वीर ( SA²र्य ) मार्या प्रशंसति for दृष्ट्वा &c.

*b* S. cl. महाभिजनसंपन्नो नीतिमान्कुलवानपि ( S. MSS शील° for कुल° ) ।

35 *a* SA¹र्ही° for ह्री° । SG, SA² °निषेधो ST निषेवी । SK, ST, SA¹ सुनयनो SG, SA² ध्यानयमो for मधुरवाङ् । ST सु for the first च ।

*b* S. cl. स तेऽरण्येषु ( ST त्व SA व ) बोद्धव्यः ( SK बोद्धव्यः ) । SA पाञ्चाली । S. cl. रजनीषु for विषमेषु । SG ते for अपि ।

36 *a* SK सुकुमारश्च शूरश्च ST सुकुमारः सुरूपश्च । SK, ST अनुव्रतः ।

*b* SK °यायिनं वीरं ST °त्यागिनं शूरं । ST भोजय । v. omitted in SA, SG.

इत्युवाच च मां कुन्ती प्रस्थितां हस्तिनापुरात्।
तमरण्ये परिचरं सर्वदाहं प्रयत्नतः ॥ ३७ ॥
तं दृष्ट्वा तु वृतं गोपु वत्सकर्मक्रियापरम्।
सहदेवं युधां श्रेष्ठं किं नु जीवामि पाण्डव ॥ ३८ ॥
यस्त्रिभिर्नित्यसंपन्नो रूपेणास्त्रेण मेधया।
सोऽश्वबन्धो विराटस्य पश्य कालविपर्ययम् ॥ ३९ ॥
अभिकीर्यन्ति वृन्दानि हयानां वातरंहसाम्।
विनयन्तं जवेनाशु अश्वानां वेगमुत्तमम् ॥ ४० ॥

37 *a* Edns ACDGHKLN हि for च। M मा। Edns ABCDEGKN रुदती ( A न्ती ) पुत्रगृद्धिनी for प्रस्थितां &c.
*b* Edns ABCDEGHKLN प्रव्रजंत महारण्यं त परिष्वज्य तिष्ठती। ( ABDEHK °व्रजत्सु N °व्रजत। ABDEHN तदारण्यं। BE संपरि°। BCDE तिष्ठति। )

38 *a* Edns CGHKLN व्यावृतम् ABDE व्यापृतम् for तु वृतम्। Edns ABCDEGHKLN वत्सचर्मक्षपाशयम् (AKL क्षिपा°। C रुताशय। N रुताःसनम्।)
*b* CH युधा। BGHM तु D न for नु। D जानामि for जीवामि। BE भारत।

39 *a* K श्रिया रूपेण for रूपेणास्त्रेण। A मेधसा C वेधया for मेधया। line omitted in M.
*b* L विराटश्च। Edns ACDGHKN कालस्य पर्ययम्।

40 *a* Edns ACDGHL अभ्यकीर्यन्त BE अभ्यकीर्यत N अभ्याकीर्यन्त K अभिकीर्याश्व°। Edns ABCDEGHKLN दामग्रन्थिमुदीक्ष्य तम् ( ABDEH तां ) for हयानां &c.
*b* H विनयत M विनयं त्वं। H जवैः for जवेन। Edns ABCDEGHKLN अश्वान् for आशु। Edns ABCDEGHKLN महा ( HK मत्स्य ) राजस्य पश्यतः for अश्वानां &c.

---

37 *a* SK, ST हि for च। SK, ST रुदती पुत्रगृद्धिनी for प्रस्थितां°।
*b* SK प्रव्रजन्तं महारण्यं ST व्रजत्स्वस्मासु चारण्यं for तमरण्ये परिचरं। SK, ST न परिष्वज्य तिष्ठती for सर्वदाहं etc. v. omitted in SG, SA.

38 *a* S. cl. reads न दृष्ट्वा गोषु गोपालवेषमास्थाय स्थितम्। [ SA, SG, ST स्थितम्। ]

39 *a* S. cl. यः सर्वैभिः। *b* SK कालस्य पर्ययम्।

40 *a* S. cl. अभ्यकीर्यन्त। दामग्रन्थिमुदीक्षितुम्।
*b* S. cl. धर्मराजस्य पश्यतः for अश्वानां &c.

प्रधावमानं श्रीमन्तं मत्स्यं भ्राजिष्णुमुत्तमम् ।
विराटमुपतिष्ठन्तं दर्शयन्तं च वाजिनः ॥ ४१ ॥
किं नु मां मन्यसे पार्थ सुखितेति परंतप ।
एवं दुःखसमाविष्टां युधिष्ठिरनिमित्ततः ॥ ४२ ॥
अतः प्रतिविशिष्टानि दुःखान्यन्यानि भारत ।
वर्तन्ते मयि कौन्तेय शृणु तानि विशेषतः ॥ ४३ ॥
युष्मासु म्रियमाणेषु दुःखानि विविधानि च ।
यच्च दासी सुदेष्णायाः किं नु दुःखमतःपरम् ॥ ४४ ॥

इति विराटपर्वणि कीचकवधे द्रौपदीदुःखकीर्तनं नामाष्टादशोऽध्यायः ॥ १८ ॥

---

41 *a* Edns CHKLN अपश्यमेनम् A अपश्यदेनं BE अवश्यमेव D अद्येवमेनं G अपश्यमेवं for प्रधावमानम् । FM भीम त्वं for श्रीमन्तम् । L अहम् for मत्स्यम् ।
*b* D दमयन्त G दर्शय च for दर्शयन्तम् । G न for च । BEM वाजिन ।

42 *a* BDE तु for नु । A पार्थं L पार्त for पार्थ । Edns CGHK सुखिनी । D परतपः ।
*b* Edns AHKL दुःखशताविष्टा FM °समाविष्टा G °शताधिक्य BCDEN °शताविष्टां ।

43 *a* AK अतस्तु प्रविशिष्टानि BE अतः प्रत्यवशिष्टानि । H प्रतिनिविष्टानि । M दुखानि for दुःखानि ।
*b* M वर्तत । BE यानि for मयि । Edns ABCDEGKN वक्ष्यामि शृणु तान्यपि L शृणु वक्ष्यामि तान्यपि for शृणु &c. Line omitted in H.

44 *a* A म्रियमाणेषु । ACDG उत for च । line omitted in H.
*b* Edns ABCDEGHKLN शोषयंति शरीरं मे for यच दासी सुदेष्णायाः । M तु for नु ।

---

41 ver. omitted in S. cl.

42 *a* omitted in S. cl.
*b* SA °समाविष्टा SK, SG, ST °शताविष्टा ।

43 *a* S. cl. पुनः for अतः । S. cl. अन्यानि for शृणु ।
*b* SK वर्धन्ते । SK वक्ष्याम्यन्यानि तानि वै SA वक्ष्याम्यन्यानि तानि मे ST, SG दुःखान्यन्यानि तानि ते for शृणु etc.

44 *a* SG वक्ष्यामि for दुःखानि । SK, SG, SA उत for च ।
*b* S. cl. शोषयन्ति शरीरं मे for यच दासी सुदेष्णायाः ।
S. cl. दुःखतरं ततः for दुःखमतः परम् ।

## ॥ एकोनविंशोऽध्यायः ॥

द्रौपद्युवाच ।

अहं सैरन्ध्रिवेषेण चरन्ती राजवेश्मनि ।
शौचदास्मि सुदेष्णाया अक्षधूर्तस्य कारणात् ॥ १ ॥
विक्रियां पश्य मे तीव्रां राजपुत्र्याः परंतप ।
आसे कालमुपासीना सर्वं दुःखं किलार्तवत् ॥ २ ॥
चक्रवत्किल मर्त्यानामर्थाश्च व्यसनानि च ।
इति कृत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥ ३ ॥
दत्वा याचन्ति पुरुषा हत्वा वध्यन्ति चापरे ।
पातयित्वा च पात्यन्ते परैरिति च मे श्रुतम् ॥ ४ ॥

XIX. 1 *a* D रूपेण for वेषेण ।
*b* A किंकरी H क्विकरा BDELN वशगा M शोचदा for शौचदा । A इव for अस्मि । N तस्य for अक्ष ।
2 *a* BEH तीव्रा । DLM परतपः ।
*b* F स्थास्ये M आस्ते Edns BCDEGN आत्म for आसे । Edns GK उद्वीक्षति C उद्वीक्षती D अपेक्षती BEM उपासीनं । Edn² सर्वे BCDEHL सर्व । Edns BCDEGHKN अतनत् L आर्तिवत् । v. omitted in A.
3 *a* Edns C परिवर्तते for किल मर्त्यानाम् । Edns C ह्यर्थाश्च ।
*b* M परीक्षामि । line omitted in AKL. Verse omitteed in H.
4 *a* FH अपरैः for अपरे ।
*b* A याचकाश्चैव याच्यते L याचयित्वा च याच्यते for पातयित्वा च पात्यते । A न N वि for मे । F शुभ for श्रुतम् । Edns ABCDEGHLN interchange vv. 4 and 5.

---

XIX. 1 *a* SK, ST, SA वसती SG वसती for चरती ।
*b* S. cl. वशगास्मि for शौचदास्मि । SG, SA ह्यक्षधूर्तस्य ।
2 *b* S. cl. सर्वदुःखसहा पुनः for सर्वं दुःख किलार्तवत् । SG, SA आस्ते for आसे ।
3 *a* SK, SG, ST चक्रवत्परिवर्तते SA अनित्याः किल मर्त्यानाम् for चक्रवत् etc. SK, ST, SG ह्यर्थाश्च ।
*b* SA मत्वा for कृत्वा ।
4 *a* SK हत्वा हन्यत एव ते ।
*b* SA मानयित्वावमन्यन्ते SG, ST मानयित्वा च मन्यन्ते for पातयित्वा च पात्यन्ते ।

य एव हेतुर्भवति पुरुषस्य जयावहः।
पराजयेऽपि हेतुः स इति वै प्रतिपालये ॥ ५ ॥
न दैवस्याभिभारोऽस्ति न दैवस्याभिवर्तनम्।
इति चाप्यागमं भूयो दैवस्य प्रतिपालये ॥ ६ ॥
स्थितं पूर्वं जलं यत्र पुनस्तत्रैव तिष्ठति।
इति पर्यायमिच्छन्ती प्रतीक्षे उदयं पुनः ॥ ७ ॥
दैवेन किल यस्यार्थः सुनीतोऽपि विपद्यते।
दैवस्यागमने यत्नः कर्तव्यो हि विजानता ॥ ८ ॥

5 *a* F पुरुषश्च। N जयाय हि।
*b* G पराजयाप H पराभवे च LN पराजये स Edns ABCDEK पराजये च। Edns CGHK हेतुश्च LN हेतुः स्यात्। Edns CGHK स इति ABDELN इति च for इति वै।
6 *a* Edns ABCDEGHKLN अति for अभि। Edns G न चैवास्यातिवर्त्तनम् BEHL न चैवास्ति निवर्त्तनम् N न दैवस्याभिवर्त्तनम् D न दैवस्यनिवर्त्तनम् A² दैवस्यावर्त्तनम् K न दैवस्यातिवर्त्तनम्।
A reads this v. on the margin & repeats it after v. 8 again where the v. l. is न चैवास्ति निवर्तनम्।
*b* BE भूमौ for भूयः। D प्रपालये A दैवस्य प्रतिपालयेत्। A मत्वा for चाप्या।
7 *a* FHKM स्थित। Edns CDG गच्छति for तिष्ठति।
*b* A कृत्वा प्रतीक्षामि for पर्यायमिच्छन्ती। BEFHL °क्ष्यामि for °क्षे। A भर्तृणाम् for प्रतीक्षे। K reads this v. after v. 5.
8 *a* BEK न विद्यते for विपद्यते। Edn¹ स° for सु°।
*b* A तद्दैवस्य। A आगमे BEK एवागमे D उपगमे Edns CG चागमे for आगमने। A कार्यस्तेन Edns BCDEGHKL तेन कार्यः for कर्त्तव्यो हि। D विजानतः।

---

5 *a* ST स एव for य एव। SA² सुखावहः for जयावहः।
*b* S. cl. च for अपि। ST पराजयति for पराजये। S. cl. च for वै।
6 *a* S. cl. अति for अभि। SK न चैवास्यातिवर्तनम् SG न दैवस्यानिवर्तनं ST सर्वस्याप्रतिवर्तते SA न दैवस्यानुवर्तनम्।
*b* SA, SG, ST मत्वा for चापि।
7 *a* SK, SG, ST, SA² न पुनस्तत्र for पुनस्तत्रैव। SA¹ इव for एव।
*b* SK सदा दैवागमे यत्नः SG दैवस्यैवागमो यत्नः SA दैवस्यैवागमे यत्नः। S. cl, तेन कार्यो विजानता।

यत्तु मे कथितस्यास्य वचनस्य प्रयोजनम् ।
पश्य मां दुःखितां तच्च त्वमिष्टोऽसि ब्रवीमि ते ॥ ९ ॥

महिषी पाण्डुपुत्राणां दुहिता द्रुपदस्य च ।
इमामवस्थां संप्राप्ता का मदन्या जिजीविषेत् ॥ १० ॥

कुरूनभिभवन्सर्वान्पाञ्चालानपि भारत ।
पश्य त्वां समनुप्राप्तो मम क्लेशो ह्यरिन्दम ॥ ११ ॥

9 *a* L किम् for यत् । Edns ABCDEGHN वचनस्यास्य कथितस्य K वचनस्याथ कथितस्य ।

*b* Edns BCDEGH तत्त्वं AL एव N सत्वं for तच्च । Edns CG पृष्टा चात्र ABDEN अपृष्टा च HK अपृष्टापि L संपृष्टा म । F reads the line as पश्य मां पश्यतां तच्च तमेष्टामि ब्रवीमि ते । (पश्य)तां corrected by the same writer to (दुःखि)तां by writing the first two letters on the head of (पश्य) M reads as corrected in F. All excpt FM पृच्छ for पश्य ।

10 *a* L राजपुत्राणाम् ।

*b* AFM संप्राप्ताम् । Edns CG मदन्या का K कथमद्य for का मदन्या ।

11 *a* Edns G परिभवेत् ADHLN परिभवन् BE अभिभवत् K सर्वान्परिभवन् । FLM पंचालान् ।

*b* Edns ABCEGHLN पांडवेयांश्च संप्राप्तः DK पांडवांश्चैव संप्राप्तः for पश्य त्वम् &c. FM पश्य त्वम् ।

---

9 *a* SK, SG किं नु मे वचनस्याद्य SA, ST किं नु मे वचनस्यास्य । S. cl. कथितस्य प्रयोजनम् ।

*b* SK, SG पृच्छ मां दुःखितामेनाम् SA पृच्छ मां दुःखितामेव for पश्य etc. SK, SA², SG, ST अपृष्टापि ब्रवीमि ते ( SA², SG, ST च for अपि ) SA¹ नापृष्टा च ।

10 *b* SK मदन्या का SA² को मदन्यो ।

11 *a* SK, SG, ST परिहरन् SA परिभवन् for अभिभवन् । SG भ्रातॄन् for कुरून् । S. cl. अपि for अभि ।

*b* S. cl. पांडवेयांश्च संप्राप्तः for पश्य etc. SK, SG, ST शोकः for क्लेशः ।

भ्रातृभिः श्वशुरैः पुत्रैर्बहुभिः परवीरहन् ।
एवं समुदिता नारी मदन्या दुःखिता भवेत् ॥ १२ ॥
नूनं हि बालया धातुर्मया वै विप्रियं कृतम् ।
यस्य प्रसादात्सुमहद्दुःखं प्राप्तास्मि भारत ॥ १३ ॥
वर्णावकाशमप्येकं पश्य पाण्डव यादृशम् ।
यादृशेनैव तत्रासीद्दुःखे परमिके सति ॥ १४ ॥

12 *a* A भर्तृभिः *Edns* ABCDEGHKLN परिवारिता *for* परवीरहन् ।
*b* K सुविदिता for समुदिता । Edns ACFGHMN का त्वन्या D का त्वम्या K का नु वे for मदन्या । FM read this v. after v. 20.

13 *a* A मलवतः for हि बालया । A अपि for वै । C न प्रिय ।
FM read *a* after v. 20.
*b* AL यस्या H तस्य for यस्य । Edns ABCDEGHLN दुर्नीत K दुरित for सुमहद्दुःखम् । All except FM भरतर्षभ for भारत । FM read *b* after v. 12.

14 *a* Edns ABCDEGKLN मे H मयि for एकम् । H च for अपि । KL तादृशम् ।
*b* Edns EG तादृशो मे न ABDEHKLN यादृशो मे न । A कस्य for तत्र । Edns ABCDEGKLN परमके तदा M परमिते ।

---

12 *a* SK परिवारिता SA[1] परवीरहा for परवीरहन् ।
*b* SK, SA[2] कान्वेव दुःखभागिनी SG, ST, SA[1] कान्येवं दुःखभागिनी for मदन्या-दुःखिता भवेत् ।

13 *a* S. cl. बालतया for हि बालया ।
*b* SK, SA, SG तस्य प्रभावाद्दुर्नीतं ST तस्य प्रसादाद्दुर्नीतं ।
S. cl. प्राप्तास्मि भरतर्षभ ।

14 *a* SK, ST वर्णं विकारमपि मे SA वर्णावसादमपि मे SG वर्णावकाशमपि मे ।
*b* SK, SA[2], SG, ST ईदृशो मे न तत्रासीत् SA[1] ईदृशो मे न तत्रासीत् ।
[1] S. cl. दुःखे परमके पुरा ।

त्वमेव भीम जानासि यन्मे सुखमभूत्पुरा ।
साहं दीनत्वमापन्ना न शान्तिमवशा लभे ॥ १५ ॥
नादैविकमिदं मन्ये यत्र पार्थो धनंजयः ।
भीमधन्वा महाबाहुरास्ते शान्त इवानलः ॥ १६ ॥
अशक्या वेदितुं पार्थ प्राणिनां वै गतिर्नरैः ।
विनिपातमिमं मन्ये युष्माकं ह्यविचिन्तितम् ॥ १७ ॥
यस्या मम सुखं प्रेष्या यूयमिन्द्रसमाः सदा ।
सहामि दुःखमन्यासामवराणां वरा सती ॥ १८ ॥

15 *a* AL तावत् for भीम । Edns CGK जानीषे for जानासि । Edns ABCEG HKLN पार्थ D भीम for सुखं । Edns ABCDEGHKLN सुखं for अभूत् । K परं for पुरा ।
*b* Edns BCDEGHLN दासीत्वं AK दासत्वं for दीनत्वं ।
16 *a* Edns C अहं for इदं । K तद्दैविकं for नादैविकं । B मन्येत् । N यत्तु for यत्र ।
*b* Edns CL च्छन्नः for शान्तः ।
17 *a* GH अशक्यं । FHM विदितं for वेदितुं । D हि for वै ।
*b* L विनिपातिं for विनिपातं । D अहं L इदं for इमं ।
18 *a* Edn[2] AN सुखमेक्षा Edn[1] C सुखप्रेक्षा BDEGK सुखप्रेक्ष्या H सुख-प्रेक्ष्या L अनुप्रेक्ष्या for सुखं प्रेष्या । K आसन् L सुखं for मम । K पुरा L युधि for सदा ।
*b* BCDEGHKL सा प्रेक्ष्ये Edns सा प्रेक्षे N प्रेक्षे सा for सहामि । Edn[2] BCDEGHKLN सुखं Edn[1] सुखं for दुःखं । HN अन्येषां for अन्यासां ।

---

15 *a* S. cl. जानीषे for जानासि । SK, SA, ST पार्थ सुखम् SG पार्थः सुखं for सुखमभूत् ।
*b* S. cl. दासीत्व for दीनत्वं । S. cl. मनसा for अवशा ।
16 *a* SK, ST तद्दैविक SA न दैविकम् SG नैतद्दैवादृते for नादैविकमिदं । ST अहं for इदं ।
*b* S. cl. महाराज्ञे for महाबाहुः । चास्ते ।
17 *b* S. cl. पश्य for मन्ये । ST अम् SA[1] इद for इम । SK, SG, ST अविचिन्ति-तम् for ह्यविचिन्तितम् ।
18 *a* SA सुखं प्रेक्ष्य SK, ST, SG सुखं प्रेक्षा for सुखं प्रेष्या ।
*b* SG, SA, सा प्रेक्षे ST साप्रेक्ष SK सा प्रेक्ष्य सुखं for सहामि दुःखं ।

पश्य मे पाण्डवावस्थां यथा नार्हामि वै तथा ।
युष्मासु ध्रियमाणेषु पश्य कालविपर्ययम् ॥ १९ ॥
यस्याः सागरपर्यन्ता पृथिवी वशवर्तिनी ।
आसीत्साद्य सुदेष्णायास्तिष्ठामि वशवर्तिनी ॥ २० ॥
यस्याः पुरःसरा ह्यासन्दासाश्चैवाग्रतः स्थिताः ।
साहमस्मि सुदेष्णायाः पुरःपश्चाच्च गामिनी ॥ २१ ॥
या न जातु स्वयं पिंष्ये गात्रोद्वर्तनमात्मनः ।
निमित्तं हि सुदेष्णायाः साद्य पिंष्यामि चन्दनम् ॥ २२ ॥

19 *a* Edns BCDEGHKLN पाण्डव मे ।
*b* M दुःखासु for युष्मासु । CD ध्रीयमाणेषु Edns ACDGHKLN कालस्य पर्ययं BE कालेषु पर्ययं ।

20 *b* D साधु K साऽस्मि for साद्य । Edns ACDGHKLN भीताहं FM भीतास्मि for तिष्ठामि ।

21 *a* Edns CG आसन् BEN चासन् H चान्या for ह्यासन् । Edns BCDEGH-KLN पृष्ठतश्च for दासाश्च । Edns C अनुगामिनः DHKL अनुयायिनः G अनुजीविनः N अभ्यनुयायिनः for एवाग्रतः स्थिताः ।
*b* Edns BCDEGHKLN अद्य for अस्मि । FM साद्यपिंष्यामि चन्दनम् for पुरः &c.

22 *a* Edns DGLN पिंषे A पिंष्ये BE पिंषेत् F पीष्ये K कुर्यां for पिंष्ये । M आत्मजः ।
*b* Edns BCDEGHKLN अन्यत्र कुन्त्या भद्रं ते for निमित्तं हि सुदेष्णायाः । Edns CGL सा पिनष्म्यद्य BE सापिनाद्येय D साद्यपिंषामि H सापिनद्य K सापि पिंष्येय N सा पिनस्त्यन्य for साद्य पिंष्यामि ।

---

19 *a* SK, SG, ST पाण्डव मेऽवस्थाम् for मे पाण्डवावस्थाम् ।
*b* SA पाञ्चालेषु च भारत SK, SG, ST पाञ्चालेषु च मानद for पश्य कालविपर्ययम् ।

20 *b* SK, SG, ST पांचाली for तिष्ठामि ।

21 *a* SA, SK पृष्ठतश्चानुगामिनः for दासाश्चैवाग्रतः स्थिताः ।
*b* S. cl. अद्य for अस्मि । SK SG, ST, SA पश्चाद्यामि भयार्दिता for पुरःपश्चाच्च गामिनी ।

22 *a* SK पिंषे SG, ST, SA पिंषि for पिंष्ये । SG, ST, SA गात्रोन्मर्दनम् ।
*b* SK अन्यत्र कुन्त्या भद्रं ते सा पिनष्म्यद्य चन्दनम् ।

पश्य कौन्तेय मे पाणी नो दृष्टौ भवतः पुरा ।
इत्यस्य दर्शयामास पाणी कृतकिणौ तदा ॥ २३ ॥
नाहं बिभेमि कुन्त्या वै युष्माकं वा कथंचन ।
यथा नित्यं सुदेष्णाया भीता तिष्ठामि किंकरी ॥ २४ ॥
किं तु वक्ष्यत्यसौ राजा वर्णकः सुकृतो न वा ।
नान्यपिष्टं हि मत्स्यस्य चन्दनं किल रोचते ॥ २५ ॥

23 *a* Edns BCDEGHKL पाणी मे । Edns CG नैवाभूतौ हि यौ A न दृष्टौ भवता BE नैवं भूतौ तौ DK नैवं यौ भवतः H नैवं मे भवतः L नैवं हि भवतः N यौ नैवं भवतः for नो दृष्टौ भवतः ।
*b* BE सा for अस्य । Edns BCDEN किणवंतौ करौ GHKL किणबद्धौ करौ for पाणी कृतकिणौ । Edns BCDEGHKLN उभौ A तथा for तदा ।

24 *a* Edns BCDEGHKN बिभेमि कुन्त्याः for नाहं बिभेमि । Edns BCEGHN यानाहं DK नैवाहं for कुन्त्या वै । BE न HL च for वा । Edns BCDEGHKN कदाचन L विशेषतः for कथंचन ।
*b* Edns CDGHKLN साद्य BE सा च for यथा । Edns BCDEGHKLN अग्रतो विराटस्य for नित्यं सुदेष्णाया । L तिष्ठति ।

25 *a* Edns CEGHKLN किंनु । L वक्ष्यति । Edns BCEGHN सम्राद् for असौ । Edns BCEGHN मां DK अद्य for राजा । A वः H च for वा ।
*b* D इत्यपिष्टं for नान्यपिष्टं । D किन्न for किल ।

---

23 *a* SA, SK, SG पाणी मे ST पाणी वै for मे पाणी ।
SG, ST, SK नैवं वै SA नैवं मे for नो दृष्टौ ।
*b* S. cl. इत्यस्मै for इत्यस्य ।
SK किणवंतौ करावुभौ SA, SG किणबद्धौ करावुभौ ST किणबद्धकरावुभौ for पाणी कृतकिणौ तदा ।

24 *a* S. cl. बिभेमि कुन्त्या या नाहं । कदाचन for कथंचन ।
*b* S. cl. साद्यापतो विराटस्य for यथा नित्यं सुदेष्णाया । SG, ST, SA किंकरा ।

25 *a* SK किंनु वक्ष्यति सम्राण्माम् SA[1] किंनुवक्ष्यस्यसम्राड्वै SG, SA[2] ST किंनुवक्ष्यति सम्राड्वै for किंतु वक्ष्यत्यसौराजा ।
SG, ST, SA[1] वर्णतः for वर्णकः । SA, SG, ST सुकृते for सुकृतः ।
*b* S. cl. विराटस्य for हि मत्स्यस्य ।

वैशंपायन उवाच ।

सा कीर्तयन्ती दुःखानि भीमसेनस्य भामिनी ।
रुरोद शनकैः कृष्णा भीमसेनमुदीक्षत ॥ २६ ॥
सा बाष्पकलया वाचा निःश्वसन्ती पुनः पुनः ।
हृदयं भीमसेनस्य घर्षयन्ती च भामिनी ॥ २७ ॥
नाल्पं कृतं मया भीम देवानां किल्बिषं पुरा ।
अभाग्या यत्र जीवामि मर्तव्ये सति पाण्डव ॥ २८ ॥
ततस्तस्याः करौ शून्यौ किणबद्धौ वृकोदरः ।
मुखमानीय वेपन्त्या रुरोद परवीरहा ॥ २९ ॥

26 *a* D कीर्तयन्ति । D भामिनि । L भामिनी सातिमानिनी for भीमसेन etc.
*b* Edns ABCEGKL उदीक्षती D उद्वीक्ष्यत H उपेक्ष्यति N उदीक्ष्यती ।

27 *a* L बाष्पाकुलया वाला । FM स for सा ।
*b* Edn[2] BCDEGHKN घट्टयन्ती Edn[1] घटयन्ती L पाठयन्ती A द्राग्यन्ती for घर्षयन्ती । Edns BCDEGHKLN इदमब्रवीत् for च भामिनी ।

28 *a* N पुरा for मया । ADFKMN त्रिविधं for किल्बिषं । L पुनः N मया for पुरा ।
*b* KN यत्तु for यत्र । Edns AD कर्तव्ये । L इति for सति । AM पांडवः ।
Edn[1] adds द्रौपद्युवाच before v. 28.

29 *a* Edns G सूक्ष्मौ K रुक्षौ N वंध्यौ for शून्यौ । BDEKN किणवन्तौ ।
*b* D आदाय । Edns ACFGHMN वे पन्त्याः D पाश्वान्त्याः BL पन्त्यास्तु for वेपन्त्याः ।
Edns BCDEFGKN add वैशंपायन उवाच before v. 30.

---

26 *a* ST कामिनी for भामिनी ।
*b* S. cl. भीमस्यांगसमाश्रिता for भीमसेनमुदीक्षत ।

27 *a* SK निश्वसन्ती । ST बाष्पकण्ठ्या for बाष्पकलया ।
*b* S. cl. घटयन्तीदमब्रवीत् ( SA, SG, ST घट्ट for घट )

28 *a* SG भीम for भीम ।
*b* SK या न ST, SG, SA यत्तु for यत्र ।

29 *a* S. cl. पीनौ for शून्यौ ।
*b* S. cl. दृष्ट्वा मानौ for मुखमानीय ।

तौ गृहीत्वा स कौन्तेयो बाष्पमुत्सृज्य वीर्यवान् ।
ततः परमदुःखार्त इदं वचनमब्रवीत् ॥ ३० ॥

इति विराटपर्वणि कीचकवधे द्रौपदीविलापो नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः ।

भीमसेन उवाच ।

धिगस्तु मे बाहुबलं गाण्डीवं फाल्गुनस्य च ।
यत्ते रक्ताविमौ भूत्वा पाणी कृतकिणावुभौ ॥ १ ॥

सभायां स्म विराटस्य करोमि कदनं महत् ।
अपश्यं त्वां यदा कृष्णे कीचकेन पदा हताम् ॥ २ ॥

30 *a* Edns CGHKLN च BDE तु for स । BE वाद्यं for बाष्प । A वीरवान् ।

*  *  *  *  *

XX. 1 *a* L धिक् for च ।
*b* Edns BCDEFGHKMN पुरा A करौ for इमौ । Edns GLM इमौ for उभौ ।

2 *a* Edns CDKLN तु G कि BE न A च for स्म ।
*b* D ⁰पश्यः त्वम् । H तां for त्वाम् । L अवश्य त्वाम् । L तदा for यदा । BED पदाहतम् ।

---

30 *a* S. cl. य for स । ST तां for तौ ।
*b* SA दुःमानाम् for दुःखार्तः ।

*  *  *

XX. 1 *a* S. cl. फल्गुन⁰ ।
*b* SG, ST, SA यौ for यत् । SG रक्त । S. cl. पुरा for इमौ । SG कर्मकरौ for कृतकिणौ । इमौ for उभौ ।

2 *b* omitted in S. cl. except ST which has—अपश्य ...... गिणामिण ।

तदैव कर्तुमिच्छामि मत्स्यानां कदनं महत् ।
तत्र कार्यं मया किं तु कौन्तेयो यत्प्रतीक्षते ॥ ३ ॥
अथवा कीचकस्याहं पोथयामि पदा शिरः ।
नागो बिल्वमिवाक्रम्य न चेद्राजा न्यवारयत् ॥ ४ ॥
तत्र मां धर्मराजस्तु कटाक्षेण निवारयत् ।
तदस्य चाहं विज्ञाय स्थितवानस्मि भामिनि ॥ ५ ॥
यच्च राष्ट्राद्विवसनं कुरूणामेव पश्यताम् ।
सुयोधनस्य कर्णस्य शकुनेः सौबलस्य च ॥ ६ ॥

3 *a* D तत्र for तदा । Edns BCDEGHKLN अहं चिकीर्षामि for कर्तुमिच्छामि ।
*b* HN तच्च for तत्र । A² मे करुण भाति । Edns BCDEGHKLN मे कारणं भाति for कार्यं मया किंतु । K कौन्तेय न प्रता° । Edns BCDEGHKLN read 3 *b* after 2 *a*

4 *a* L दुष्टस्य for अथवा । L पोथयिष्यामि N चूर्णयामि । G यदा K तदा for पदा ।
*b* F बिल्व° । M नोचेत् । line omitted in Edns BCDEGHKLN

5 *a* Edns ACDFGHKN न्यवारयत् BE अभ्यवारयत् L निवारयेत् ।
*b* Edns BCDEGHKLN अहं तस्य M अस्य चाहं । Edns BCDEGHKLN स्थित एव । D भामिनी G भाविनी ।

6 *a* A² त्वत्तः राज्यात् for यच्च राष्ट्रात् । Edns A²BCDEGHKLN प्रव्रजनं for विवसनं । F यच्च राज्ञो ह्यवसनम् । M as above in F BE कुरूणाम् । Edns BDEKN अपराध्य यः C अपराध्य यः G अभिसृत्य य A²H अवधार्य यत् L अवधिर्य यत् for एव पश्यताम् ।
*b* N दुर्योधन° । D कृष्णस्य for कर्णस्य । K यत् for च ।

---

3 *a* omitted in S cl
*b* omitted in SG & SA. SK & ST मे कारणं भाति ।

4 *a* ST पातयामि शिरस्तदा । ST omits 4 *b* SK, SG, SA omit the whole verse

5 *a* S. cl. न्यवार° ।
*b* S cl अहं तस्य for अस्य चाहं । SG, ST, SA स्थित एवास्मि SK स्थितो धर्मस्य । SK, SG, SA भामिने ST शोभने for भाविनी ।

6 *a* SK राज्यात् । SK, SG, SA प्रव्रजनम् । SK, ST अपराध्य य SG अभिसृत्य य SA आधर्ष्य त for एव पश्यताम् ।

दुःशासनस्य पापस्य यच्च तन्न हृतं शिरः ।
तन्मे दहति गात्राणि हृदि शल्यमिवार्पितम् ॥ ७ ॥

इमं तु समुपालम्भं त्वत्तो राजा युधिष्ठिरः ।
शृणुयाद्यदि कल्याणि कृत्स्नं जह्यात्स जीवितम् ॥ ८ ॥

धनंजयोऽपि सुश्रोणि यमौ चापि शुचिस्मितौ ।
लोकान्तरगतेष्वेषु नाहं जीवितुमुत्सहे ॥ ९ ॥

सुकन्या नाम शार्याती भार्गवं च्यवनं वने ।
वल्मीकभूतं शाम्यन्तमन्वपद्यत भामिनी ॥ १० ॥

7 *a* Edn² GN यन्मया नाहृतं Edn¹ H यन्मया न हृत BE हृतं यन्न तदा D यन्मया न कृतं C यन्मया नाहतं K न मयापहृत L यदि मेवकृत । FM हतं L शरः ।
*b* HKL कल्याणि for गात्राणि । H कृत्स्नं जह्यात्स जीवित for हृदि etc.

8 *a* Edn¹ इदम् । BDEHK च for तु ।
*b* A शृणु यद्यपि । Edns G वापि for यदि । F omits this v.

9 *a* All except M वा for अपि । A कल्याणि । Edns BCDEGHKLN वा तनुमध्यमे A चानुत्तमाविमौ for चापि etc. line omitted in F.
*b* Edns ABCDEGHK शक्ष्यामि जीवितुम् L शक्यास्मि N शक्या हि जीवितुम् ।

10 *a* Edns CEG पुरा N परा before सुकन्या & omit नाम। Edns CG भार्या च। F भार्यासीत् for शार्याती । A स्वर्याती BEN सार्याती D शर्यातिः H शर्यातेः L सार्यानी । B मार्गव । L श्चवन ।
*b* AM वाल्मीक° । A श्यामं त BE पश्यंतं for शाम्यन्तम् । L अन्वपश्यत । G वीने N भाविनी ।

---

7 *a* SG, ST, SA चतुर्थानां for °स्य पापस्य । SG, ST मे for तत् । SA नात° for तन्न । SK मया for च तत् ।
*b* SA मा SK, SG, ST माम् for मे । S. cl. कल्याणि for गात्राणि । SG, ST, SA शल्य इवार्पितः ।

8 *a* SG, ST, SA एवं चोग्रमुपालंभ । SG, ST, SA त्वया for त्वत्तो ।

9 *a* SK, SG, ST वा च for अपि। SA दुर्धर्षौ for सुश्रोणि । SA माद्रीपुत्रौ तथैव च।
*b* SA °गते पाप्मिन् । SK, SG शक्ष्यामि जीवितुम् । SA interchanges *a* and *b*.

10 *a* SK, SG, SA शर्यातिः ST शर्यातिः । SK, SG, SA भार्गव° ।
*b* SA वल्मीक° । SK मार्श्वी न for शाम्यन्तम् ।

नाडायनी चन्द्रसेना रूपेण यदि ते श्रुता ।
पतिमन्वचरद्वृद्धं पुरा वर्षसहस्रकम् ॥ ११ ॥
दुहिता जनकस्यापि वैदेही यदि ते श्रुता ।
पतिमन्वचरत्सीता महारण्यनिवासिनी ॥ १२ ॥
अयोनिजा महाभागा रामस्य महिषी प्रिया ।
क्लिश्यमानापि सुश्रोणि राममेवान्वपद्यत ॥ १३ ॥
लोपामुद्रा तथा भीरु वयोरूपसमन्विता ।
अगस्त्यमन्वगाद्धित्वा कामान्सर्वानमानुषान् ॥ १४ ॥

11 *a* Edns BCEHGN नारायणी D नारायणी FM द्राक्षायणी H नाल्यानी । Edns CFGHN चैंद्रसेना BE चेंद्रसेनी D चैंद्रसेनां K चैंद्रसेनी । M सश्रुता for ते श्रुता । L द्रुता ।
*b* Edns ACDGKL °सहस्रिणं H वर्षं सहस्रिणं N मर्यसहस्रिकं । line omitted in M.
12 *a* श्रुत ।
*b* AL °चरत् । Edns BCDEFGHKM निवासिन । L मरण्येपि निवासिनीं N महारण्य निवासिन ।
13 *a* Edns ACGK रक्षसा निग्रहं प्राप्य BDEN रक्षसो निग्रह प्राप्य H रक्षसां निग्रह प्राप्य L रक्षसां मरणं प्राप्य for अयोनिजा महाभागा ।
*b* BE सक्लिश्यमाना and omit अपि । All except D सुश्रोणी ।
14 *b* Edns CGK अगस्तिमन्वयात् ABEL अगस्त्यमन्वियात् DN °स्त्यमन्वयात् । C विद्वान् for हित्वा । D मन्वयाद्वित्वा ।

---

11 *a* SK, SG नालायनी SA नालायणी ST नारायणी । S. cl. चेंद्रसेना । S. cl. अमानिमा भुवि for यदि ते श्रुता ।
*b* SK °सहस्रिणम् SA °सहस्रिकम् । S. cl. reads vv. 10-11 after our v. 11.
12 *a* SK, ST, SA आसीत् । SG स्याम for अपि ।
*b* S. cl. °निवासिनम् ।
13 *a* SK, SG, SA वसती च महारण्ये ST निवसंती महारण्ये for अयोनि etc.
*b* S.cl. सा क्लिश्यमाना for क्लिश्यमानापि । SG पतिमेवान्वपद्यत । ST °पद्यते ।
14 *a* SG °तु वैदर्भी SA तु वै देवी for तथा भी० । SG, SK, SA सर्वगुणसंपन्ना for वयोरूप etc.
*b* S.cl. reads—भर्तारमगस्त्यं सा वनार्थे स्वन्वपद्यत ।

यथैताः कीर्तिता नार्यो रूपवत्यः पतिव्रताः ।
तथा त्वमपि कल्याणि सर्वैः समुदिता गुणैः ॥ १५ ॥
कंचित्कालं समाश्वस्य मासमध्यर्धसंमितम् ।
पूर्णे त्रयोदशे वर्षे राज्ञो राज्ञी भविष्यसि ॥ १६ ॥

द्रौपद्युवाच ।

आर्तयैतन्मया भीम कृतं बाष्पविमोक्षणम् ।
सहेयं तानि दुःखानि न राजानमुपालभे ॥ १७ ॥
विमुक्तेन अतीतेन भीमसेन महाबल ।
प्रत्यासन्नस्य कालस्य दुःखस्यानन्तरो भव ॥ १८ ॥

15 *a* ADFGHM रूपवत्य । AKM पतिव्रता ।
*b* L अति° for अपि । FM सुश्रोणि for कल्याणि । N समुदिता ।

16 *a* Edns CG मा दीर्घ क्षम काल त्व DHKN सा दीर्घ क्षम काल त्व L सुदीर्घ क्षिपतः कालो BE अदीर्घ क्षम काल त्व A किंचित्काल समाश्वस्य । Edns CG अर्ध च A अध्यर्ध° BE अर्धार्ध M अन्वर्ध° । L मासार्धसहसा व्रतम् । F समतम् ।
*b* Edns CBEGKLN राज्ञां for राज्ञो । D राज्ञि । DM भविष्यति ।

17 *a* BE महा for मया । Edns CGHK °प्रमोचनम् ABEL प्रमोक्षणम् ।
*b* Edns BCDEFGHKLMN अपारयन्त्या for सहेयं तानि । B °मुपा° ।

18 *a* Edns ACDGHKL किमुक्ते° । All except B add वि before अती° । L पुना २ for महाबल । *b* All except M प्रत्युपस्थितकालस्य । Edns ABCDEG HKLN कार्यस्य for दुःखस्य । L अनुत्तरः for अनन्तर. ।

---

15 *a* SG, ST, SA कीर्तितास्ते मया नार्य ।

16 *a* SK, SG, SA मा दीर्घ क्षम काल त्वम् । ( SG, SA सा for मा ) ST अल्प क्षमस्व वै काल । S. cl. त्रिंशद्रात्रमनिंदिते ।
*b* SK, SG, SA राज्ञां ।

17 *a* SK, ST आर्तप्रलापा कौंतेय SG मूर्तं प्रलापः° SA आर्त प्रलापात्° for आर्तयेतन्मयाभीम । ST महा for मया । S. cl. reads न राजानमुपालभे for $a^2$.
*b* SK अपारयन्त्या दुःखानि कृत बाष्पप्रमोचनम् । SG, ST, SA व्यतीत कथयित्वा किं भीमसेन महाबल ।

18 *a* S. cl किमुक्तेन व्यतीतेन ।
*b* S. cl. प्रत्युपस्थितकालस्य । SG, ST, SK कार्य for दुःख । SA °स्यानिकरो ।

ममेह कैकयसुता भीम रूपाभिशङ्कया ।
नित्यमुद्विजते राज्ञि इति मे वर्तते मतिः ॥ १९ ॥
तस्या विदित्वा तं भावं नाहं स्वस्था कदाचन ।
कीचको हि स्वयं दृष्ट्वा सदा प्रार्थयते हि माम् ॥ २० ॥
तदहं कुपिता भीम पुनः कोपं नियम्य च ।
अब्रुवं कामसंमूढमात्मानं रक्ष कीचक ॥ २१ ॥
गन्धर्वाणामहं भार्या पञ्चानां सततं प्रिया ।
ते त्वां निहन्युर्दुर्धर्षाः शूराः साहसकारिणम् ॥ २२ ॥

19 *a* KM एव for इह । F मामेव । H राज्ञी कैकेयी Edns CD भीम कैकेया BE LN कैकेयी भाम I GK कैकया भाम M कैकया भाम for कैकयसुता । Edns BCDEFGLMN रूपाभिभवशङ्कया । K नियोगपरिशङ्किता ।
*b* H उद्विजते । Edns ACGHLN राजा I DM राज्ञ. for राज्ञि । Edns CDGHN कथं नेयादिमामिति A कथमायाति मामिति BE कथं नेयादिमामिह K कथमेनामितावये L कथं नेमां व्रजदिति for इति मे &c
20 *a* N त्व for त । Edns BCDEI GKLMN स्वयं चानृतदर्शनः for नाहं &c
*b* Edns BCDEI GHKLM अयं महुरात्मा N ग्य मद्रेष्णा मा for हि स्वयं दृष्ट्वा । M पार्थितो । BE हि मा ।
21 *a* Edns BCDEFGKLMN तमहं । B वा for च ।
*b* L तमहं मूढं for कामसमूढम् । D कीचक ।
22 *a* B आर्या for भार्या । All except A & M महिषी for सततम् । H तथा B प्रिय ।
*b* A त्वा M त्व । Edns CDL कुपिता AB दुर्धर्षी । Edns ACDFGHL MN °कारिण ।

---

19 *a* S cl ममेह भीम कैकेयी रूपाद्धि भयशङ्कया । ( v ls S MSS ममेव । ST कैकेया ।
*b* ST राज्ञी SK, SA, SG राजा । S. cl. कथं नया ( ST मि ) दिमामिति for इति मे &c
20 *a* S. cl स्वयं चानृत ( ST तु ) दर्शनं for नाहं स्वस्था &c.
*b* SK अपि च दुरात्मा S MSS अपि हि दुरात्मा for हि स्वयं दृष्ट्वा । S cl पुन for सदा SG प्रार्थयनाह ST, SA[1] प्यतेह SK प्यत च ।
21 *a* SK, SG, ST, SA[2] तमहं ।
*b* SA[2] कीचकम् ।
22 *a* S cl महिषी for सततम् ।
*b* SA कुपिता for दुर्धर्षा । S cl. कारिण ।

तद्दृष्ट्वा महदाश्चर्यं नरा नार्यश्च संगताः ।
विस्मयं परमं जग्मुर्नोचुः किंचन भारत ॥ ३० ॥

इति विराटपर्वणि कीचकवधे कीचकभ्रातृवधो नाम
द्वाविंशोऽध्यायः ॥ २२ ॥

---

## ॥ त्रयोविंशोऽध्यायः ॥

वैशंपायन उवाच ।

ते दृष्ट्वा निहतान्सूतान्गत्वा राज्ञे न्यवेदयन् ।
गन्धर्वैर्निहता राजन्सूतपुत्राः परंशताः ॥ १ ॥
यथा वज्रेण वै दीर्णं पर्वतस्य महच्छिरः ।
विनिकीर्णं प्रदृश्येत तथा सूता महीतले ॥ २ ॥

30 *a* BE तं for तद् । B निहतं तत्र for महदाश्चर्यम् ।
*b* Edns BCEFGHKLN गत्वा for जग्मुः । A om. v.

* * * * *

XXIII. 1 *a* N तान् for ते । L सहितान् for निहतान् । Edns CDGKLN राज्ञे गत्वा ।
*b* E सुतः पुत्राः । Edns CGN महाबलाः H शतानीकाः BEL परंतपाः for परंशताः ।
A omits the first 22 verses and begins with बृहन्नडापि कल्याणि v. 23.

2 *b* Edns CG व्यतिकीर्णाः DEKN विनिकीर्णाः H विनाकीर्णम् । Edns CDGK LMN प्रदृश्यन्ते ।

---

30 *a* S. cl. नागराः for संगताः ।
*b* S. cl. गत्वा for जग्मुः ।

* * * *

XXIII. 1 *a* S. cl. राज्ञे गत्वा । SK ते दृष्ट्वा निहतान्सूतान्भीमसेनेन भारत । कीचकाश्च महाः . सर्वे राज्ञे गत्वा न्यवेदयन् ।
*b* SK गन्धर्वैर्हताः । SK, SG परंतप SA[1] ST परं शतम् SA[2] शतानथ ।

2 *a* SK दीर्णं वै SG, ST वै भिन्नं SA वै छिन्नं ।
*b* SK, SG, ST विनिकीर्णाः प्रदृश्यते ।

सैरन्ध्री च विमुक्ता सा पुनरायाति ते गृहम् ।
सर्वं संशयितं राजन्नगरं ते भविष्यति ॥ ३ ॥
तथारूपा हि सैरन्ध्री गन्धर्वाश्च महाबलाः ।
पुंसामिष्टश्च विषयो मैथुनाय न संशयः ॥ ४ ॥
यथा सैरन्ध्रिरूपेण न ते राजन्निदं पुरम् ।
विनाशमेति वै क्षिप्रं तथा नीतिर्विधीयताम् ॥ ५ ॥
तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः ।
अब्रवीत्परमा तेषां सूतानां क्रियतां क्रिया ॥ ६ ॥
एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ।
दह्यंतां कीचकाः शीघ्रमेधैर्गन्धैश्च सर्वशः ॥ ७ ॥

3 *a* LMN विनिर्मुक्ता Edns CFGHK विमुक्तासौ ।
*b* D संशयितुं । H राज ।
4 *a* Edns BCEFGLM यथारूपा । Edns DGH च for हि ।
5 *a* Edns GHKLMN सैरंध्रिदोषेण । D ते न for न ते । C पुरा ।
*b* D एष्यति for एति वै । B शीघ्रम् for क्षिप्रम् । L क्षिप्रं वै ।
6 *b* FM परमाम् L रूपया *Edns* BCDEGHK क्रियताम् *for* परमा । Edns BCDEFGHKMN एषाम् for तेषाम् । Edn[2] K परम BECG परमा HL परमाः D Edn[1] चरमा N चरम for क्रियताम् । HLM क्रियाः for क्रिया ।
7 *a* BE सुसमृद्धे ।
*b* BE दह्यनो for दह्यंताम् । D कीचकः H कीचकम् । Edns BCEGKLN रत्नैः D रत्नैः H सर्वं for एधैः ।

---

3 *a* SK, SA, SG चापि मुक्ता सा ST चापि निर्मुक्तौ ।
4 *a* ST अपि for तथा । SG, ST च for हि ।
5 *a* SA[1] तथा for यथा । SK दोषेण SG, ST, SA येनेन for रूपेण । S. cl. नेदं राजन् पुरं तव ।
*b* SK, SA, SG साधु ST पाप for नीतिः ।
Before v. 6 SA[1], SK add—वैशं॰ ।
6 *a* ST वाक्यमनमर्थान् for वाहिनीपतिः ।
*b* SK, SG, SA क्रियतामेषाम् for परमा तेषाम् । ST क्रियतां कामनेनेषाम् । SK SG अस्त SA परम ST परमा for क्रियताम् ।
7 *a* ST एतस्मिन् ।
*b* S. cl. सर्वे for शीघ्रम् । SK, SG, SA सर्वं ST रत्नैः for एधैः ।

सुदेष्णां चाब्रवीद्राजा महिषीं जातसाध्वसः ।
सैरन्ध्रीमागतां ब्रूहि ममैव वचनादिदम् ॥ ८ ॥
गच्छ सैरन्ध्रि भद्रं ते यथाकामं चराबले ।
राजा बिभेति सुश्रोणि गन्धर्वेभ्यः पराभवन् ॥ ९ ॥
न च त्वामुत्सहेद्वक्तुं स्वयं गन्धर्वशङ्कितः ।
स्त्रियस्त्वदोपास्तद्वक्तुमतस्त्वां प्रब्रवीम्यहम् ॥ १० ॥

वैशंपायन उवाच ।

अथ मुक्तभया कृष्णा सूतपुत्रान्निरस्य च ।
रक्षिता भीमसेनेन जगाम नगरं प्रति ॥ ११ ॥

8 *a* Edns CGHKL omit च ।
*b* Edns CFGKLMN ब्रूयाः D ब्रूयात् for ब्रूहि । M वचनादिकम् ।
9 *a* Edns BCEGHMN वरानने K वराबले for चराबले ।
*b* Edns BCDEGHKLN बिभेति राजा M राजा बिभेमि । BEN सैरन्ध्रि for सुश्रोणि । Edns BDEFGHKLN पराभवात् for पराभवन् ।
10 *a* Edns BCDEGHKL हि for च । Edns CDGHKL उत्सहे । N उत्सहते and om. च । Edns BDEGKLN गन्धर्वरक्षिताम् C गन्धर्वरक्षितां for गन्धर्वशंकितः ।
*b* Edns CGHN स्त्रियः । Edns GN अदोपस्ताम् CDK अदोपास्त्वाम् for अदोपास्त° । H अदोपास्त्वामब्रवीम्यहम् ।
11 *a* Edns BCEFGHKLMN मुक्ता भयात् ।
*b* All except M read मोक्षिता for रक्षिता ।

---

8 *a* SA² संभ्रमः SA¹ साध्वसाम् ।
*b* S. cl. ब्रूयाः for ब्रूहि । S. cl. इह for इदम् ।
9 *a* S. cl. अधुना for अबले ।
*b* SK, ST, SG बिभेति राजा सैरन्ध्रि । SA राजा बिभेति सैरन्ध्रि । SK, ST, SA पराभवात् SG पराभवम् ।
10 *a* S. cl. न हि तामुत्सहे for न च त्वामुत्सहेत् । S. cl. °रक्षिताम् for °शङ्कितः ।
*b* SK स्त्रियास्त्वदोषस्ताम् SA¹ स्त्रियस्त्वदोषास्ताम् । SA², SG, तां ST त्वाम् for तत् ।
11 *a* SK, SG, ST मुक्ता भयात् SA कृष्णा भयान्मुक्ता । SG, ST तु for च ।
*b* S. cl. मोक्षिता for रक्षिता ।

त्रासितेव मृगी बाला शार्दूलेन मनस्विनी ।
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ॥ १२ ॥
तां दृष्ट्वा पुरुषा राजन्प्राद्रवन्त दिशोदिशः ।
गन्धर्वाणां भयात्त्रस्ताः केचिन्नेत्राण्यमीलयन् ॥ १३ ॥
ततो महानसद्वारि भीमसेनमवस्थितम् ।
ददर्श राजन्पाञ्चाली यथा मत्तं महाद्विपम् ॥ १४ ॥
तं विस्मयन्ती शनकैरिदं वचनमब्रवीत् ।
नमो गन्धर्वराजाय येनास्मि परिरक्षिता ॥ १५ ॥

12 *a* M शंकिता for त्रासिता ।
*b* KL च for सा ।

13 *a* FM द्रुतात् for राजन् । H प्रद्रवन्ति L प्राद्रवन्ति । Edns BCDGHKN दृशा for second दिशः ।
*b* D गन्धर्वभयवित्रस्ताः । Edns CFGHKLMN भयत्रस्ताः । Edns GKL दृष्ट्वा BCDEH दृशः N दृशिम् for नेत्राणि । Edns BCDEGHKLN न्यमीलयन् ।

14 *b* L महागजम् ।

15 *a* Edns BDEGHKLN संज्ञाभिरिदमब्रवीत् ।
*b* Edns and MSS except D गन्धर्वराजाय नमः । Edn[1] BDEK परिमोक्षिता Edn[2] FGHM परिमोचिता । C omits this verse.

---

12 *a* SG शार्दूलेव ।
*b* S. cl. सा तु गात्राणि वासश्च । S. cl. प्रविवेश ह for सलिलेन सा ।

13 *a* SA प्राद्रवन्ति । S. cl. दशा for दिशः ।
*b* SK, SA, ST भयत्रस्ताः । SA[1] केपि for केचित् । SK, ST, SG दृशि न्यमीलयन् । SA दृशीर्न्यमीलयन् ।

14 *a* SK, ST, SG °द्वारे ।
*b* ST मत्तम् for राजन् । ST राजन् for मत्तम् ।

15 *a* SK, ST सोपहासं तु SA, SG सावहासं तु for तं विस्मयन्ती । SK, SG, ST संज्ञाभिरिदम् SA[2] संज्ञया चेदम् SA[1] सज्ञानुरिदम् for इदं वचनम् ।
*b* SA, SG गन्धर्वराजाय नमो । SA[1] प्रति for परि । SK, SA मोक्षिता for रक्षिता ।

भीमसेन उवाच।

ये पुरे विचरन्तीह पुरुषा वशवर्तिनः।
तस्यास्ते वचनं श्रुत्वा अनृणा विचरन्त्युत ॥ १६ ॥

वैशंपायन उवाच।

ततः सा नर्तनागारे धनंजयमपश्यत।
राज्ञः कन्यां विराटस्य नर्तयानं महाभुजम् ॥ १७ ॥
ततस्तां नर्तनागाराद्विनिष्क्रम्य सहार्जुनाः।
कन्या ददृशुरायान्तीं कृष्णां क्लिष्टामनागसम् ॥ १८ ॥

16 *a* Edns FGHKLM पुरा D पुरीम्।
*b* D यस्याः for तस्याः। Edn² N ह्यनृणा। Edn¹ BDEH त्वनृणा। Edn¹ K विहरन्ति Edn² G विहरन्तु N विचरन्तु। Edns G अतः H च N इतः for उत। C omits this v.

17 *a* N नर्तकागारे। *b* Edns DFGHKLMN कन्याः for कन्याम्। FM मनस्विनम् for महाभुजम्। C omits this verse.

18 *a* Edns BDEGHKLN ताः for तां। N नर्तकागारात्। BE महाजन्माः। C omits this line.
*b* C कन्यां D आयान्ती L गत्वा for कन्याः। C आयान्ती D कन्याः for आयान्तीम्। Edns H क्लिष्टां कृष्णाम् BE तान्तु कृष्णाम् for कृष्णां क्लिष्टाम्। CDFM अनागसाम्।

---

16 *a* SK पुरा SA, SG, ST यस्याः for पुरे।
*b* SA² ते तस्याः SA¹ तस्यास्तद्। S. cl. ह्यनृणाः। SK विहरन्वितः।
SA¹ omits वैशंपायन उवाच।

17 *b* SK, SG, ST कन्या। S. cl. नर्तयन्तम्।

18 *a* SG सा SK, SA ताः for ताम्।
*b* SA, SG, ST अनागसाम्।

कन्या ऊचुः ।
दिष्ट्या सैरन्ध्रि मुक्तासि दिष्ट्या त्वं पुनरागता ।
दिष्ट्या विनिहताः सूता ये त्वां क्लिश्यन्त्यनागसम् ॥ १९ ॥
बृहन्नलोवाच ।
कथं सैरन्ध्रि मुक्तासि कथं सूताश्च ते हताः ।
इच्छामि वै तव श्रोतुं सर्वमेव यथातथम् ॥ २० ॥
सैरन्ध्र्युवाच ।
बृहन्नले किं तु तव सैरन्ध्र्याः कार्यमद्य वै ।
या त्वं वससि कल्याणि सदा कन्यापुरे सुखम् ॥ २१ ॥
न हि दुःखं समाप्नोषि सैरन्ध्री यदुपाश्नुते ।
तेन मां दुःखितामेवं पृच्छसि प्रहसन्निव ॥ २२ ॥

19 *a* Edns BCDEGHKLN असि for त्वम् ।
*b* D च निहताः F विनिहिता for विनिहता । D ते तु for सूता. । B यत् for ये । L हिंसन्ति for क्लिश्यन्ति । D अनागमाम् ।
20 *a* BE दिष्ट्यासि पुनरागता । Edns CDFHKLN पापा for सूताः ।
*b* L तद् for तव । M एतत् for सर्वम् । DFN एतत् for एव ।
21 *a* Edns BEHN नु for तु । C तया for तव । Edns BCDEGHKLMN सैरन्ध्या ।
*b* B यत् D क for या । G वसति ।
22 *a* L त्व for हि । DMN Edn[1] अवाप्नोषि K विजानासि for समाप्नोषि । C तया for सैरन्ध्री । L उपास्नुते for उपाश्नुते ।
*b* CL दुःखितां for दुःखिताम् । Edns CD एव for एवं । Edns CFGHKMN पृच्छसे ।

---

19 *a* S cl असि for त्वम् ।
*b* SK, SA च for वि । SA[2] मम्यति for क्लिश्यन्ति । SA, SG, ST अनागसीम् ।
20 *a* S. cl पापाः for सूता ।
*b* SK, SG, SA ते कथाम् ST ते कथा for वै तव । S cl. कथयस्व for सर्वमेव ।
21 *a* S cl. किन्तु । SK, SG सैरन्ध्या ।
*b* SK रमसि । SG तदा for सदा ।
22 *a* ST त्व दुःखमाप्नोषि SG, SA तद्दुःखमाप्नोषि ।
*b* SA[2] केन मां SA[1] मेन तां SG ते मां त्व for तेन माम् । SA[1] एव । SA, SG पृच्छसे । ST प्रहसन्निव पृच्छसि । SK प्रहसन्यसि ।

बृहन्नलोवाच ।

बृहन्नलापि कल्याणि दुःखमाप्नोत्यनुत्तमम् ।
तिर्यग्योनिगतां बाले न चैनामवबुध्यसे ॥ २३ ॥
त्वया सहोषिता नित्यं त्वं च सर्वेष्वदूषिता ।
क्लिश्यन्त्यां त्वयि सुश्रोणि को नु दुःखं न संवसेत् ॥ २४ ॥
न च केनचिदत्यन्तं कस्यचिद्धृदयं क्वचित् ।
वेदितुं शक्यतेऽन्येन तेन मां नावबुध्यसे ॥ २५ ॥

23 *a* A omits बृहन्नला उवाच । BCE बृहन्नटा । F बृहद्वलाँ FM आप्नोमि ।
*b* Edns BCDEFGHKMN °गता for °गताम् । L नै for न । CG एताम् for एनाम् । N अवबुध्यते ।

24 *a* Edns ABCDEGKN चास्मि L त्वस्मि for नित्यम् । H omits त्व च । Edns GN सर्वैः सहोषिता A सर्वेष्वदूषिका BE सर्वैःसहोषिता C सर्वैः सहोषितम् D सर्वेषु दुःखिता F सर्वेषु दूषिका H सर्वे सुदुःखिताः L सर्वेष्वदूषिताः M सर्वेषु दूषिकाः for सर्वेष्वदूषिता ।
*b* L क्लिश्यन्ताम् M क्लिश्यं त्वां for क्लिश्यन्त्यां । BE तव for त्वयि । L न for नु । Edns ABCDEFGHLMN चिन्तयेत् for संवसेत् ।

25 *a* K कस्य for न । Edns ABDGLNK[2] तु C नु K वै for च । K हृदयम् for केनचित् । K केन for अत्यतम् । K वेदितुम् for कस्यचित् । K reads first line as :-कस्य वै हृदयं केन वेदितुं परिशक्यते ।
*b* A विदितुम् । Edns CG नूनम् HLN भद्रे K[1] अन्यत्र for अन्येन । K reads the first part of *b* as :—अज्ञान तव कल्याणि । HLN येन for तेन । FM मा H एतद् for माम् । H अभिभाषसे ।

---

23 *a* S. cl. आप्नोत्यनन्तकम् ।
*b* SK, SA गता । SK इवेयम् SA[2] भद्रे for बाले ।

24 *a* ST त्वयापि न सहास्मि त्वम् for त्वया सहोषितानित्यम् । SK चास्मि for नित्यम् । ST न च सर्वे स्म दूषिताः SK त्वं च सर्वैः सहोषिता ।
*b* ST कल्याणि for सुश्रोणि । SK, ST न चिंतयेत् । SG, SA omit v. 24,

25 *a* SK, SG तु ST नु for च । ST अन्यस्य for अत्यन्तम् ।
*b* SK, SG नूनम् ST भद्रे for अन्येन । SG, SA omit v. 25.

वैशंपायन उवाच।

ततः सहैव कन्याभिर्द्रौपदी राजवेश्मनि।
प्राविशच्च सुदेष्णायाः समीपमपलायनी ॥ २६ ॥
तामब्रवीद्राजपत्नी विराटवचनात्ततः।
सैरन्ध्रि गम्यतां शीघ्रं यत्र कामयसे रतिम् ॥ २७ ॥
राजा बिभेति भद्रं ते गन्धर्वेभ्यः पराभवात्।
त्वं चापि तरुणी सुभ्रू रूपेणाप्रतिमा भुवि ॥ २८ ॥

सैरन्ध्र्युवाच।

त्रयोदशाहमात्रं तु राजा क्षमतु भामिनि।
कृतकृत्या भविष्यन्ति गन्धर्वास्ते न संशयः ॥ २९ ॥

26 *a* Edns CGHKN राजवेश्म तत् L राजसमद्रि for राजवेश्मनि।
*b* All except F read प्रविवेश for प्राविशच्च। Edns BCEGMN उपगामिनी AKHL अपलायिनी F अपलापिनी for अपलायनी।

27 *a* Edns BEFGHKLMN राजपुत्री A राजपुत्रीम् for राजपत्नी। A विराटनगरात् for विराटवचनात्। Edns BCDEGHKLN इदम् for ततः।
*b* D सैरन्ध्री। BEL शीघ्र for शीघ्रम्। Edns ABCEFGHKMN गतिम् for रतिम्।

28 *a* Edns CG ते भद्रे D तु श्रोणि for भद्रं ते। L पराक्रमात्।
*b* Edns ACDGHKLMN सुभ्रु BEF सुभ्रू for सुभ्रूः। C अप्रतिमा for अप्रतिमा।

29 *a* Edns BDEFGKLMN मे for तु। Edn[2] DG क्षम्यतु CKN क्षाम्यतु L क्षमितु Edn[1] क्षाम्यति for क्षमतु। Edns KM मानिनी L अर्हति N भाविनी for भामिनि।
*b* H गधर्वाः।

---

26 *a* S. cl. राजवेश्म तत्।
*b* S cl. प्रविवेश for प्राविशच्च। SK अनसूयिनी ST, SG, SA अपगामिनी।

27 *a* SA. राजपुत्री। S. cl. इदम् for ततः। SG adds सुदेष्णोवाच before 27 *b*.
*b* SA, SG, ST तत्र for शीघ्रम्। S. cl. गतिम् for रतिम्।

28 *a* S. cl. सैरन्ध्रि for भद्रं ते। SA[1] °जयात् for °भवात्।
*b* SA सुभ्रु।
S. cl. except SA omit सैरन्ध्र्युवाच।

29 *a* SK क्षाम्यतु।

ततो मामपनेष्यन्ति करिष्यन्ति तव प्रियम् ।
ध्रुवं हि श्रेयसा राजा योक्ष्यते सह बान्धवैः ॥ ३० ॥

इति विराटपर्वणि कीचकवधे कीचकसंस्कारो
नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

## ॥ चतुर्विंशोऽध्यायः ॥

वैशंपायन उवाच ।

कीचकस्य तु घातेन सानुजस्य विशांपते ।
अत्याहितं चिन्तयित्वा विस्मयन्त पृथग्जनाः ॥ १ ॥
तस्मिन्पुरे जनपदे संजल्पोऽभूच्च संशयः ।
असौ यद्वल्लभो राज्ञो महासत्त्वश्च कीचकः ॥ २ ॥

30 *a* Edns BCDEGN उपनेष्यन्ति । HK ततस्ते मां तु नेष्यन्ति L ततस्ते मां च नेष्यन्ति । H करिष्यति K भविष्यति for करिष्यन्ति । Edns ABCDFGHKM च ते L च मे for तव । H प्रीयम् ।
*b* Edns ABCDEGHKLN च for हि । A श्रेयसे for श्रेयसा । A योज्यते FL योक्षते for योक्ष्यते ।

* * * * *

XXIV. 1 *a* H च K नि for तु । K पातेन for घातेन ।
*b* M इत्याहितं । K अद्भुतं चिन्तयित्वा तु । C विषं पीत्वा for चिन्तयित्वा । Edns ABCEGHLN व्यस्मयन्त ।
2 *a* D जने for पुरे । K जानपदाः for जनपदे । D स जल्पो N संजजल्पुः । Edn² CFGKL संघशः Edn¹ ABDEK² N सर्वशः for संशयः ।
*b* Edns BCDHKLN शौर्यात् हि A शौर्यात् च G शौर्यात् तु for असौ यद् । A महत्सत्वः L महासत्वस्य for महासत्वः Edns M सः for च ।

---

30 *a* SK उप ST अपि for अप । SG, SK, SA च ते for तव ।
*b* ST द्रुतम् for ध्रुवम् । S. cl. च for हि । SG, ST, SA बन्धुभिः for बांधवैः ।

* * * * *

XXIV. 1 *a* SK वधं घोरं SA² निपातेन ।
*b* SG अत्याहितः ST अत्याश्चर्यं । ST, SK, SA व्यस्मयन्त SG व्यस्मयन्तः ।
2 *a* S. cl. जजल्पुश्चापि for संजल्पोऽभूच्च । SK सर्वशः ST, SA संगताः SG संघशः for संशयः ।
*b* S. cl. वीर्यवान्दयितः for असौ यद्वल्लभः । S. cl. दर्पान्वितश्च for महासत्त्वश्च ।

आसीत्प्रहर्ता च नृणां दारामर्षी सुदुर्मतिः।
स हतः खलु पापात्मा गन्धर्वैर्दुष्टपौरुषः॥ ३॥

इत्यजल्पन्नरा राजन्परानीकविशातनम्।
देशे देशे मनुष्याणां कीचकं दुष्प्रधर्षणम्॥ ४॥

अथ ये धार्तराष्ट्रेण प्रयुक्ता वै बहिश्चराः।
मृगयित्वा बहून्ग्रामान्राष्ट्राणि विविधानि च॥ ५॥

3 *a* K प्रहर्ताम् for प्रहर्ता च। Edns ABCEFGLN सैन्यानां K नृणां for च नृणाम्। D दारामर्षी H दारामर्शी K दारानर्षी for दारामर्षी। ACFGHK²MN च K स for सु।
*b* H दुरात्मा for पापात्मा। Edns ABCDEGHKLN दुष्पूरुषः।

4 *a* N आजल्पन्। Edns BCDEGH KN महाराज AFN महाबाहो for नरा राजन्। Edns ABCDEGKN विनाशनम् L निदेशनम् for विशातनम्।
*b* Edns CDGHKLN मनुष्याश्च। ABCDEFG दुःप्रधर्षणम् K दुष्प्रधर्षणम् M दुःप्रधर्षिणाम्। N has वैशंपायन उवाच before अथ &c.

5 *a* Edns BCDEGHKN वै L तैः for ये। L धार्तराष्ट्राणाम्। Edns BCDEG HLN ये for वै। K ये प्रमुक्ता for प्रयुक्ता वै। L च ते चराः for बहिश्चराः।
*b* BELN देशान्। N देशांश्च। Edns CDEGHKN नगराणि।

---

3 *a* S. cl. चमूनां for च नृणां। S. cl. दारदर्शी for दारामर्षी। SK, SA² ST च SA¹ तु SG च for सु°।
*b* SG omits 'ह' in हतः। S. cl. किल गन्धर्वैः for खलु पापात्मा। S. cl. सैरन्ध्रीकारणान्निशि for गन्धर्वैर्दुष्टपौरुष।

4 *a* S. cl. महाराज for नरा राजन्। SK कीचकस्य SG, ST, SA कीचकानां for परानीक। SK विनाशनं SA वध मरण् SG महद्युध ST महावध for विशातनं।
*b* S. cl. मनुष्याश्च for मनुष्याणां। SK, SG, ST विस्मिताः कीचके हते SA विस्मयात् कीचके हते for कीचकं दुष्प्रधर्षणम्।

5 *a* SK वै SG, ST ते for ये। SK पे for वै। SG, ST, SA सहस्रशः for वै बहिश्चराः।
*b* S. cl. देशान् for ग्रामान्। SK, SA, ST ग्रामांश्च SG ग्रामाणि for राष्ट्राणि। S. cl. नगराणि for विविधानि।

संविधाय यथादेशं यथादृष्टं प्रदर्शनम्।
कृतचित्ता न्यवर्तन्त ते वै नागपुरं प्रति ॥ ६ ॥
तत्र दृष्ट्वा च कौरव्यं राजानं धृतराष्ट्रजम्।
द्रोणकर्णकृपैः सार्धं भीष्मेण च महात्मना ॥ ७ ॥
संगतं भ्रातृभिश्चैव त्रिगर्तैश्च महारथैः।
दुर्योधनं सभामध्ये आसीनमिदमब्रुवन् ॥ ८ ॥

चरा ऊचुः।

कृतोऽस्माभिः परो यत्नस्तेषामन्वेषणे सदा।
पाण्डवानां मनुष्येन्द्र तस्मिन्महति कानने ॥ ९ ॥
निर्जने मृगसंकीर्णे नानाद्रुमलतावृते।
लताप्रतानबहुले नानागुल्मशतावृते ॥ १० ॥

6 *a* Edns ABEFGHLM यथा दृष्ट यथादेशप्रदर्शनम्। G °तथादेश°। K यथादिष्टं। यथा देशप्रवेशनम्। M °प्रदर्शिनम् N प्रदर्शितम्।

*b* Edns A[2]DGKL कृतकृत्याः BEHMN कृतचिन्ताः। Edns G ते चरा नगरं प्रति। BDE चरा H येन KN ते च for ते वै। L यथानाम यथाश्रुतम् for ते वै &. C omits this verse.

7 *a* Edns ABDEGHLN तु for च। All except A read राजानं कौरव्यम्। C omits this verse.

8 *a* Edns BCDEGHKLN अपि for एव। C त्रिगर्तैः।

*b* N सभामध्यम्। AK अब्रुवीत् FM अब्रवीत् for अब्रुवन्।

9 *a* G पर for परः। C तदा for सदा।

10 *a* K व्याघ्रसंकीर्णे। Edns ACGL °लताकुले K °लतायुते। N नाना द्रुमगणावृते

*b* Edns CDGN नानागुल्मसमावृते BEK नानागुल्मलतावृते। L °समायुते।

---

6 *a* SK यथादिष्ट SG यथादृष्टि SA, ST यथादृष्ट for यथादेश। S. cl. यथादेशं for यथादृष्ट। S. cl. प्रदर्शकाः for प्रदर्शन।

*b* S. cl. कृतसंकेतनाः सर्वे न्यवर्तन्त पुरं ततः (ST संकेतकाः। पुरात्ततः।)

7 *a* S. cl. तु राजान for च कौरव्य। कौरव्यं for राजान।

8 *a* SK, SG, ST सार्धं SA चापि for चैव।

9 *a* SK omits चरा ऊचुः। SA, ST, SG चाराः।

10 *a* S. cl. व्यालसंकीर्णे। SK नानाभ्रमरसंकुले ST, SA[2] नानाद्रुमलतायुते SG, SA[1] नानाद्रुमलताकुले।

*b* S. cl. °गहने for °बहुले। SK, ST, SG, SA[2] °समावृते SA[1] °लतावृते for °शतावृते।

न च विद्मो गता येन पार्थाः स्युर्दृढविक्रमाः ।
मार्गमाणाः परं न्यासं तेषु तेषु तथा तथा ॥ ११ ॥
गिरिकूटेषु शृङ्गेषु नाना जनपदेषु च ।
नानाकीर्णेषु सत्वेषु खर्वटेषु पुरेषु च ॥ १२ ॥
राजेन्द्र बहुशोऽन्विष्टा नैव विद्मश्च पाण्डवान् ।
अत्यन्तभावं नष्टास्ते भद्रं तुभ्यं नरर्षभ ॥ १३ ॥

11 *a* Edns BCDEG सुदृढविक्रमाः K स्मदृढविक्रमाः L तेमितविक्रमाः N शत्रु-निबर्हणाः for स्युर्दृढविक्रमाः ।
*b* Edns ACDFGHKLMN पदन्यासं for परं न्यासम् ।

12 *a* Edns ACDFGHKMN तुंगेषु for शृंगेषु ।
*b* Edns ACGHKLN जनाकीर्णेषु E जन्धाकीर्णेषु for नानाकीर्णेषु । Edns ACDFGKMN देशेषु HL सर्वेषु for सत्वेषु । A ग्रामेषु च Edn[1] BCEG कटकेषु D सर्वेषु च FMN कंटकेषु HL पर्वतेषु । DGHKL परेषु for पुरेषु ।

13 *a* Edns BCDEGKLN नरेंद्र H जनेंद्र for राजेन्द्र । L न विद्मः क नु ते गताः for नैव विद्मश्च पांडवान् ।
*b* Edns BCEGN अत्यंतं वा H अत्यंतं तु for अत्यतभावम् । Edns CGH विनष्टास्ते BE विनष्टेषु N प्रणष्टास्ते for नष्टास्ते । L नराधिप for नरर्षभ ।

---

11 *a* SA, SG विद्म गतिं तेषां ST विद्मो गतिं तेषां for विद्मो गता येन । SK सुदृढ° for स्युर्दृढ° । SG, ST, SA पाण्डवानामरिन्दम for पार्थाः स्युर्दृढविक्रमाः ।
*b* S. cl. पदन्यासं । आश्रमेषु वनेषु च for तेषु तेषु etc.

12 *a* SK, SG, ST, SA[1] नद्रेषु SA[2] दुर्गेषु for शृगेषु ।
*b* S. cl. जना° for नाना° । SK देशेषु SG, ST, SA सर्वेषु for सत्वेषु । ST कानकेषु पर्वेषु च । ST सन्वरेषु° SK, SA, SG पन्वरेषु° for खर्वटेषु° ।

13 *a* SG, SK नरेंद्र सहसा गवान् SA नरेन्द्र सहसा गतः ST देव मान् सहसा मद्यान् for राजेन्द्र बहुशोऽन्विष्टा । ST च for एव । SG चरणम for विद्मश्च । ST, SK, SA विद्म ।
*b* SK, ST अत्यंतादर्शनंगताः for अत्यन्तभावं नष्टास्ते । SA नरो for भावम् । ST नराधिप ।

वार्तामन्विष्यमाणाश्च रथानां रथिसत्तम ।
कंचित्कालं मनुष्येन्द्र सूतानामनुगा वयम् ॥ १४ ॥
मृगयित्वा यथान्यायं विदितार्थाः स्म तत्त्वतः ।
प्राप्ता द्वारवतीं सूता ऋते पार्थान्परंतप ॥ १५ ॥
न तत्र पाण्डवा राजन्नापि कृष्णा पतिव्रता ।
सर्वथा विप्रनष्टास्ते नृप्यस्व भरतर्षभ ॥ १६ ॥

14 *a* Edns GC वर्त्मन्यन्वेष्यमाणा वै । A °तु for च । L वर्त्मन्यन्विष्यमाणास्तु HKL वर्त्मान्यन्वेषमाणास्तु M वार्त्मान्यन्विष्यमाणास्तु for वार्तामन्विष्यमाणाश्च । Edns CG रथिनाम् N पार्थानाम् for रथानाम् । AFM रथसत्तमाः G राथिसुत्तम L रथिसत्तमः for रथिसत्तम ।

*b* Edn² ABCDEGHKLMN किंचित् । M अनुजा for अनुगाः ।

15 *a* Edns वेदितार्थाः CFM विदितार्थः । FLM च for स्म ।

*b* Edns CDEGHKLN विना पार्थैः A विना पार्थान् । LM °तपः ।

16 *a* Edns BCDEGH कृष्णा राजेंद्र for पांडवा राजन् । Edns CG पाडवाश्च K कृष्णा-चापि for नापि कृष्णा । Edns BEGHL महाव्रताः AFLM महाव्रता CD महारथाः for पतिव्रता ।

*b* Edns ABCDEFGHLM नमस्ते K भ्रष्टाश्च N दृप्यस्व for नृप्यस्व । A अस्तु नरर्षभ K पुरुषर्षभ L भरतर्षभः ।

---

14 *a* S. cl. वर्त्मन्यन्विच्छमानास्तु for वार्तामन्विष्यमाणाश्च । SG राजसत्तम ।

*b* SA किंचित् । SK, SA², SG, ST सूताननुगता for सूतानामनुगाः ।

15 *a* SA¹ बहून्देशान् for यथान्यायम् । SG विदितश्च न ST विदितार्थं च SK, SA विदितार्थाश्च ।

*b* SG, ST पार्थान् for सूताः । SK विना पार्थैः SG, ST ऋते सूताः for ऋते पार्थान् ।

16 *a* SK कृष्णा राजेन्द्र for पांडवा राजन् । SK पांडवाश्च महाव्रताः for नापि कृष्णा पतिव्रता। SA, ST महाव्रता SG महाप्रभो for पतिव्रता

*b* ST, SK एव for वि । SK, ST, SA नमस्ते for नृप्यस्व । SG omits this line.

न हि विद्मो गतिं तेषां वासं वापि कथंचन ।
पाण्डवानां प्रवृत्तिं वा विद्मः कर्माणि वा तथा ॥ १७ ॥
तन्नः शाधि मनुष्येन्द्र अत ऊर्ध्वं विशांपते ।
अन्वेषणं पाण्डवानां भूयः किं करवामहे ॥ १८ ॥
त्रिगर्ता निकृता येन बलेन महता नृप ।
सूतेन राज्ञो मत्स्यस्य कीचकेन पुनः पुनः ॥ १९ ॥
स हतः पातितः शेते गन्धर्वैर्निशि भारत ।
अदृश्यमानैर्दुष्टात्मा सह भ्रातृभिरप्युत ॥ २० ॥

17 *a* D वासः । DEL च N क for वा । Edns BCDEGHKLN महात्मनाम् for कथंचन ।
*b* Edns BCDEGL च for वा । Edns ABCEFHLN कर्माणि D कार्याणि G कर्मणि । N व for वा । All except D कृतम् for तथा ।
18 *a* Edns ACFGHKLMN स नः for तन्नः । D न ते संति for तन्नः । शाधि ।
*b* Edns ABCDEGHKLN अन्वेषणे । D भूप for भूयः । BDE करवाम ते for करवामहे ।
19 *a* Edns CDGHL येन त्रिगर्ता निहताः ABE येन त्रिगर्ता निकृताः ।
*b* Edn² CG बलीयसा A महात्मना BEHLN दुरात्मना for पुनः पुनः ।
20 *a* Edns CDGHKLN पतितः ।
*b* Edns CG भ्रातृभिः सह सोदरैः । All except K अच्युत for अप्युत ।

---

17 *a* SG च for हि । SG पाण्डवानां महात्मनाम् for वासं वापि कथंचन । SK, ST, SA omit this line.
*b* SG प्रवृत्तिः । SG कर्म चापि गुणान् for विद्मःकर्माणि वा । ST, SK, SA omit this line.
18 *a* S. cl. पुनः शाधि ।
*b* S. cl. अन्वेषणे ।
19 *a* SK, SG, ST येन त्रिगर्ता निहताः SA येन त्रिगर्ता निहताः । S. cl. बहुना for महता ।
*b* SA मात्स्यस्य । SG, ST महात्मना SA दुरात्मना SK बलीयसा for पुनः पुनः ।
20 *a* SK, SG, ST पतितः ।
*b* S. cl. read निहतो निशि गन्धर्वैर्दुरात्मा भ्रातृभिः सह । ( ST स हतः । )

प्रियमेतदुपश्रुत्य शत्रूणां तं पराभवम् ।
कृतकृत्यश्च कौरव्य विधत्स्व यदनन्तरम् ॥ २१ ॥

इति विराटपर्वणि गोहरणे चारप्रत्याचारो नाम
चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ।

वैशंपायन उवाच ।

ततो दुर्योधनो राजा श्रुत्वा तेषां वचस्तदा ।
चिरमन्तर्मना भूत्वा प्रत्युवाच सभासदः ॥ १ ॥
सुदुःखा खलु कार्याणां गतिर्वै ज्ञातुमन्ततः ।
तस्मात्सर्वे ह्युदीक्षध्वं क्व नु स्युः पाण्डवा गताः ॥ २ ॥

21 *a* Edns CDGH च BELN त्वम् for तम् ।
*b* Edn[1] कृतकृत्यं च । This Adh. is continued in K.

*　　*　　*　　*

XXV.1 *b* Edns CG ज्ञात्वा for श्रुत्वा । N तथा for तदा ।
2 *a* N गतिं । Edns ACDFGHKLMN विज्ञातुं ।
*d* Edns CG निरीक्षध्वं BE प्रतीक्षध्वं D अभ्युदीक्ष्यध्व K विनीक्षध्वं with सुदीक्षध्वं on the margin. AFLM न for नु । Edns CG ते for स्युः । line omitted in M.

---

21 *a* SG, SA[2] प्रियं तदुपसंश्रुत्य । SA[2] तावत् for एतत् । SK, SG, ST च SA[2] ते SA[1] तु for तम् ।
*b* ST अपि SG, SA तु for च ।

*　　*

XXV.1 *b* S. cl. इदमाह for प्रत्युवाच ।
2 *a* SG, ST, SA read दुर्योधनः ( उवाच ) before this v. SG, ST, SA अशक्या SK अशक्यम् for सुदुःखा । SK कार्यस्य । SK ~~ ~~ गतिम् ।
S. cl. ज्ञातुं हि तत्वतः for वै ज्ञातुमंततः ।
*b* S. cl. परीक्षध्वम् । ST ते for स्युः ।

अल्पावशिष्टं कालस्य गतं भूयिष्ठमन्ततः ।
तेषामज्ञातचर्याणामस्मिन्वर्षे त्रयोदशे ॥ ३ ॥

अस्य वर्षस्य शेषं वै व्यतीयुर्यदि पाण्डवाः ।
निवृत्तसमयाः पार्था महात्मानो महाबलाः ॥ ४ ॥

क्षरन्त इव नागेन्द्राः सर्पा आशीविषोपमाः ।
दुःखा भवेयुः संरब्धाः कौरवान्प्रति तत्क्षणम् ॥ ५ ॥

3 *a* Edns DGK गत । H वर्तने कुरुसत्तम L वर्तते कुरुसत्तमाः for गतं etc ।
*b* Edn[2] ABCEFGKMN °चर्यायाम् । N वर्षे ह्यस्मिन् ।

4 *a* BE तस्य for अस्य । Edns ABCLKN चेत् G च for वै । H omits वै ।
H चेतेयुः । Edns ABCEGHKLMN इह F इव for यदि ।
*b* all MSS except L read ते हि for पार्थाः । and also सत्यव्रतपरायणाः for महात्मानो महाबलाः ।

5 *a* AF रक्षन्त D स्फुरन्त । L जीमूता for नागेन्द्राः । Edns CLN सर्वे हि DK सर्वे च BE सर्व for सर्पाः ।
*b* ABDEM दुःखात् C दुःखं । AFM ते क्षणम् । Edns BCDEGHKLN ते ध्रुवं for तत्क्षणम् ।

---

3 *a* SA[1], SG, ST अल्पावशेषः SA[2] SK अल्पावशिष्टः । S. cl. कालस्तु । SK, ST गतो भूयिष्ट एव च ( ST तु ) SA, SG गतभूयिष्ट एव च for गतं भूयिष्टमन्ततः ।
*b* SK °चर्यायाम् ।

4 *a* SK, SA, SG अपि for अस्य । SG शेषश्चेत् । SA चेत् ST च SK ते for वै । SK, ST, SA इह SG इति for यदि ।
*b* SK, SA ते हि ST, SG तेपि for पार्थाः । S. cl. सत्यव्रतपरायणाः for महात्मानो &c.

5 *a* SG नागेन्द्रः । SG, ST, SK, SA[2] सर्वे ह्याशी° SA[1] सर्वे आशी° ।
*b* S. cl. दुःखात् । S. cl. ते ध्रुवम् for तत्क्षणम् ।

नदीकुञ्जेषु तीरेषु ग्रामेषु नगरेषु च ।
आश्रमेषु च पुण्येषु पर्वतेषु गुहासु च ॥ १२ ॥
अथाग्रजानन्तरजः पापभावानुरागिणम् ।
ज्येष्ठं दुःशासनस्तत्र भ्राता भ्रातरमब्रवीत् ॥ १३ ॥
येषु च प्रत्ययो राजंश्चारेषु मनुजर्षभ ।
एतच्च कर्णो यत्प्राह सर्वमिच्छामहे तथा ॥ १४ ॥
यथोद्दिष्टं चराः सर्वे विचिन्वन्तु ततस्ततः ।
एते चान्ये च भूयांसो देशोद्देशं यथाविधि ॥ १५ ॥

12 *a* L ⁰कुलेषु No तीरेषु for ⁰कुञ्जेषु । Edns BCEFGHLMN तीर्थेषु K ग्रामेषु for तीरेषु । L अरण्य for ग्रामेषु ।
*b* B अश्रमेषु । Edns BCEGHKL रम्येषु N सर्वेषु for पुण्येषु । v. omitted in D.
13 *a* Edns CG ⁰रागवान् D ⁰सारिणं H चारिणं BEM ⁰रागिणां N ⁰कारिणं ।
*b* DM दुःशासनं । B omits भ्राता ।
14 *a* Edns BCDEGHKLN नः A अस्ति for च । BDEL चरेषु । BCDEHL मनुजाधिप N मनुजेश्वर ।
*b* K एवं for एतद् । Edns ईहामहे AL इक्ष्यामहे BEFHKM ईक्षामहे D द्रक्ष्यामहे N वीक्ष्यामहे for इच्छामहे । AD यथा for तथा ।
15 *a* H यथादिष्टं । Edns BCDEFGHKLN मृगयन्तु । Edns CGH यतस्ततः ।
*b* N एतत् for एते । N अन्यत् for अन्ये । K भूयो वै for भूयासः । Edns BCEGKMN देशाद्देशं D देशो देशो G देशादेशं H देशदेशं L देशाद्देशा । FMN यथाविधिः ।

---

12 *a* SG, ST, SA ⁰कूलेषु for कुंजेषु । S. cl. तीर्थेषु for तीरेषु । ST, SG, SA[1] मजेषु SA[2] ह्रदेषु for ग्रामेषु ।
*b* S. cl. रम्येषु for पुण्येषु । SG, ST, SA वनेषु for गुहासु ।
SG, ST, SA adds वैशं before v. 13
13 *a* SA पापभावः सुदुर्मतिः SG, ST, SK भ्रातुः प्रियहिते रतः for पापभावानुरागिणम् ।
*b* SG भ्रातरं हार्दमब्रवीत् ST भ्रातरं त्विदमब्रवीत् ।
14 *a* SK नः for च । SK मनुजाधिप । SA, ST, SG omit v. 14 *a*.
*b* S. cl. यदाह कर्णो राजेन्द्र सर्वमेतद्वेक्ष्यताम् for एतच्च कर्णः &c. Before this line SG, ST, SA add दुःशासन उवाच ।
15 *a* SA, SG, ST यथोद्दिष्टाः । SA, SG, ST देशान् गच्छन्तु संवृताः SK मृगयन्तु यतस्ततः ।
*b* SK बहवः for भूयांसः । SK देशाश्च नगराणि च for देशोद्देशं etc. SA, SG, ST देशादेश । This v. is read by SA, SG, ST, after v. 17.

नन्तु तेषां गतिर्वासः प्रवृत्तिर्नोपलक्ष्यते ।
अत्याहितं च गूढास्ते पारं वोर्मिमतो गताः ॥१६ ॥
व्यालैर्वापि महारण्ये भक्षिताः शूरमानिनः ।
अथवा विषमं प्राप्य विनष्टाः शाश्वतीः समाः ॥ १७ ॥
तस्मान्मानसमव्यग्रं कृत्वा त्वं कुरुनन्दन ।
कुरु कार्यं यथोत्साहं मन्यसे यन्नराधिप ॥ १८ ॥

इति विराटपर्वणि गोहरणे चारविचारो नाम
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

16 *a* Edns ABCEEGHK¹LMN तु for नु । AHFM प्रवृत्ति । Edns BCD EG चोपलभ्यते FN चोपलक्ष्यते HL नोपलभ्यते ।
*b* Edns CDGKN अत्यन्त वा नि° L अत्यन्तभाव H प्रत्याहित वा for अत्याहितं च । ABLM वा for च । C पारे DH पर । Edn² ACDGHKM च for वा । C मताः for गता ।

17 *a* H व्याघ्रैः N व्यात्तैः for व्यालैः । Edns CGMN च for वा । F omits अपि । K त्वरगामिन. L शूरसमना. ।

18 *a* N आत्मान for मानम । BCG तत् L तु for त्व ।
*b* Edns CG महोत्साह for यथोत्साह । D नन्दसे for मन्यसे । D त्वं for यत् ।

* * * * *

---

16 *a* SK, SA, ST न हि SG न च for ननु । SK SA, ST चोपलभ्यते SG चोपलक्ष्यते ।
*b* SK अत्यन्त वा निगूढास्ते SA मत्यागताश्च गूढास्ते SG, ST मत्यागता वा गूढास्ते । SA, SG पारमूर्मिगता इव ST सर्वामुर्मिमितोगता ।

17 *a* ST व्याघ्रैः । SG, ST, SA¹ निहता for भक्षिताः । SG प्रभु° for शूर ।
*b* ST प्रगताः ।

18 *a* S. d स्वात्मान निश्चय च ।
*b* SK महोत्साह । ST, SA यमन्यसे SG यमनाभि ।

* * * * *

अर्वाकालस्य विज्ञाताः कृच्छ्ररूपधराः पुनः ।
प्रविशेयुर्जितक्रोधास्तावदेव पुनर्वनम् ॥ ६ ॥

तस्मात्क्षिप्रं हि बुध्यध्वं यथा नोऽत्यन्तमव्ययम् ।
राज्यं निर्द्वन्द्वमव्यग्रं निःसपत्नं चिरं भवेत् ॥ ७ ॥

अथाब्रवीत्तु तं कर्णः क्षिप्रं गच्छन्तु भारत ।
अन्ये धूर्ततरा दक्षा निभृताः साधुकारिणः ॥ ८ ॥

6 *a* Edns C सर्वे GH अथ M वर्षं N यथा for अर्वाक् । GN काले च । Edns C वेत्तारः for विज्ञाताः । A कृत्स्न° for कृच्छ्र° । Edns C स्थिताः N ततः for पुनः ।
*b* D ततः for पुनः ।

7 *a* K बुभुत्सुभिःशर्मं for क्षिप्रं हि बुध्यध्वं । Edns CDGHLN बुभूषध्वं BE बुभुत्सध्वं for हि बुध्यध्वं । DKN प्रति for यथा नः । Edns CG ते F स्वं H ने for नः । DKN कर्तव्यं for अत्यन्तं । L अन्योन्यं तत् M मम for नोऽत्यन्तं ।
*b* FM अद्वन्द्वं । BE इदं K स्थिरं for चिरं ।

8 *a* Edns ACDEGKMN ततः for तु तं । FM गच्छतु ।
*b* Edns धूर्तां नराः । A नराः for तराः । G निवृत्ताः M नृभृताः ।

---

6 *a* SK, SA, SG अज्ञातसमये ज्ञाताः ST अज्ञाते समये ज्ञाताः । SK कृच्छ्ररूपसमाश्रिताः ।

7 *a* S. cl. विचिन्वध्वम् for हि बुध्यध्वम् । S. cl. च for नः ।
*b* SG, SA असपत्नम् ।

8 *a* SK expresses the sense by the following lines:—
ततः कर्णोऽब्रवीद्वाक्यं सत्यधर्मार्थसंयुतम् ।
एते पुनर्न गच्छन्तु अन्ये गच्छन्तु भारत ॥
ST, SG, SA वैशम् । ततः कर्णोऽब्रवीद्वाक्यमन्ये गच्छन्तु भारत । ( SG अपगच्छन्तु । )

*b* S. cl. शीघ्रवृत्ता नरा योग्या निपुणाश्छन्नचारिणः । (SG शीघ्रंयत्ताः । SG, ST नराश्चाप्त for नरा योग्याः । )

चरन्तु देशान्संवीताः स्फीताञ्जनपदाकुलान् ।
तत्र गोष्ठीष्वथान्यासु सिद्धप्रव्रजितेषु च ॥ ९ ॥

परिवारेषु तीर्थेषु विविधेष्वाकरेषु च ।
विज्ञातव्या मनुष्यैस्ते तर्कया सुविनीतया ॥ १० ॥

विविधैस्तत्परैः सम्यक्तज्ज्ञैर्निपुणसंश्रितैः ।
अन्वेष्टव्याश्च निपुणं पाण्डवाश्छन्नवासिनः ॥ ११ ॥

9 *a* H विविधान् for सवीताः । BE स्फीताजनपदान् बहून् ।
*b* G यत्र । Edns BCDEGLN रम्यासु H अन्यथासु K अथान्यत्र for अथान्यासु ।

10 *a* Edns ACDGHN परिचारेषु L सरित्तीरेषु for परिवारेषु ।
*b* Edns CGHLN तैः for ते । The line is omitted in D.

11 *a* H युक्तैः K धूर्तैः E नज्ञैः । Edns CGHN °संवृतैः BE सस्थितैः K आदृतैः L धीक्षिभिः for संश्रितैः ।
*b* Edns C सुनिपुणैः BEL सुनिपुणं G तु निपुणैः । Edns ABCEFGHM °च्छन्न° L °च्छन्न° । verse omitted in D.

---

9 *a* SG ते च for देशान् । SK, ST, SG विविधान् SA संचिताः for संवीताः SG °पदानुगान् ।
*b* SG, ST गोष्ठेषु । SK रम्यासु SG रम्येषु ST शालासु SA पान्थेषु for अथान्यासु । SG, SK, SA सिद्धा मनुजगणिना ST सिद्धमार्गसेविषु for सिद्धप्रव्रजितेषु च ।

10 *a* SA[2] परीवाहेषु ।
*b* SA मनुष्येन्द्राः SK, ST, SG मनुष्येन्द्र for मनुष्यैस्ते । ST, SA सुमर्गीतया । the order of verses from 10 *b* to 13, in SK, SG, ST:–10 *a*, 11 *b*, 12, 10 *b*, 11 *a*, 13.

11 *a* ST निपुणैः for विविधैः । SA[2] सत्त्वैः for तत्परैः । SA, SK, SG, ST निपुणैस्तत्रसमनैः SA[2] निपुणैस्तत्रसमस्तमैः for तज्ज्ञैर्निपुणसंश्रितैः ।
*b* S. cl. मनुष्येन्द्र for च निपुणं । ST विविधाः । S. cl. छन्न° । SG स्थिताः SK, ST, SA वासिन. for वासिनः । ST repeats this line.

## ॥ षड्विंशोऽध्यायः ॥

वैशंपायन उवाच ।

अथाब्रवीन्महाबाहुर्द्रोणस्तत्त्वार्थदर्शिनः ।
न तादृशा विनश्यन्ति प्राप्नुवन्ति पराभवम् ॥ १ ॥
शूराश्च कृतविद्याश्च बुद्धिमन्तो जितेन्द्रियाः ।
धर्मज्ञाश्च कृतज्ञाश्च धर्मराजमनुव्रताः ॥ २ ॥
नीतिधर्मार्थतत्त्वज्ञाः प्रीतिमन्तः समाहिताः ।
धर्मस्थितिं सत्यधृतिं ज्येष्ठं ज्येष्ठानुयायिनः ॥ ३ ॥

XXVI. 1 *a* Edns BCEGHKLN महावीर्यः D महावीरः A महाबाहो for महाबाहुः । Edns CDGHK²N °दर्शिवान् F दर्शवान् K दर्शनः L दर्शवित् । BE omit *a*.
*b* Edns G न प्रयान्ति C न प्राप्नन्ति D न ते यान्ति H न च यान्ति KLN नापि यान्ति A नाप्नुवन्ति for प्राप्नुवन्ति । BE omit *b*.

2 *a* F यतेन्द्रियाः । BE omit *a*.
*b* K धार्मिकाः for धर्मज्ञाः । G महेष्वासा महाबलाः K राजधर्ममनुव्रताः N राजधर्ममनुव्रजाः ।

3 *a* Edns ABCEFM °तत्वज्ञं for °तत्वज्ञाः । Edns ABCEFGHKM पितृवच्च L इन्द्रियेषु for प्रीतिमन्तः । Edn² ABCEFGMN समाहितं ।
*b* Edns BCDEFGHLMN धर्मे स्थित A धर्मस्थितं । L सत्यरतिं for सत्यधृतिं । D ज्येष्ठं ज्येष्ठापचायिनः FL ज्येष्ठं ज्येष्ठापचायिनं H ज्येष्ठं धर्मार्थकोविदं M ज्येष्ठं ज्येष्ठानुयायिनं ।

---

XVI.1 *a* S. cl. सभामध्ये for महाबाहुः । S. cl. सूक्ष्मार्थदर्शिवान् ( SA° दर्शनः ) for तत्वार्थ etc.
*b* ST तादृशा न । S. cl नापि यांति for प्राप्नुवन्ति ।
2 *b* S. cl. सत्यसंधाः for च कृतज्ञाः । S. cl. युधिष्ठिरं for धर्मराजं ।
3 *a* SK, SA तत्वज्ञं । S. cl. पितृवच्च for प्रीतिमंतः । SK, SA समाहितं ।
*b* S. cl. धर्मे स्थितं । ST सत्यवृत्तिं । SG श्रेष्ठं for ज्येष्ठं । SK, SA² श्रेष्ठापचायिनं SA¹ श्रेष्ठोपचायिनं ST श्रेष्ठानुपासिनं SG ज्येष्ठानुवर्तिनः ।

अनुव्रता महात्मानं भ्रातरं भ्रातरो नृपम् ।
अजातशत्रुं ह्रीमन्तं तांश्च भ्रातृननुव्रतम् ॥ ४ ॥
तेषां तथाविधेयानां निभृतानां महात्मनाम् ।
किमर्थं नीतिमान्प्राज्ञो निःश्रेयो न विधास्यति ॥ ५ ॥
तस्माद्यत्नात्प्रवीक्षध्वं कालस्योदयमागतम् ।
न ते नाशं गताः शूरा इति पश्याम्यहं धिया ॥ ६ ॥

4 *a* H अनुयान्ताः for अनुव्रताः । N महात्मनः । Edns CD भ्रातरः for भ्रातरं । Edns CD भ्रातरं for भ्रातरः । Edns ADEFGHKLM नृप ।
*b* Edns CG श्रीमन्तं HN धीमन्तं K भीमश्च for ह्रीमन्तं । Edns BCEGL सर्वभ्रातॄन् for तांश्च भ्रातॄन् । DHN तं च भ्रातॄन् K तौ च भ्रातॄन् । K अनुयतौ ।

5 *a* G अभिधेयानां ।
*b* BE किमर्थे । Edns & MSS. पार्थः for प्राज्ञः । Edns BCDEFGHKLMN श्रेयो नेषां A[2] श्रेयस्तेषां for निःश्रेयो न । Edns BCDEGHKLN करिष्यति for विधास्यति ।

6 *a* BE पुनः H यत्तां for यत्नात् । Edns BCEGK प्रतीक्षन्ते AF प्रतीक्षध्वम् N प्रतीक्ष्यन्ते DL परीक्षध्वम् H परीक्षन्ते for प्रवीक्षध्वम् ।
*b* Edns BEG न हि ते नाशमृच्छेयुः AC न हि ते नाशमिच्छेयुः FM न हि ते नाशमर्हेयुः L न हि ते नाशमिच्छेरन् H न नाशं तेनुगच्छंति N न हि ते नाशमर्हंति । C मन्यामि for पश्यामि ।

---

4 *a* S. cd. महात्मानः । SG, ST भ्रातृवत्सलं for भ्रातरो नृपम् । SK, SA भ्रातरो-भ्रातरं प्रियं ।
*b* SK धीमंतं SG, ST, SA दुर्धर्षं for ह्रीमन्तं । SK सर्वं for तांश्च । SA स चापि हि तथानुजान् ST ह्रीमन्तमपराजितं SG स तानपि तथानुजान् for तांश्च भ्रातृननुव्रतम् ।
5 *b* SK श्रेयो नेषां करिष्यति । SA नः श्रेयो ST निश्रेये for निःश्रेयो । SG, ST, SA करिष्यति for विधास्यति ।

6 *a* SG युक्ताः for यत्नात् । S. cd. परीक्षध्वम् । SK, SG न नाश समयोगतः ST, SA यत्नात्र समयोगतः for कालस्योदयमागतम् ।
*b* SK, ST विनाशमृच्छेयुः SG, SA विनाशमिच्छेयुः for नाशं गताः शूराः । S. cd. इति मे नैष्ठिकी मतिः ।

सांप्रतं चैव यत्कार्यं क्षिप्रमाकालिकं च यत् ।
क्रियतां साधु संचिन्त्य वासश्चैषां प्रचिन्त्यताम् ॥ ७ ॥
यथावत्पाण्डुपुत्राणां सर्वार्थेषु धृतात्मनाम् ।
दुर्ज्ञेयाः खलु ते शूरास्तेऽपापास्तपसावृताः ॥ ८ ॥
शुद्धात्मा गुणवाञ्छूरः सत्यवान्नीतिवाञ्छुचिः ।
तेजोराशिरसंख्येयो निगृह्णीयाद्धि चक्षुषी ॥ ९ ॥

7 *a* H अपि for एव । M तत् for यत् । Edns BCDEFGHKMN तत्र क्षिप्रम-कालिकम् A अत्र क्षिप्रमकालिकम् ।
*b* DG सचिन्त्य K यन्नित्य for संचिंत्य । C चलाः N वासं for वासः । DK विचिन्त्यताम् ।

8 *a* D सर्वार्थे सुभृतात्मनाम् ।
*b* BEN दुर्जेयाः । Edns BCDEGHKLMN शूरास्ते । Edns CG दुरापाः A ते पार्थाः BE ह्यपापाः DN निष्पापाः K स्वपापाः ( K² अपापां ) for तेऽपापाः । K² तपसावृताः ।

9 *a* D शुद्धिमान् K बुद्धिमान् for शुद्धात्मा । Edns ABCDEGHKLN पार्थः for शूरः । L सत्यवाक् । Edns ABCEGKLMN नीतिमान् H धृतिमान् । K भुवि for शुचिः ।
*b* K तेजोगतिः K² तेजोराशिः । DK असह्येयः K² इवासंख्यः for असंख्येयः । Edns ABCDEGHKLN गृण्हीयादपि for निगृण्हीयाद्धि । Edns चक्षुषा D चक्षुषां H चक्षुषि ।

---

7 *a* SK, SG, SA चिंत्यतां ST चिंतता for सांप्रतम् । ST, SA कृत्यं for कार्यं । SK, SG तत्र क्षिप्रमकालिकं SA¹, ST तत्र क्षिप्रं विधीयताम् SA² तत्र क्षिप्रं विचार्य वै ।
*b* SG, ST, SA निश्चित्य for संचिंत्य । SG, ST, SA वि for प्र° ।

8 *a* S. cl. च for °वत् । SG, ST, SA हितात्मनाम् ।
*b* SG, ST दुर्जेयाः for दुर्ज्ञेया. । SK, SA खलु शूरास्ते । S. cl. रक्ष्या ( SA¹ भक्त्या ) नित्यं च ( SA हि ) दैवतैः ( SG देवतैः ) for तेऽपापास्तपसा वृताः ।

9 *a* SK मानवान् SG, ST, SA ज्ञानवान् for गुणवान् । S. cl. पार्थः for शूरः । S. cl. नीतिमान् ।
*b* ST °रिवासह्य. SK, SG, SA °भिरापूर्णः for °रसंख्येयः । S. cl. दहेदपि च ( ST निर्दहेदपि ) चक्षुषा for निगृण्हीयाद्धि चक्षुषी ।

विज्ञाय क्रियतां तस्माद्भूयो वा मृग्यतां चरैः ।
ब्राह्मणैश्चापरैः सिद्धैर्ये चान्ये तद्विधा जनाः ॥ १० ॥

इति विराटपर्वणि गोहरणे द्रोणवाक्यं नाम षड्विंशोऽध्यायः ॥ २६ ॥

## ॥ सप्तविंशोऽध्यायः ॥

वैशंपायन उवाच ।

ततः शान्तनवो भीष्मो भारतानां पितामहः ।
श्रुतावान्देशकालज्ञस्तत्त्वज्ञः सर्वधर्मवित् ॥ १ ॥
आचार्यवाक्ये परमे तद्वाक्यमभिसंदधेत् ।
हितार्थं स उवाचेमां भारतीं भारतान्प्रति ॥ २ ॥

10 *a* FM यस्मात् for तस्मात् । Edns BCEGHLMN च AFM अपि for वा । Edns ABCEFGHLMN मृगयामहे for मृग्यतां चरैः । K चलैः for चरैः ।
*b* Edns ABCDEFGHLM चारकैः K च चरैः for चापरैः । Edns ABCDEF GHMN तद्विदः for तद्विधा ।

* * * * *

XXVII 1 *a* Edns ABCDEGKL भरतानाम् ।
*b* A सर्वज्ञस्तत्त्वधर्मवित् ।
2 *a* M adds अथ before आचार्य° । Edns ABCDEGHKLN वाक्येऽपरमे M वाक्यपरमे । H परम for परमे । BE अभ्यनन्दत D अभिसंदधत् H अभिसंदधे K अभिसंदधत् K[2] अभिनन्दयन् ।
*b* H हितार्थां for हितार्थं । Edns CDGM समुवाच A ससुवाच for स उवाच । K[2] महार्थवर्ती for उवाचेमाम् । Edn[2] CGN एताम् । CGLM भरतान् F भारतीं for भारतान् ।

---

10 *a* SK, SA तस्माद्यत्नश्च क्रियतां SG तस्माद्यत्नाश्च धराणि ST तस्माच्च यत्नः क्रियताम् । S. cl. भूयश्च मृगयामहे ।
*b* SK चारकै for चापरैः । SA, SG, ST चारपुरुषैः for चापरैः सिद्धैः । SK तापसैर्निपुणैरपि SG, ST निपुणैस्तापसैरपि, SA सिद्धैस्तापसनैपुणैः for ये चान्ये तद्विधा जनाः । Adh not completed in S. cl.

* * * *

XXVII 1 *a* SK omits वैश० उ० । S cl. धीमान् for भीष्मः । SA, ST भरतानां ।
*b* ST श्रुतवान् । S cl नीतिमांश्च महामति for तत्त्वज्ञः सर्वधर्मवित् ।
2 *a* S cl. reads instead –आत्मन्युक्तं वाक्यं आचार्यस्य महात्मनः । अगमत्समुदाचेद् वाक्यं हेत्वर्थमितम् ॥ (ST वद for वाक्य । SA दर्शनं SG दर्शनं ST सपुन for °मात्मन ।)

युधिष्ठिरे समासक्तां धर्मज्ञे धर्मसंहिताम् ।
भीष्मः समवदत्क्षिप्रं गिरं साधुभिरर्चिताम् ॥ ३ ॥
यथैप ब्राह्मणो द्रोणः प्राह सर्वार्थतत्त्ववित् ।
सर्वलक्षणसंपन्ना नाशं नार्हन्ति पाण्डवाः ॥ ४ ॥
श्रुतवृत्तोपसंपन्नाः साधुव्रतसमन्विताः ।
वृद्धानुशासने सक्ताः सत्यव्रतपरायणाः ॥ ५ ॥

3 *a* BEGN समायुक्तां for समासक्तां । N भीष्मो for धर्मज्ञे । Edns CG संवृतां BEKL सश्रितां D संभृताम् for संहिताम् । N सुधर्मसश्रितां for धर्मसंहिताम् ।
*b* Edns सम वदत् D संवदतां for समवदत् । Edns CDGKMN तत्र for क्षिप्र । K अर्थिता for अर्चिताम् ।

4 *a* Edns CG यश्च for यथा । BEHK एव N इह for एपः । Edns BCDE FGKLMN प्राह द्रोणः for द्रोणः प्राह । HLM तत्वार्थ for सर्वार्थ । BEH धर्मवित् L दर्शवित् for तत्ववित् ।
*b* Edns CGKN साधुव्रतसमन्विताः for नाशं नार्हंति पाडवाः ।

5 *a* Edns GK व्रत for वृत्त॰ । Edns G उपपन्नाश्च N सुसंपन्नाः for उपसंपन्नाः । Edns GK नानाश्रुति N नानाश्रुत L साधुवृत्त for साधुव्रत । K समाहिताः for समन्विताः ।
*b* Edns AF युक्ताः BEGKN लग्नाः H मग्नाः for सक्ताः ।

---

3 *a* SK, SA, SG समायुक्ता । SA[2] धर्मसयुता ।
*b* S. cl. त्वभ्यवदत्तत्र for समवदत्क्षिप्रम् ।

4 *a* S. cl. reads instad :—यथा नो ब्राह्मणोऽवादीदाचार्यः सर्वधर्मवित् । ( SA[1] अयं ST वः for नः । )
*b* SK, SG, ST श्रुतवृत्तोपसपन्नाः । ST न नाशं यांति । SK, SG, SA आयांति for अर्हंति ।

5 *a* SK, SG, ST सर्वलक्षणसपन्नाः । S. cl. वृत्त for व्रत ।
*b* SK, SA यत्ताः SG, ST युक्ताः for सक्ताः । S. cl. धर्म for व्रत ।

समयं समयज्ञास्ते पालयन्तु शुचिव्रताः ।
नावसीदितुमर्हन्ति उद्वहन्तः सतां धुरम् ॥ ६ ॥
धर्मतश्चैव गुप्तास्ते स्वेन वीर्येण पाण्डवाः ।
न नाशमधिगच्छेयुरिति मे धीयते मतिः ॥ ७ ॥
तत्र बुद्धिं प्रणेष्यामि पाण्डवान्प्रति भारत ।
न तु नीतिः सुनीतस्य शक्यतेऽन्वेषितुं परैः ॥ ८ ॥
यत्तु शक्यमिहास्माभिस्तान्वै संचिन्त्य पाण्डवान् ।
बुध्या प्रायेण तद्व्रोऽहं प्रवक्ष्यामि निबोध तत् ॥ ९ ॥

6 *a* Edns ABEFGHKLMN पालयंतः for पालयंतु । A शुचिस्मिताः for शुचिव्रताः ।
C omits v. 5 and v. 6. *a*.
*b* ADM नावसीदतुम् for नावसीदितुं । BG न च सीदितुं BE add हि before उद्वहन्तः ।
7 *a* BE अपि for एव । Edns CD सुवीर्येण च BE स्ववीर्येणापि GHKLN स्ववीर्येण च for स्वेन वीर्येण ।
*b* H आभि° for अधि° ।
8 *a* Edns CG प्रवक्ष्यामि for प्रणेष्यामि ।
*b* D नु नीतिः for तु नीतिः । A मेपितुं BE लेपितुं N अन्वेषितुं । C omits 8 *b*
9 *a* N साध्य for शक्य । A संचिन्त्य for सचिन्त्य । C omits *a*
*b* Edns BCEGH प्रयुक्तं ADFKLMN प्रयुक्तम् for प्रायेण । C तद्वोहः H यत्नं Edns ABDEFGKLMN न द्रोहम् for तद्वोऽहं । AFHLM प्रवक्ष्यामि । DLN निबोधत for निबोध तत् ।

---

6 *a* SK, SA, SG पालयतः ST पालयंत for पालयन्तु । S. cl. शुभव्रताः । ST repeats 27 *a* & 26 *b* after this.
*b* S. cl. न विषीदन्ति ते पार्थाः for नावसीदितुमर्हन्ति ।
7 *a* S. cl. गुप्ता for धर्मतः । S. cl. स्ववीर्येण च ।
*b* SK अभि° for अधि° । S. cl. नेष्यति for धीयते ।
8 *a* SK प्रवक्ष्यामि SG, ST, SA प्रयोक्ष्यामि for प्रणेष्यामि । SK, SG, ST, SA[1] न प्रज्ञा नेतुं शक्यते SA[2] सूत्र for शक्यते ।
*b* S. cl. वै सूत्र for अन्वेषितुम् ।
9 *b* SK, SA, ST संयुक्त for प्रायेण । SK मतो । ST निबोधत ।

नत्वियं मादृशैर्नीतिस्तव वाच्या कथंचन ।
साधुभिः साधु वक्तव्यं नाविनीतं कथंचन ॥ १० ॥
वृद्धानुशासने तात तिष्ठतः सत्यशीलिनः ।
अवश्यं त्विह वीरेण सभामध्ये विवक्षता ॥ ११ ॥
यथामति विवक्तव्यं सर्वशो धर्मलिप्सया ।
तत्र नाहं तथा मन्ये यथायमितरो जनः ॥ १२ ॥
विवासो धर्मराजस्य वर्षेऽस्मिन्वै त्रयोदशे ।
तत्र तात न तेषां वै राज्यं भाव्यमसांप्रतम् ॥ १३ ॥
पुरे जनपदे वापि यत्र राजा युधिष्ठिरः ।
सत्यवादी सदा दान्तो भाव्यः सत्यपरो जनः ॥ १४ ॥

10 *a* C ननु । Edns ABCDEFGKLM तस्य N तेषाम् for तव । Edn[1] कदाचन for कथंचन ।
*b* Edns ABCDEFGKMN सा त्वियं for साधुभिः । Edns ABCDEFGH KMN वक्तव्या for वक्तव्यम् । Edns ABCDEGHKN नत्वनीतिः F नचा नीतिः for नाविनीतम् ।
11 *b* Edns ABCDEFKM धीरेण for वीरेण । Edn[2] ABCEFGKLMN सतां for सभा ।
12 *a* Edn[2] यथार्हं Edn[1] CDGN यथार्थं for यथामति । Edns G इह D अभि N इति for वि° । Edds BCEG सर्वथा for सर्वशः ।
13 *a* BCDEGHK निवासं N विवासं for विवासः । N adds हि before अस्मिन् । K तु for वै । N omits वै ।
*b* Edns ABCEFGHLMN हि K तु for वै ।
14 *a* Edns G च for वा ।
*b* Edns ABDEFGHKLN प्रिय° for सत्य° । Edns BEFGHM भव्यः for भाव्यः । BE सत्यपरायणः for सत्यपरोजनः । Edns ABCDEGHKLN read v. 14 *b* before v. 13 *b*.

---

10 *a* ST नान्वियं । S. cl. साधु वक्तव्या for मादृशैर्नीतिः । S. cl. तस्य नीति for तव वाच्या । *b* S. cl. omits *b*.
11 *a* SA[2] तत्र for तात । SG, ST, SA सत्यवादिनः ।
*b* SK, SG, ST, SA[1] तु नियुक्तेन SA[2] विनियुक्तेन for त्विह वीरेण ।
12 *a* SK यथार्हं SG यथामतिः । SA च SK, इह SG हि । ST प्र for वि ( वक्तव्य ) SK सर्वथा SG, ST, SA सदृशं for सर्वशः । *b* S. cl. यथान्ये मेनिरे जनाः ।
13 S. cl. omits v. 13.
14 *a* SG भाव्यः for वापि । *b* S. cl. o[illegible]

तुष्टः पुष्टः शुचिः शक्तो यत्र राजा युधिष्ठिरः ।
दानशीलो वदान्यश्च निभृतो ह्रीनिषेवकः ॥ १५ ॥

नासूयको न चापीर्ष्युर्नातिवादी न मत्सरी ।
भविष्यति जनस्तत्र स्वं स्वं धर्ममनुव्रतः ॥ १६ ॥

ब्रह्मघोषाश्च भूयांसः पूर्णाहुत्यस्तथैव च ।
क्रतवश्च भविष्यन्ति भूयांसो भूरिदक्षिणाः ॥ १७ ॥

सदा च तत्र पर्जन्यः सम्यग्वर्षी न संशयः ।
संपन्नसस्या च मही निरातङ्का भविष्यति ॥ १८ ॥

15 *a* Edns A[2]CDGKN हृष्टः for तुष्टः । H omits तुष्टः पुष्टः । Edns A[2]CD GK दक्षः LN शुद्धः for शक्तः ।
*b* KLM निषेधकः for निषेवकः ।

16 *a* Edns CGKN अभिमानी D अतिमानी for अतिवादी ।
*b* Edns CG स्वयम् for स्वं स्वं ।

17 *a* N धर्मघोषाः for ब्रह्मघोषाः ।

18 *b* A निरीतिका for निरातंका । D भविष्यति निरीतिका for निरातंकाभविष्यति L नैरन्तर्यां निरीतिका ।

---

15 *a* S. cl. हृष्टः for तुष्टः । SG, ST, SA तुष्टः for पुष्टः । SK दक्षः for दान्तः । SA[2] निवसेद्धर्मतत्परः for यत्र राजा युधिष्ठिरः ।
*b* SG, ST, SA क्षमायुक्तः for वदान्यश्च । SG निषेधनः SA निषेधकः । S. cl. interchanges *a* & *b*.

16 *a* SG, ST, SA वाप्युग्रः for चापीर्ष्युः । SK नाभिमानी SG, ST SA नात्य-भाष्यः for नातिवादी ।
*b* S. cl. स्वयं for स्वं स्वं ।

17 *a* SK, SG, ST, SA[2] पुण्यशब्दाः SA[1] शुभशब्दाः for पूर्णाहुत्यः । SA च सर्वशः for तथैव च ।

18 *a* ST सम for सम्यक् ।
*b* S. cl. भविष्यति निरामया for निरातङ्का भविष्यति ।

स्वादुवन्ति च धान्यानि रसवन्ति फलानि च।
गन्धवन्ति च माल्यानि शुभशब्दा च भारती ॥ १९ ॥
वायुश्च सुखसंस्पर्शो निष्प्रतीपं च दर्शनम्।
भयं नाभ्याविशेत्तत्र यत्र राजा युधिष्ठिरः ॥ २० ॥
गावश्च बहुलास्तत्र न कृशा न च दुर्दुहाः।
पयांसि दधिसर्पींषि रसवन्ति हितानि च ॥ २१ ॥
गुणवन्ति च पानानि भोज्यानि च भवन्ति च।
तत्र देशे भविष्यन्ति यत्र राजा युधिष्ठिरः ॥ २२ ॥
रसाः स्पर्शाश्च गन्धाश्च शब्दाश्चापि गुणाधिकाः।
दिशश्चापि प्रसन्नाश्च यत्र राजा युधिष्ठिरः ॥ २३ ॥

19 *a* Edn[1] DKN फलवति Edn[2] CGHL गुणवति for स्वादुवति।
20 *a* ABEF नि प्रतीप C निभय for निष्प्रतीप। C वाति सवश for च दर्शनम्।
*b* Edn[2] नभय त्वाविशेत् BE आपन्नाम्याविशेत् CGH भय न त्वाविशेत् N भयनाशाहित for भयनाभ्याविशेत्।
21 *a* E omits न कृशा। Edns CDFGM दुर्बलाः for दुर्दुहाः।
*b* H वै for च। N omits the whole verse
22 *a* Edns BCDEG पेयानि for पानानि। K भक्ष्याणि for भोज्यानि। Edns BCDEGHKL रसवति for च भवति। N omits the whole verse
23 *a* L रूपशब्दा for शब्दाश्चापि। Edns BCDLGHLN गुणान्विता for गुणाधिका।
*b* Edns CG दृश्यानि च ABCDEFLM दिशश्चैव HKN दृश्याश्चैव for दिशश्चापि।

---

19 *a* SK, SA रसवति SG, ST गुणवति for स्वादुवति। ST सस्यानि for धान्यानि। SK, SA गुणवति for रसवति।
20 *a* SG सुशुभस्पर्शः। SA, SG, ST omit निष्प्रतीप चदर्शनम्। SK interchanges निष्प्रतीप &c and यत्र राजा &c
*b* SK, SG च नाविशेत् for नाभ्याविशेत्। ST, SA omit भय नाभ्याविशेत्तत्र।
21 *a* S cl बहुक्षीरास्तथा ( ST, SA सदा SG °स्तथा ) गाव सुपुष्टाश्च सुदोहनाः।
*b* SA, SG मधु for दधि।
22 *a* ST पाकानि for पानानि। SK, SG, ST विविधानि for च भवति।
*b* SG, ST राजन् for देशे। SA omits the whole verse
23 *a* SG, ST शब्दाः for गधा। SG, ST गधा for शब्दा। SK, SG, ST गुणान्विता। SA[1] omits this line
*b* SK, SG, ST दृश्यानि च for दिशश्चापि। S. cl. प्रसन्नानि। SA[1] omits this line SA दृश्याश्च।

धर्माश्च तत्र दृश्यन्ते सेविताश्च द्विजातिभिः ।
स्वैः स्वैर्गुणैश्च संपन्ना अस्मिन्वर्षे त्रयोदशे ॥ २४ ॥
देशे चास्मिन्भविष्यन्ति तात पाण्डवसंयुते ।
संप्रीतिमाञ्जनस्तत्र हृष्टः पुष्टोऽतिमानदः ॥ २५ ॥
देवतातिथिपूजासु सर्वभावानुरागवान् ।
इष्टदानो महोत्साहः सत्यधर्मपरायणः ॥ २६ ॥
अशुभद्विट् सभाप्रेप्सुः नित्ययज्ञश्रुतव्रतः ।
भविष्यति जनस्तत्र यत्र राजा युधिष्ठिरः ॥ २७ ॥

24 *a* Edns C सर्वैस्तु for दृश्यंते । HK omit 24 *a*.
*b* K तु N स्व for च । Edns ACDFGHKLMN संयुक्ताः for संपन्नाः । DN ह्यस्मिन् K तस्मिन् M यस्मिन् for अस्मिन् ।
25 *a* Edns BCEGHKN देशे तस्मिन् D तत्र देशे L देशे तत्र for देशे चास्मिन् । L वर्षाः । N जनाः for तात । L संयुतः ।
*b* G जनपदः for जनस्तत्र । Edns BCDEGHKLN संतुष्टः शुचिरव्ययः A संहृष्टः शुचिरव्ययः । K संतुष्टःशुचिरुज्वलः । M हृष्टपुष्टोभवत्तदा for हृष्टःपुष्टोऽतिमानदः ।
26 *a* G पूजा च for पूजासु । BEN सर्वभूता° for सर्वभावा° ।
*b* Edns CGK स्वस्व BDEHLN शश्वत् for सत्य° ।
27 *a* Edn² अशुभाद्वि Edns ACDEGHKLN शुभप्रेप्सुः for सभाप्रेप्सुः । Edns C इष्टयज्ञः । BEKLN नित्ययज्ञः FH नित्य यज्ञ° । G इष्टयज्ञैः for नित्ययज्ञ° । Edns ABCDEFGLMN शुभव्रतः K श्रियावृतः । for श्रुतव्रतः । F अशुभद्विट्प्रेप्सुः ।

---

24 *a* SK सर्वैस्तु for दृश्यन्ते । SG, ST, SA omit this line.
*b* S. cl. संयुक्ताः for सपन्नाः । SK कस्मिन् SG, ST, SA तस्मिन् for अस्मिन् ।
25 *a* SK तस्मिम् SG, ST, SA तत्र for चास्मिन् । SK ततः ST तत्र SA² यत्र for तात । S. cl. सश्रिते for संयुते ।
*b* S. cl. सतुष्टः शुचिरव्ययः ( ST अव्ययः ) for हृष्टपुष्टोऽतिमानदः ।
26 *a* SK, SA भूतानु° SG, ST भूतेषु for भावानु° ।
*b* SK, SG, ST दान for दानः । S. cl. महोत्साहः । S. cl. नित्यं (SA¹ नित्य) for सत्य and धर्मपरायणाः ।
27 *a* SK शुभान्वितः । S. cl. शुभेच्छाश्च for सभाप्रेप्सुः । SK, SG, SA नित्यतुष्टा ST नित्यं तुष्टः for नित्ययज्ञ । SG, ST, SA² शुभान्विताः SK, SA¹ श्रिया न्विताः for श्रुतव्रतः ।
*b* S. cl. भविष्यन्ति जनास्तत्र । ST reads 27 *a*. after this.

सत्यवाक्यावृतः स्नातः शुभकल्याणमङ्गलः ।
शुभार्थेप्सुः शुभमतिर्यत्र राजा युधिष्ठिरः ॥ २८ ॥
भविष्यति जनस्तत्र नित्यं चेष्टप्रियव्रतः ।
धर्मात्मावस्थितो दृश्यः सोऽपि तात द्विजातिभिः ॥ २९ ॥
किं पुनः प्राकृतैः पार्थः शक्यो विज्ञातुमन्ततः ।
यस्मिन्सत्यं धृतिर्दाक्ष्यं परा शक्तिर्ध्रुवा क्षमा ॥ ३० ॥
तस्मात्तत्र निवासं तु छन्नं सत्रेण धीमतः ।
गतिं च परमां तस्य नोत्सहे वक्तुमन्यथा ॥ ३१ ॥

28 *a* Edns ACDGHKLN त्यक्तवाक्यानृतः । BE शुभवाक्यादृतः । Edns ABC DEGHLN तात K तत्र for स्नातः ।
*b* M शुभार्थेप्सु ।
29 *b* H धर्मराजः for धर्मात्मा । Edns C शक्यते BEN स तदा DGK सततं । H सदा for अवस्थितः । Edns C ज्ञातुं for दृश्यः । K तादृक् for तात । K विधे-नृभिः for द्विजातिभिः ।
30 *a* Edns CG तात for पार्थः Edns CG पार्थः L शक्तः for शक्यः । Edns CG विज्ञायते कचित् । H वेदितुमंततः for विज्ञातुमन्ततः ।
*b* Edns ACFGHKLMN दान for दाक्ष्यं । Edns CG शांतिः for शक्तिः । N दया for ध्रुवा ।
31 *a* L तु गच्छत for निवासं तु Edns ACFGHMN यत्नेन for सत्रेण ।
*b* Edns ACFGM तत्र for तस्य ।

---

28 *a* S. cl. व्यक्त॰ for सत्य॰ and ॰स्ततः ( SA² स्तथा ) for वृतः । S. cl. तात for स्नातः । S. cl. ॰मगलाः । S. cl. reads this line before v. 27.
*b* S. cl. omits this l.
29 *a* S. cl. omits this l.
*b* SK धर्मज्ञः ST धर्मज्ञाः for धर्मात्मा । SK, SG, SA स तु दुर्ज्ञेयः ST ते तु दुर्ज्ञेयाः for (अ)वस्थितो दृश्यः S. cl. सर्वज्ञैश्च for सोऽपि तात ।
30 *a* SK तात for पार्थः । SK पार्थो विज्ञायते कचित् SG शक्तो for शक्यो । SG, SA ज्ञातुं वने वसन् for ( शक्यो ) विज्ञातुमंततः ।
*b* SG, ST, SA¹ तस्मिन् । SG सत्य । S. cl. दानं for दाक्ष्य । SA² ध्रुवा for परा and परा for ध्रुवा । ST अहिंसता for ध्रुवाक्षमा ।
31 *a* ST तस्मिन् for तस्मात् । S. cl. निवासः ( SA² स ) पार्थानाम् for तत्र निवासं तु । S. cl. चिंत्यतां यद्ब्रवीमि वः for छन्न सत्रेण धीमतः ।
*b* SK, SG, ST, SA² गतिर्वापरमा तत्र SA¹ गति वा परमां तत्र ।

एवमेतत्तु संचिन्त्य यत्क्षतं मन्यसे हितम् ।
तत्क्षिप्रं कुरु कौरव्य यद्येवं श्रद्धासि मे ॥ ३२ ॥

वैशंपायन उवाच ।

ततः शारद्वतो वाक्यमित्युवाच तदा कृपः ।
युक्तं प्रोक्तं च वृद्धेन पाडवान्प्रति भारत ॥ ३३॥

धर्मार्थसहितं श्लक्ष्णं तत्त्वतश्च सहेतु तत् ॥
तत्त्वानुरूपं भीष्मेण ममाप्यत्र गिरं श्रुणु ॥ ३४ ॥

32 *a* GL interch एव and एतत् । Edn² D स्ते । BEGN स्त्य for स्त । H omits यत्स्त ।
*b* D यद्देव for यद्येव ।
Edns & BCDEGHKLN begin a new Adh. here.

33 *a* Edns BCDGHKLN रूपस्तदा ।
*b* Edns ABDEGKLMN मास for प्रोक्त । C हि K तु for च Edns AB CDEFGKMN भाषितम् for भारत ।

34 *a* C धर्मेण सहितम् । N सूक्ष्मं for श्लक्ष्ण । D धमनत्व for तत्वतश्च । Edns BCDEGKN सहेतुकम् AFHL सहेतुमत् ।
*b* Edns BCDEGHKL तत्र N भद्र for तत्व⁰ । N उत्त च for अनुरूप ।

---

32 *a* SA एव for एतत् । S. cl. यत्कृत्य साधु मन्यसे ।
*b* S. cl एतत् for एवम् । ST श्रद्धित तव for श्रद्धासिमे ।

33 *a* S. cl रूपस्तदा । and begins a new Adh. from here
*b* S. cl मात for प्रोत । ST कौरव for प्रोक्त च । S cl. भाषित for भारत ।

34 a SG धर्मेण for धमाथ । S. cl. सर्वं सत्य ( SG, ST, SA तथ्य ) स ( SA त) हेतुकम् ।
*b* SK, SA¹, SG, ST तत्र SA² अत्र for तत्र⁰ । SK, SG, ST, SA² भीष्मश्च । SK, SG, ST वचन SA च वच for अत्र गिर ।

तेषां चैव गतिस्तत्त्वाद्वासश्चैषां विचिन्त्यताम् ।
नीतिर्विधीयतामत्र सांप्रतं या हिता भवेत् ॥ ३५ ॥
नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता ।
किं पुनः पाण्डवास्तात सर्वार्थाः कुशला रणे ॥ ३६ ॥
तस्मात्तत्रप्रविष्टेषु पाण्डवेषु महात्मसु ।
गूढभावेषु च्छन्नेषु काले चोदयमागते ॥ ३७ ॥
स्वराष्ट्रपरराष्ट्रेषु ज्ञातव्यं बलमात्मनः ।
उदयः पाण्डवानां च प्राप्तकालो न संशयः ॥ ३८ ॥

35 *a* G गतिं । Edns तीर्थैः A सम्यक् BEHKL तथ्या C तूर्णं D तस्य G सूक्ष्मा N तर्कात् for तत्वात् । D तेषां for एषा । Edns BCDEGHKN प्रचिन्त्य- ताम् A प्रचित्यताम् for विचिन्त्यताम् ।
*b* Edns ABCDEGHLN चापि K वापि for अत्र । K हितान्मति for हिता भवेत् ।

36 *a* D प्रकृतः for प्राकृतः । L बुभूषिभिः N बभूषता D बुभुत्सता ।
*b* Edns ACDGHKN सर्वास्त्रकुशलाः BE धर्मार्थकुशलाः L सर्वार्थकुशलाः । M इमे ।

37 *a* AH सत्यप्रतिष्ठेषु ।
*b* H दृढभावेषु ।D कालेन for काले च ।

38 *a* Edns ACDGHKL स्वराष्ट्रे Edns CG परराष्ट्रे च D परराष्ट्रे वा BE राष्ट्रापर⁰ ।
*b* AGKLN उदये BE पाडवाभ्याम् । Edns BCDEFGHKLM प्राप्ते काले GN प्राप्तकाले ।

---

35 *a* SK तत्र, SG, ST, SA तात for तत्वात् । SK, SG निवासश्चानु । ST, निवासश्चैव । SA वासश्चैवानु for वासश्चैषावि⁰ ।
*b* SK तत्र । SG, ST, SA² चात्र । SA¹ चापि for अत्र ।

36 *a* ST विजानता SA¹ बलीयसा for बुभूषता ।
*b* S. cl. शूराः for तात । and विद्वांसोबालिनस्तथा for सर्वार्थाः etc.

37 *a* ST तेषु for तत्र and प्रविष्टेषु for प्रविष्टेषु ।
*b* ST, SA² आगते for ⁰मागते ।

38 *a* SK स्वराष्ट्रे परराष्ट्रे च । ST ज्ञातव्या धर्मवित्तमाः ।
*b* SG, ST, SA पांडवेयानां for पांडवानां च ।

उत्तरः सारथिं कृत्वा निर्यातो नगराद्बहिः ।
ततो मन्ये ध्वजान्दृष्ट्वा भीत एव पलायते ॥ ३६ ॥
तत्रैनमेवं धावन्तं जिघृक्षति धनंजयः ।
इति स्म कुरवः सर्वे विमृशन्त पृथक्पृथक् ॥ ३७ ॥
नैव व्यवसितुं किंचिदर्जुनं शक्नुवन्ति ते ।
छन्नं तथा तं सत्रेण पाण्डवं प्रेक्ष्य भारत ॥ ३८ ॥
उत्तरं तु प्रधावन्तमभिद्रुत्य धनंजयः ।
गत्वा पदशतं तूर्णं केशपक्षे परामृशत् ॥ ३९ ॥

36 *a* CM उत्तर । L नत्वा for कृत्वा ।
*b* Edns BCDEGHKN स नः for ततः । Edns C मन्यामहे and omit ध्वजान् । A महाध्वजान् B मत्स्योध्वजात् DN मध्ये ध्वजान् E मत्स्यध्वजान् । Edns BCDEGHKMN एव for एव । H पलायति । L omits *b*.
37 *a* Edns ABCDEGHKMN तन्नून for तत्रैन । Edns ACHKMN एवः BE एव D एवा G अभि for एव । L omits *a*.
N cl. adds वैशंपायन उवाच before v 37 *b*.
*b* Edns ABDEGHK विमृशतः C विमृषतः M विमृश्यत. M² निर्दिशतः ।
38 *a* Edns ACDGKMN च for एव । BE च for ते । All उत्तर for अर्जुनम् ।
*b* L च्छिन्न । G तदा । D तु N अतः for तम् । L वेषेण M च्छद्मेन for सत्रेण । L पार्थं समेक्ष्य भारत ।
39 *a* D च for तु । H अतिद्रुत्य K अनुसृत्य LN अनुद्रुत्य ।
*b* D शतपद M पद शत । A केशपाशे M केशपक्ष । L परामृशन् ।

---

36 *a* SA² क्लीब वै for उत्तर । SA¹ omits this line.
*b* S cl. स न. for ततः । SK, SG ध्वज । SK, ST, SA एवः for एव ।
S. cl. पलायति ।
S cl. adds रूप उवाच before v. 37 *a*
37 *a* SK, SG, ST, SA² नून तमेव SA¹ नुन तमनु for तत्रैनमेव ।
*b* SK, SG, ST add वैशंपायन उवाच before this
S cl विमृशतः । SG, ST, SA पुन पुन for पृथक् पृथक् ।
38 *a* S cl. च for एव । SA व्यवसित । S. cl, योधाः for किंचित् ।
*b* S cl adds वैशंपायन उवाच before this line. SK वेषेण SG वस्त्रेण ST क्लैब्येन for सत्रेण । S. cl. सैनिकाः for भारत ।
39 *a* ST अभीत्सर for उत्तरं तु । S cl अनुद्रुत्य ।
*b* SK, ST शतपदं । SG, SA पूर्ण for तूर्णं । ST केशपक्षे ।

सोऽर्जुनेन परामृष्टः पर्यदेवयदार्तवत् ।
बहुलं कृपणं चैव विराटस्य सुतस्तदा ॥ ४० ॥
शातकुम्भस्य शुद्धस्य शतं निष्कान्ददामि ते ।
मणीनष्टौ च वैडूर्यान्हेमबद्धान्महाप्रभान् ॥ ४१ ॥
हेमदण्डैः प्रतिच्छन्नं रथं युक्तं च सुव्रतैः ।
मत्तांश्च दश मातङ्गान्मुञ्च मां त्वं बृहन्नले ॥ ४२ ॥

वैशंपायन उवाच ।

एवमादीनि चान्यानि विलपन्तमचेतनम् ।
प्रसह्य पुरुषव्याघ्रो रथस्यान्तिकमानयत् ॥ ४३ ॥

40 *a* N पर्यक्रोशत्तदार्तवत् ।
*b* N बहुश for बहुल । D चार्त N वाक्य for चैवः ।

41 *a* BCH शत॰ । H निष्क ।
*b* Edns CHN वैदूर्यान् । N omits च । Edns BCDEFGK[1]LN हेमबद्धान M हेमविद्धान् ।

42 *a* Edns BCDEGHKLN दण्ड । AF सुव्रतैः BEN सुव्रतै CKL वाजिभिः H सद्वये ।
*b* Edns BCDEGHKLN दश for बहु । L च for त्व ।

43 *a* Edns BCDEHLMN वाक्यानि for चान्यानि । Edns BCDEGHKL MN अचेतसम् ।
*b* Edns ABCDEFGHLMN प्रहस्य for प्रसह्य । D रथान्तिकमुपानयत् ।

---

40 *a* SA[2] कृपणं पर्यदेवयत् ।
*b* S cl एव for एव । SG, SA[1], SK वित्त शार्दूलवद्द for विराटस्य सुतस्तदा ।

41 *a* S. cl reads instead of this line —
शातकुम्भस्य शुद्धस्य श्रेष्ठस्य रजतस्य च ।
ददामि शतनिष्कं ते मुञ्च मां त्वं बृहन्नले ।
*b* S cl हेमबद्धान् ।

42 *a* S. cl. हेमदण्डप्रतिच्छन्नं ।SK, ST, SA तु for च । S cl वाजिभिः for सुव्रतैः ।
*b* SK, ST, SA दश SG मत्त॰ for बहु ।

43 *a* SG, ST, SA omit वैशंपायन उवाच before this
S cl वाक्यानि for चान्यानि । SG [illegible] । SK, SG, ST, SA[1] अचेतसम् ।
*b* SK प्रसह्य SG, ST, SA प्रहस्य ।

अथैनमब्रवीत्पार्थो भयार्तं नष्टचेतसम् ।
यदि नोत्सहसे योद्धुं शत्रुभिः शत्रुकर्शन ॥ ४४ ॥
एहि मे त्वं हयान्यच्छ युध्यमानस्य शत्रुभिः ।
प्रयाह्येतद्रथानीकं मद्बाहुपरिरक्षितः ॥ ४५ ॥
अप्रधृष्यतमं घोरं गुप्तं वीरैर्महारथैः ।
यत्तो भूत्वा नरश्रेष्ठ योत्स्येऽहं कुरुभिः सह ॥ ४६ ॥
एवं ब्रुवाणो बीभत्सुर्वैराटिमपराजितः ।
समाश्वास्य मुहूर्तं तु उत्तरं भरतर्षभ ॥ ४७ ॥
तत एनं विचेष्टन्तं तमसा भयपीडितम् ।
रथमारोपयामास पार्थः प्रहरतां वरः ॥ ४८ ॥

इति विराटपर्वणि गोहरणपर्वणि उत्तरभङ्गो नाम
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

44 *b* M सहसे for उत्सहसे । N कुरुभि. for शत्रुभिः । Edns BEGH शत्रुकर्षणः N शत्रुहर्षण । D omits the whole verse.

45 *b* N प्रयुज्य for प्रयाहि । L यथानीक । Edns BCDEGHKLMN बलरक्षित ।

46 *a* BE युक्त for गुप्तम् । N शूरै. ।
*b* Edn[2] AFGLN यत्ता for यत्त. । Edns CDGN भव for भूत्वा । A नरश्रेष्ठः ।

47 *b* Edns BCDEFGLMN तम् for तु । BEFLM भरतर्षभः N प्रत्यपद्यत for भरतर्षभ ।

48 *a* Edns BCDEGKLN अकाम for तमसा ।

---

44 *a* SG, SA[2] नष्टचेतन ।

45 *b* SA[2] प्रयोहि for प्रयाहि । ST वरानीकम् । SA मद्बाहुपरिरक्षितम् ।

46 *a* SG अप्रधृष्यमिम SA[2] अप्रधृष्यतर । ST, SK, SA घोरैः for वीरैः ।
*b* SK यत्ता भव SG, ST, SA यत्ताभूत्व । ST रथस्यास्य for नरश्रेष्ठ । SA[1] योत्स्ये न ।

47 *a* SK वैराटिं बीभत्सु for बीभत्सुर्वैराटिम् । SK, ST add वैशम् । before this verse
*b* S cl. मंधार्तं न for मुहूर्तं तु । SK, SG, ST. SA[2] भरतर्षभः ।

48 *a* SK इतस्ततः for तत एनं । S. cl अकाम for तमसा । SA[1] अकामभयविह्वलम् ।
*b* S. cl. परन्तपः for प्रहरतां वरः ।

## ॥ षट्त्रिंशोऽध्यायः ॥

वैशंपायन उवाच ।

तं दृष्ट्वा क्लीबवेषेण रथस्थं नरपुंगवम् ।
शमीमभिमुखं यान्तं रथमारोप्य चोत्तरम् ॥ १ ॥
भीष्मद्रोणमुखास्तत्र कुरूणां रथसत्तमाः ।
वित्रस्तमनसः सर्वे धनंजयकृताद्भयात् ॥ २ ॥
तानवेक्ष्य हतोत्साहानुत्पातानपि चाद्भुतान् ।
गुरुर्धनुर्भृतां श्रेष्ठो भारद्वाजोऽभ्यभाषत ॥ ३ ॥
चण्डाश्च वाताः संवान्ति रूक्षाःशर्करकर्षिणः ।
भस्मवर्णप्रकाशेन तमसा संवृतं नभः ॥ ४ ॥

XXXVI 1 *a* B दृष्ट्वा । M नरपुंगवम् ।
*b* Edn[1] समीप for शमीम् ।
2 *a* Edns CG कुरवः for कुरूणाम् । Ldns रथिसत्तमाः L रथसत्तम E[2] सप्तसत्तम ।
*b* E चित्रस्थमनसः ।
3 *a* M उत्पातान् । A उद्धतान् ।
*b* Edns ABCDLGHKLN शस्त्रभृताम् ।
4 Ldns CDLKMN शर्करवर्षिणः ABLGH शर्करकर्षिणः L शर्करकर्षण ।
*b* DHN रजसा for तमसा । H संवृता दिश ।

---

XXXVI.1 *a* SK, SA[2] रूपेण for वषेण । SK रथि° SG, SA रथ° ST कुरु° for नर° ।
2 *a* SK, SA, SG द्रोणभीष्मादय for भीष्मद्रोणमुखा । SK, SG, ST, SA· शूराः SA[1] सर्वे for तत्र । SK रथिसत्तमाः
*b* S cl घासन् for सर्वे ।
3 *a* ST दारुणान् for चाद्भुतान् । SA[1] हन° for हत° ।
*b* S cl शस्त्र for धनु: । SG भरद्वाज
4 *a* SG, ST, SA read द्रोणउवाच before this v S cl. सत्र for चण्डा । SK सवान्ति । SG रूक्षा । S cl पत्यनिस्वना for शर्करकर्षिणः ।
*b* S cl °वर्ण° for °वर्ण° ।

रूक्षवर्णाश्च जलदा दृश्यन्तेऽद्भुतदर्शनाः।
निःसरन्ति च कोशेभ्यः शस्त्राणि विविधानि च ॥ ५ ॥
शिवाश्च निंनदन्त्येते दीप्तायां दिशि दारुणाः।
हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः ॥ ६ ॥
अदृश्यान्यत्र रूपाणि दृश्यन्ते सुबहून्यपि।
यत्नाद्भवन्तस्तिष्ठध्वं महद्युद्धमुपस्थितम् ॥ ७ ॥
रक्षध्वमपि चात्मानं व्यूहध्वं वाहिनीमपि।
स्यन्दनं च प्रतीक्षध्वं रक्षध्वमपि गोधनम् ॥ ८ ॥

Edn[1] रूक्ष॰। BE ॰विक्रमाः for ॰दर्शनाः।
omits च after विविधानि। N reads this line after v. 6. Edn[1]
सरन्ति for निःसरन्ति।

HKL शिवा च। Edns ADFMN विनदन्ति C विवदन्ति HK विनदति।
Edns ACDFGMN एताः HKL एषा for एते। KLM दारुणा।
D अकल्पिताः for अकम्पिताः।

Edns ABCDEGHLN यादृशानि K तादृशानि। Edns C सदृश्यन्ते बहूनि
BE दृश्यन्ते च बहूनि च GH सदृश्यते बहून्यपि K दृश्यते च बहून्यपि। D
दुलानि for सुबहूनि। D reads the line after v. 8.
N. cl. except M reads यत्ताः for यत्नात्। Edns BCEFGHKLN
तिष्ठतु। Edns CDN साध्वस समुपस्थितम्।

L व्यूहध्वम्। D इव N इतः for अपि। H वापि वाहिनीम्।
Edns CDFGHKLMN वैशस BE विषम for स्यन्दन। N वा for च।
D परिप्सध्व। Edns BCDEGHKL add च & N वा before अपि।

---

5 *a* ST वर्णाः for वर्णाः।
*b* SG, SA निश्चरति।
6 *a* SK, SG विनदति ST विरुदति। S. cl. एताः।
7 *a* S. cl. reads यादृशान्यत्र दृश्यन्ते रूपाणि विविधानि च। ( SA तादृशानि
*b* S. cl. यत्ता for यत्नात्। तिष्ठन्तु। युद्धं स्यात्समुपस्थितम्।
8 *a* SK, SG, ST राजानं for चात्मानम्।
*b* S. cl. वैशस for स्यन्दनम्। चापि for अपि।

एष वीरो महेष्वासः सर्वशस्त्रभृतां वरः ।
आगतः क्लीबवेषेण पार्थो नास्त्यत्र संशयः ॥ ९ ॥

स एव पार्थो विक्रान्तः सव्यसाची धनंजयः ।
युद्धे निवर्तते नायं सर्वैरपि मरुद्गणैः ॥ १० ॥

क्लेशितश्च वने शूरो वासवेन च शिक्षितः ।
अमर्षं च समापन्नो योत्स्यते नात्र संशयः ॥ ११ ॥

महादेवोऽपि पार्थेन श्रूयते युधि तोषितः ।
किरातवेषप्रच्छन्नो गिरौ हिमवति प्रभुः ॥ १२ ॥

*b* BE अस्त्यत्र न for नास्त्यत्र । C एव for अत्र ।

10 *a* Edns BCEFHKLMN एषः A ह्येवः for एव । Edns DGHLN परंतपः BE महारथ. for धनंजय. ।

*b* N. cl. except L नायुद्धेन निवर्तेत । Edns C सुरासुरै for मरुद्गणैः ।

11 *a* L क्लेशितस्य K वीरः for शूरः । Edns C अपि A सु° for च । L रक्षितः ।

*b* Edns ACDFGHKLMN अमर्षवशमापन्न । Edns CGN वासवप्रतिमो युधि A वासवप्रतिमो गुणी BEFHL वासवप्रतिमो गुणै. K वासवप्रतिमो मन्ये M वासवप्रतिमो रणे for योत्स्यते नात्र संशयः ।

12 *a* H यदि for युधि । L तोषितो युधि ।

*b* M हैमवते ।

---

9 *a* SA, SG add द्रोण उवाच ।

*b* SK, SG, SA[2] °वेषेण for वेषेण । SK repeats this v. after some additional lines ( vide app )

10 *a* S. cl. एष पार्थो हि for स एव पार्थः । परंतप for धनंजयः । line omitted in SA[1].

*b* S. cl. नाजित्वा विनिवर्तेत सर्वानपि मरुद्गणान् । line omitted in SA[1].

11 *a* omitted in SA[1].

*b* S. cl. अमर्षवशमापन्नः । line omitted in SA[1]

12 *a* S cl. युद्धतोषितः ।

*b* omitted in SG. SA, ST नगे हैमवते गिरौ ।

कर्ण उवाच ।

सदा भवान्फाल्गुनस्य गुणैरस्मान्विकत्थस ।
न चार्जुनः कलापूर्णा मम दुर्योधनस्य वा ॥ १३ ॥

दुर्योधन उवाच ।

यद्येष पार्थो राधेय कृतं कार्यं भवेन्मम ।
ज्ञाताः पुनश्चरिष्यन्ति द्वादशान्यान्हि वत्सरान् ॥ १४ ॥
अथैष कश्चिदेवान्यः क्लीबवेषेण मानवः ।
शरैरेनं सुनिशितैः पातयिष्यामि भूतले ॥ १५ ॥

वैशंपायन उवाच ।

तस्मिन्ब्रुवति कौरव्ये धार्तराष्ट्रे परंतपे ।
भीष्मो द्रोणः कृपो द्रौणिः पौरुषं तदपूजयन् ॥ १६ ॥

इति विराटपर्वणि गोहरणे अर्जुनप्रशंसा नाम
षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

13 *a* L पार्थस्य । BEN विकत्थते ।
*b* L कलां पूर्णां । Edns ABCEFGHM च for वा । Edns BCDEGI KMN कला पूर्णो ।
14 *b* Edns G द्वादशाब्दान् BE द्वादशानिह C द्वादशाब्दा M द्वादशान्वा । Edn CG विशांपते BE वत्सरान् L च वत्सरान् N विवत्सरान् ।
15 *a* BE यदि for अथ । GK एकः for एषः । E अन्य । L रूपेण for वेषेण । I चागतः for मानवः । v. omitted in C.
16 *a* HK omit वैशंपायन उवाच । N वदति for ब्रुवति । N cl. except K तद्वाक् for कौरव्ये । Edns ABDEHKN परंतप FLM परंतपः ।
*b* F अपूजयत् ।

---

13 *a* SK, SG omit कर्ण उवाच । S. cl. फल्गुनस्य । SK, SG, ST गुणात् अस्मास्तु । SG, ST कथ्यते SA² विकत्थते ।
*b* ST तव for न च । SK, SA¹ कलापूर्णः SG, SA² कलां पूर्णः ST कर्णपूर्णः SG, SA च for वा ।
14 *a* SA¹ कर्म for कार्यम् । SG, ST, SA महत् for भवेत् ।
*b* SK, SG, SA च for हि । ST अन्यानि वैत्सरान् ।
15 *a* SK, SG, ST, SA¹ वा SA² एव for एषः । S. cl. रूपेण for वेषेण । SK, SG, SA देवराट् for मानवः ।
16 *a* S. cl. तस्मिन्वदति तां वाचं । ST परंतप ।
*b* ST अपूरयन् for अपूजयन् । adh. continued in S. cl.

## ॥ सप्तत्रिंशोऽध्यायः ॥

वैशंपायन उवाच।

तां शमीमुपसंगम्य पार्थो वैराटिमब्रवीत्।
सुकुमारं समाज्ञातं संग्रामे नातिकोविदम् ॥ १ ॥
समाज्ञातो मया क्षिप्रं धनूंष्याहर चोत्तर।
नेमानि हि त्वदीयानि सोढुं शक्ष्यन्ति मे बलम् ॥ २ ॥
भारं वापि गुरुं सोढुं कुञ्जराश्वान्प्रमर्दितुम्।
मम बाहुसुविक्षेपं शत्रूनिह विजेष्यतः ॥ ३ ॥
तस्माद्भूमिंजयारोह शमीमेतां पलाशिनीम्।
अस्यां हि पाण्डुपुत्राणां धनूंष्यवहितान्युत ॥ ४ ॥

XXXVII. 1 *a* DN समुपागम्य।
*b* Edns BCDEG समाज्ञाय H महाप्राज्ञ K अविज्ञातं L अविक्रान्त।
2 *a* Edns BCDEGHKLN समादिष्टो for समाज्ञातो। F शीघ्र। Edns DGL अवहर C च हर K बह्र च BE आवह च for आहर च।
*b* BE ह D च for हि। BE मद्बलम्।
3 *a* Edns CEGKLMN चापि for वापि। All except AN वोढुं for सोढुं। All except DH कुञ्जर वा H कुञ्जरान् वा।
*b* Edns CDGN read वा after मम & omit सु before विक्षेपम्। BE बाह्वोर्विनिक्षेप HK बाहुविनिक्षेप L बाह्वोर्विनिष्पेषं।
4 *b* All except AFM निहितानि for अवहितानि। L वै N च for उत।

XXXVII. 1 *a* S cl. अभिसगम्य।
*b* S. cl. सुसंवर्धित पित्रा समराणामकोविदम्।
2 *a* S cl. समादिष्टो for समाज्ञातो। S cl. धनुष्याण्यवरोपय for धनूंष्या &c
*b* S cl. इष्वासनानीह for हि त्वदीयानि।
3 *a* S. cl माल भार गुरु भेत्तुं कुञ्जर वा प्रमर्दितुम्। (SG, ST भर्तुं SA हर्तुं for भेत्तुम्)
*b* S. cl. मम वा बाहुविक्षेपम्। SA[1] विजे
4 *a* SK आरुह्य।
*b* SA[2] च for हि। S cl निहितानि।

युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ।
ध्वजाः शराश्च शूराणां दिव्यानि कवचानि च ॥ ५ ॥
अत्र चैव महावीर्यं धनुः पार्थस्य गाण्डिवम् ।
एकं शतसहस्रेण संमतं राष्ट्रवर्धनम् ॥ ६ ॥
व्यायामसहमत्युग्रं तृणराजसमं महत् ।
सर्वायुधमहामात्रं शत्रुसंबाधकारकम् ॥ ७ ॥
सुवर्णविकृतं दिव्यं श्लक्ष्णमायतमव्रणम् ।
अलं भारं गुरुं सोढुं दारुणं चारुदर्शनम् ॥ ८ ॥
तादृशान्येव सर्वाणि बलवन्ति दृढानि च ।
युधिष्ठिरस्य भीमस्य यमयोश्च तथोत्तर ॥ ९ ॥

उत्तर उवाच ।

अस्मिन्वृक्षे किलोद्बद्धं शरीरमिति नः श्रुतम् ।
तदहं राजपुत्रः सन्स्पृशेयं पाणिना कथम् ॥ १० ॥

6 *a* Edns ACFGHKN एतत् for एव ।
*b* CL एव for एकम् । Edns ABCEGHKLN त्समितम् ।
7 *a* All except BE अत्यर्थम् for अत्युग्रम् । C तृणां राजसम for तृणराजसमम् ।
*b* AH °महामत्र ।
8 *b* Edns CDGHKLM वोढुम् । FM °शोभन for °दर्शनम् ।
9 *b* Edns CG बाभत्सोर्यमयोस्तथा for यमयोश्च तथोत्तर । Edns CDG & N have the end of an Adh ( अस्त्रदर्शनं ) at this verse
10 *a* BE मृत बद्ध LM किलाबद्ध ।

---

5 *b* ST तूणाश्च for शूराणाम् । SA उत for च ।
6 *a* SK एव त for चैव ।
*b* SK, SG, SA संमित ST निर्मित for समतम् ।
7 *a* SA[2] °समम् for °सहम् । S cl अत्यर्थम् for अत्युग्रम् ।
*b* SK, SG, ST सर्वारिक्षयकारकम् SA सर्वारिक्षयकारिणम् for शत्रु &c.
8 *a* ST interch दिव्यम् and श्लक्ष्णम् ।
*b* SK वारुण च सुदर्शनम् SA[1] वारुण चारुदर्शनम् SA[2] कुञ्जर वा प्रमर्दितुम् ।
9 *b* SK बीभत्सोर्यमयोस्तथा for यमयोश्च &c. SG, ST, SA omit this line
10 *a* S cl शरीरमिह चासक्त शम्यां शुष्क पुरा किल । (ST इष for इह । SA[1] शाम्य ।)

नैवंविधं मया युक्तमारब्धुं क्षत्रयोनिना ।
महता राजपुत्रेण मन्त्रमतविदा सदा ॥ ११ ॥
स्पृष्टवन्तं शरीरं मां शववाहमिवाशुचिम् ।
कथमव्यवहार्यं वै कुर्वीथास्त्वं बृहन्नले ॥ १२ ॥

बृहन्नलोवाच ।

व्यवहार्यश्च राजेन्द्र शुचिश्चैव भविष्यसि ।
धनूंष्येतानि मा भैषीः शरीरं नात्र विद्यते ॥ १३ ॥
दायादं मत्स्यराजस्य कुले जातं यशस्विनम् ।
कथं त्वां निन्दितं कर्म कारयेयं नृपात्मजम् ॥ १४ ॥

11 *a* Edns ABCEGKLN आलब्धुम् M आरब्ध ।
*b* L महता । Edn² CG °यज्ञ° BE °मति° H °वृत्ति° for °मत° । Edns BEF K²LN सता C तथा for सदा ।
12 *a* N शारव्याधम् for शववाह ।
*b* Edns ABCE कथ वाव्य° G कथं चाव्य° H कथ मां व्य° K कथमाव्य ।
13 *a* L व्यवहार्या । N लोकेषु for राजेन्द्र । D अपि for एव । ADFHM भविष्यति ।
*b* Edns CDGN मा भैस्त्व । line 13 *b* omitted in F.
14 *a* Edns G मनस्विनाम् CDEHKL मनस्विन for यशस्विनम् ।
*b* Edns C interchange कथ & त्वाम् । F हि M विदित for निन्दितम् । Edn¹ D कारयेऽहम् । All except CN नृपात्मज ।

---

11 *a* SK आरब्धुम् ST आरोढुम् ।
*b* SK °यज्ञ° ST °तन्त्र° for °मत° । SK सता for सदा । vv. 11 & 12 omitted in SG & SA
12 *b* SK कथंवा व्य° । ST कथमव्यवहार्यं च । ST कारयेत् for कुर्वीथाः । SK, ST बृहन्नडे ।
13 *a* SA¹ एतानि for राजेन्द्र । SK, SG, SA शुद्ध° for शुचि° । SK, SG, SA भविष्यसि । line omitted in ST.
*b* S. cl. मा भैस्त्वम् ।
14 *a* SA¹ मत्स्यपतेर्नाम for मत्स्यराजस्य । SK, SG, SA मनस्विनम् for यशस्विनम् ।
*b* SK, SG, SA मा for त्वाम् । SK, SG, SA कारये त्वाम् । S. cl. नृपात्मज ।

वैशंपायन उवाच ।

एवमुक्तः स पार्थेन रथात्प्रस्कन्द्य कुण्डली ।
आरुरोह स तं वृक्षं वैराटिरवशस्तदा ॥ १५ ॥

तमन्वशासच्छत्रुघ्नो रथे तिष्ठन्धनंजयः ।
परिवेष्टनमेतेषां क्षिप्रं वै तद्व्यपानुद ॥ १६ ॥

सोऽपहृत्य महार्हाणि धनूंषि पृथुवक्षसाम् ।
परिवेष्टनपत्राणि विमुच्य समुपानयत् ॥ १७ ॥

तथा संनहनान्येषां परिमुच्य समन्ततः ।
अपश्यद्गाण्डिवं तत्र चतुर्भिरपरैः सह ॥ १८ ॥

15 *b* Edns BCDGK²LN शमी° K तदा for स तम् । L °टिरभवत्तदा । तथा for तदा ।

16 *b* Edns CDFGHLMN चैव A वै K चैतद् for वै तद् । M व्यपानयद line omitted in BE.

17 *a* K सोऽवहृता for सोपहृत्य । line omitted in BE.M omits the whc of this v. 17.

*b* K °वस्त्राणि L °यंत्राणि for °पत्राणि ।

18 *a* BE ततः H अथ for तथा । D संहननानि FM संनिहितानि । N स उत्तरः for समंततः ।

*b* D गांडीवं HL गाण्डिवम् ।

---

15 *b* S. cl. शमी° for स तम् ।

16 *a* ST वैराटिमपराजितः for रथे &c.

*b* SK, SG, SA सर्वं मुञ्चस्व माचिरम् ST क्षिप्रं चैवमपाकुरु for क्षिप्रं वै &c.

17 *a* ST सोपप्लुत्य । SK reads this v. after v. 15 *b*.

*b* ST °यंत्राणि for °पत्राणि. । ST स्थितान्युपानयत । v. omitted in SG, SA.

18 *a* SK, SG, SA तेषां संनहनीयानि ST संनह्नान्येषां । ST सविमुच्य. ST परिमुच्य SA विप्रमुच्य । SK, SG, SA परन्तपः for समंततः ।

*b* S. cl. तत्र गाण्डीवं । ST धनुर्भिः for चतुर्भिः ।

तेषां विमुच्यमानानां धनुषामर्कतेजसाम् ।
विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव ॥ १९
स तेषां रूपमालक्ष्य भोगिनामिव जृम्भताम् ।
हृष्टरोमा भयोद्विग्नः क्षणेन समपद्यत ॥ २० ॥
संस्पृश्य तानि चापानि भानुमन्ति दृढानि च ।
वैराटिरर्जुनं राजन्निदं वचनमब्रवीत् ॥ २१ ॥

इति विराटपर्वणि गोहरणपर्वणि अर्जुनास्त्रकथनं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः ।

उत्तर उवाच ।

बिन्दवो जातरूपस्य शतं यस्मिन्निपातिताः ।
सहस्रगोधाः सौवर्णाः कस्यैतद्धनुरुत्तमम् ॥ १ ॥

19 *a* Edns BDEGHKLN अकवर्चसाम् ।
*b* N उदये यथा ।

20 *a* Edns ACDGKLN आलोक्य BE आलभ्य M आलस्य for आलक्ष्य L °जृम्भिणां ।
*b* L क्षणाच्च M क्षीणेन ।

21 *a* All except ACM बृहति for दृढानि । N reads सस्पृशास्तानि चापानि भासुराणि दृढानि च ।
*b* HM अब्रवित् । this same Adh is continued in K

* * * * *

XXXVIII. 1 *a* K यस्य सौवर्णा शतशोभा° for जातरूपस्य शत यस्मिन् ।
*b* Edns CGN °कोटि° AL °शोध° DHK कोट्य for गोधा । A omit कस्यैतद्धनुरुत्तमम् here and वारणा यत्र सौवर्णा in the next line

---

19 *a* SA[1] कम° for अक । S cl वचसाम् for तेजसाम् ।
*b* ST उदये यथा ।

20 *a* S cl आलोक्य for आलक्ष्य ।
*b* S cl प्रवेपितननुस्तदा for क्षणेन &c. (SG धनुः for ननु । ST तथा for तदा ।)

21 *a* S cl बृहन्ति for दृढानि ।

* * * * *

XXXVIII.1 *a* SK, SA बिन्दवश्चात्र सौवर्णा मणिप्रोता समन्ततः । ST °रूपाश्च पृष्ठे ह्यस्मिन्निवेशिताः । l. omitted in SG
*b* ST सशकगोधा for सहस्रगोधा । S cl द्वीपिनश्च चतुर्दश for कस्य &c

38 Mt.

वारणा यत्र सौवर्णाः पृष्ठे भासन्ति दन्तिनः।
सुपार्श्वं सग्रहं चैव कस्यैतद्धनुरुत्तमम् ॥ २ ॥
तपनीयस्य शुद्धस्य षष्टिर्यत्रेन्द्रगोपकाः।
पृष्ठे विभक्ताः शोभन्ते कस्यैतद्धनुरुत्तमम् ॥ ३ ॥
सूर्या यस्य च सौवर्णास्त्रयो भासंन्ति दंशिताः।
तेजसा प्रज्वलन्तो हि कस्यैतद्धनुरुत्तमम् ॥ ४ ॥
शलभा यत्र सौवर्णास्तपनीयविभूषिताः।
सुवर्णमणिचित्रं यत्कस्यैतद्धनुरुत्तमम् ॥ ५ ॥
इमे च कस्य नाराचाः सहस्रं लोमवाहिनः।
समेताः कलधौताग्रा उपासङ्गे हिरण्मये ॥ ६ ॥

DEGHK यस्य for यत्र। All except C दंशिताः for दन्तिनः। L reads a verse (2) after v. 5 ff.

3 a Edns पृष्ठे यस्य for षष्टिर्यत्र। CDGH यस्य for यत्र। M यत्रेंद्रगोपिका। verse omitted in BELM.

4 a Edns BEGKLN यत्र for यस्य। D तु यत्र for यस्य च। C यस्येह।
b D च for हि। K omits portion from सौवर्णाः in a here to यत्र v. 5a.

5 a N तपनीया। HKLN विचित्रिताः for °विभूषिताः।
b Edns CDHLN च for यत्। verse omitted in ABEM.

6 a N कस्य च। AC सहस्राः Edns BEGHL साहस्राः for सहस्रम्।
b Edns BCEDGKN समंतात् for समेताः। N कुंद° for कल°। D कुंदधौताश्च। L °धौताग्रया। K उपसगे।

---

2 a S. cl. ऋषभा यस्य सौवर्णाः पृष्ठे तिष्ठन्ति शृङ्गिणः। (ST यत्र for यस्य & दंशिताः for शृङ्गिण.।
b & vv. 3–5 not found in S. cl.

6 a S. cl. कस्येमेक्षुर for इमे च कस्य। ST सहिताः for सहस्रं। SK, SG लोमवापिन.।
b not in S. cl.

विपाठाः पृथवः कस्य गार्ध्रपक्षाः शिलाशिताः ।
हारिद्रवर्णाः सुनसाः पीताः सर्वायसाः शराः ॥ ७ ॥
कस्यायमसितश्चापः पञ्चशार्दूललक्षणः ।
वराहकर्णव्यामिश्राञ्छरान्धारयते दश ॥ ८ ॥
कस्येमे पृथवो दीर्घाश्चन्द्रबिम्बार्धदर्शनाः ।
शतानि सप्त तिष्ठन्ति नाराचा रुधिराशनाः ॥ ९ ॥
कस्येमे शुकपत्राभा पूर्वैरर्द्धैः सुवाससः ।
उत्तरैरायसैः पीतैर्हेमपुङ्खाः शिलाशिताः ॥ १० ॥
कस्यायं सायको दीर्घः शिलीपृष्ठः शिलीमुखः ।
वैयाघ्रकोशनिहितो हेमपत्रः त्सरुर्महान् ॥ ११ ॥

त्रिपोढाः C विशालाः for विपाठाः । Edns ACDGHKMN गार्द्धपत्राः L सांद्रपत्राः for गार्ध्रपक्षाः ।
*b* Edn² CG सुमुखाः Edn¹ D सुसमाः BEN शतशः for सुनसाः । L पीनाः ।

8 *a* MN बाणः for चापः ।
*b* CHLM वाराह⁰ । DN ⁰व्यामिश्र HK ⁰व्यामिश्रः । DN शतं K शतान् for शरान् ।

9 *a* K इषवो for पृथवो । K ⁰दर्शिनः । D सर्वाः पारशवाः परः N सर्वे पारशवाः शराः for चन्द्र &c.

10 All except A & M ⁰पत्राभैः ।
*b* Edns CHN ⁰पुंखैः । Edns CGHN शिलाशितैः D ⁰सितैः ।

11 *a* A ⁰शला⁰ BCD शिला⁰ ।
*b* All except C ⁰कोशे⁰ । CN निहतो M निहते । All except A ⁰चित्र⁰ for ⁰पत्र⁰ ।

---

7 *a* SG अपि पारावतः for विपाठाः पृथवः । SK, SG, SA गृध्रपत्रार्धवाजिताः ST गृध्रपत्राध्विताः शिताः ।
*b* S. cl. कस्येमे शिताः पञ्चशतं शराः for सुनसाः ।

8,9 vv. Not in Scl. [ cf. App. ]

10 v. not in S. cl.

11. v. not in S

पृथुलश्चित्रपङ्खश्च किङ्किणीसायको महान् ।
कस्य हेमत्सरुर्दिव्यः खड्गः परमनिर्व्रणः ॥ १२ ॥
कस्यायं विमलो खड्गो गव्ये कोशे व्यवस्थितः ।
हेमत्सरुरनाधृष्यो नैषध्यो भारसाधनः ॥ १३ ॥
कस्य पञ्चनखे कोशे सायको हेमविग्रहः ।
प्रमाणरूपसंपन्नः पीतश्चाकाशसंनिभः ॥ १४ ॥
कस्य हेममये कोशे संतप्ते पावकोपमे ।
निस्त्रिंशोऽयं गुरुः पीतः सैक्यः परमनिर्व्रणः ॥ १५ ॥
निर्दिश त्वं यथातत्वं मया पृष्टा बृहन्नले ।
विस्मयो मे परो जातो दृष्ट्वा सर्वमिदं महत् ॥ १६ ॥

इति विराटपर्वणि गोहरणे आयुधप्रश्नो नाम
अष्टत्रिंशोऽध्याय ॥ ३८ ॥

---

12 *a* Edn² DGLN सुफलः ABEM सफल H सुफाणि for पृथुलः । All except A °कोश° for °पङ्ख° । line omitted in L
*b* C हेमशत । ABEM omit visarga after दिव्य । Edns BCEG °निर्मले for निर्व्रण ।
13 *a* D विपुल for विमल । BEH गव्यकोशे । All except M समर्पित ।
*b* C हेमवत्सुरना° । D महत्सरु । K निषिद्धो for नैषध्यो । K भारसावक° N भावसाधनः ।
14 *a* Edns BCEGHMN पाश्वनखे । D हेमविश्रुत ।
*b* N प्रमारूपसुसपन्न C °रूपाक्षतुष्टा M °रूपसञ्ज्ञ । Edns ACDGHKMN omit च after पात । M आकार° for आकाश° ।
15 *a* Edns BCEGHKLM सुतप्ते DN सुतप्त° । Edns BCDEGHKN पावकप्रभे L °कप्रभ M °कोपमै ।
*b* Edns CG सायक BE खड्ग H सैव्य M एक । BE °निर्घृण M °निर्वण ।
16 *a* Edns BCDEGHKLM निर्दिशस्व A °दंशात्व M । Edn¹ यथा for मया° । A पृष्टो BE दृष्टा M पृष्ठ । C °न्नके ।

---

12 v not in S. cl
13 *a* S cl सायको दीर्घो for विमलः खड्ग॰ । S. cl च दर्शितः for व्यवस्थित ।
*b* not in S cl
14, 15 vv not in S cl
16 *a* SK, ST, SA °स्व, SG अस्य for त्वम् । SK, SA मार्ग, SG न्याय, ST न्यायस्य for °तत्वम् । SG यथा for मया । SA पृष्टो ।

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

बृहन्नलोवाच ।

यन्मां पूर्वमिहापृच्छः शत्रुसेनानिवारणम् ।
गाण्डीवमेतत्पार्थस्य लोकेषु विदितं धनुः ॥ १ ॥
सर्वायुधमहामात्रं शातकुंभपरिस्कृतम् ।
तदेतदर्जुनस्यासीद्गाण्डीवं परमायुधम् ॥ २ ॥
यत्तच्छतसहस्रेण संमतं राष्ट्रवर्धनम् ।
येन देवान्मनुष्यांश्च पार्थो विषहते मृधे ॥ ३ ॥
चित्रमुच्चावचैर्वर्णैः श्लक्ष्णमायतमव्रणम् ।
देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः ॥ ४ ॥

XXXIX 1 *a* DH अपृच्छत् L अगच्छ । Edns G शत्रसेनापहारिणम् DHKN शत्रुसेनानियहणम् C त्व तु सेनापहारिणम् ।
*b* BE लोके सुविदित ।
2 *a* A शातकौभ । Edns DGHN ⁰परिष्कृत M ⁰परिस्कृते ।
*b* Edns ABCDEGHKLN एतत् for तत् । Edns ABCDEGHKLN तत् for एतत् । H गाण्डिवम् ।
3 *a* L शत सहस्रेण ।
*b* GK सर्पाश्चैकरथ for पाथा विषहते । Edns CH विजयते D विसहते । K अजयत् । N रणे for मृधे । verse omitted in BE
4 *a* Edn[1] E बाणै K गुणै for वर्णैं । H शस्त for श्लक्ष्णम् ।
*b* A देवमानुषगधर्वैं ।

---

XXXIX 1 SK, यस्त्वया प्रथम पृष्ट शत्रुसेनागमर्दन । पाथस्येद धनुर्दिव्य गाडीवमिति विश्रुतम् ।
v omitted in S MSS
2 *a* S cl ⁰मय धनुः for परिस्कृतम् ।
*b* not in S cl.
3 *a* S. cl एतत् for यत्तत् । and सम्मित for समत ।
*b* S cl. देवासुरान् पाथः । सवान् for पार्था । SA[1] विस्कृत । S cl रण for मृधे ।
4 *a* S cl अभेद्यमभय श्यामाद्विव्यमच्छेद्यमव्रण ( SA[2] अजय SG, ST अजर. for अभय ST दिव्य श्यामम् ।)

एतद्वर्षसहस्राणि ब्रह्मा पूर्वमधारयत् ।
ततोऽनन्तरमेवाथ प्रजापतिरधारयत् ॥ ५ ॥
त्रीणिपञ्चशतं चैव शक्रोऽशीतिं च पञ्च च ।
सोमः पञ्च शतं राजा तथैव वरुणः शतम् ॥ ६ ॥
पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः ।
महावीर्यं महादिव्यमेतद्धनुरनुत्तमम् ॥ ७ ॥
एतन्मामनुसंप्राप्तं वरुणाच्चारुदर्शनम् ।
पूजितं सुरमर्त्येषु बिभर्ति परमं वपुः ॥ ८ ॥

5 *a* Ldns BCDEGKN °सहस्र तु ( K हि ) for सहस्राणि । N रक्षा for ब्रह्मा ।
*b* KLM इद् for अथ । L मनुरप्येतत् शत for प्रज पतिरधारयत् । Edn[1] अधायत for अधारयत् । Line omitted in BCL

6 *a* MN पञ्चशत । Edn[2] CDGHKM अशाति for अशीतिं । C वै for च after पञ्च ।
*b* Edns BCDEGHKLN पञ्चशत ।

7 *a* M अपि पञ्च for पञ्च च । H षष्टि ।
*b* ACN महद्दि य । Edns N एतत्तद्धनुरुत्तम H यदेतद्धनुरुत्तम । M अनुपम for अनुत्तम ।

8 *a* Edns G एतत्पाथमनुप्राप्त C एतच्चामानुर्प प्राप्तं । D एव for एतत् । BE उप सप्राप्त N अत्र सप्राप्त । BL °दृशनात् ।
*b* BE सर्वमर्त्येषु for सुरमर्त्येषु ।

---

5 *a* S cl. सहस्र तु । *b* not in S cl.

6 *a* S cl उमा ( SG, ST, SA प्रजा ) पतिश्चतु षष्टि for त्रीणि &c SA अशाति ।
*b* S. cl पचसहस्राणि ( SG °णा ) । S cl तथा च for तथैव । ( ST reads.- समा पचशत सोमो वर्षाणि वरुण शत ।

7 *a* SK पचषष्टिं च वर्षाणि for पार्थ &c S cl कौन्तेयो धारयिष्यति for वर्षाणि etc.
*b* S cl एववीर्य महावेगमेतच्च धनुरुत्तमम् । line omitted in ST

8 *a* S cl तस्माच्च वरुणादग्नि प्रेम्णा प्राह्य तच्छुभम् । अग्निना प्रतिभाव्येन दत्त पार्थाय गाण्डिवम् ।
*b* S cl प्रथित धनुरुत्तमम् ( SG पूर्वक SA[2] बिभर्ति for प्रथित )
line omitted in SA[1]

सुपार्श्वं भीमसेनस्य जातरूपग्रहं धनुः ॥
येन पार्थोऽजयत्कृत्स्नां दिशं प्राचीं परंतपः ॥ ९ ॥
इन्द्रगोपकचित्रं च यदेतच्चारुविग्रहम् ॥
राज्ञो युधिष्ठिरस्यैतद्वैराटे धनुरुत्तमम् ॥ १० ॥
सूर्या यस्मिंश्च सौवर्णाः प्रभासन्ते प्रभासिनः ।
तेजसा प्रज्वलन्तो वै नकुलस्यैतदायुधम् ॥ ११ ॥
शलभा यत्र सौवर्णास्तपनीयविचित्रिताः ।
एतन्माद्रीसुतस्यापि सहदेवस्य कार्मुकम् ॥ १२ ॥
ये त्विमे क्षुरसंकाशाः साहस्रा लोमवाहिनः ।
एतेऽर्जुनस्य वैराटे शरा आशीविषोपमाः ॥ १३ ॥
एते ज्वलन्तः संग्रामे तेजसा शीघ्रगामिनः ।
भवन्ति वीरस्याक्षय्या व्यूहतः समरे रिपून् ॥ १४ ॥

9 *a* CHN जातरूपमयं M जातिरूपग्रहं । K²L जातरूपपरिष्कृतम् ।
10 *a* N इन्द्रगोपविचित्रं च । Edns GK °रूपिणम् for °विग्रहम् ।
11 *a* D यत्र for यस्मिन् । ADM तु for च । Edns G प्रकाशन्ते । Edns G प्रकाशिनः ।
*b* C प्रज्वलंते K प्रज्वलन्तं ।
12 *b* N एवं for एतत् । C माद्रिसुतस्यापि । L अस्य for अपि ।
13 *a* Edns L सहस्रा C सहस्र DN सहस्रं । K नाराचा मर्मभेदिनः for साहस्रा लोमवाहिनः ।
*b* D वैराटेः । Edns ABCDEGHLN सर्पविषोपमाः । K reads अर्जुनस्य शरा ह्येते तेजिष्ठाना विषोल्बणाः for एतेऽर्जुनस्य &c.
14 *b* K² घ्नतः N व्यूहन्तः ।

---

9 *a* SK विश्रुत SA², SG, मिश्रक for सुपार्श्वं । SG शातकुम्भपरिष्कृतं for जातरूप &c. SK, SA² दृढं for धनुः । line omitted in ST, SA¹.
*b* SK भीमः for पार्थः । SG यस्य for येन line omitted in SA¹.
10 not in S. cl.
11 *a* S. cl. बर्हिणश्चात्र सौवर्णाश्शतचन्द्रकभूषणाः ( SA चन्द्रार्क ST भूषिता. )
*b* S. cl. नकुलस्य धनुस्त्वेतन्माद्रीपुत्रस्य धीमतः ( ST हि for त्वेतत् ) ।
12-14 vv. not in S. cl.

ये चेमे पृथवो दीर्घाश्चन्द्रबिम्बार्धदर्शनाः ।
एते भीमस्य निशिता रिपुक्षयकराः शराः ॥ १५ ॥
हारिद्रवर्णा ये चैते हेमपुङ्खाः शिलाशिताः ।
कलापो नकुलस्यैष पञ्चशार्दूललक्षणः ॥ १६ ॥
येनासौ व्यजयत्कृत्स्नां प्रतीचीं दिशमाहवे ॥
कलापो ह्येष तस्यासीन्माद्रीपुत्रस्य धीमतः ॥ १७ ॥
ये त्विमे भास्कराकाराः सर्वपारसवाः शराः ॥
एते चित्राः क्रियोपेताः सहदेवस्य धीमतः ॥ १८ ॥
ये त्विमे निशिताः पीताः पृथवो दीर्घवाससः ॥
हेमपुङ्खास्त्रिपर्वाणो राज्ञ एते महाशराः ॥ १९ ॥
यस्त्वयं सायको दीर्घः शिलीपृष्ठः शिलीमुखः ।
अर्जुनस्यैष संग्रामे गुरुभारसहो दृढः ॥ २० ॥

15 *b* K शत्रुक्षयकराः शराः ।

16 *a* H हरिद्रवर्णाः । D सुमहा. G यत्रैते HN ये चेमे Edns BCEKLM येत्वेते for ये चैते । D शिलीमुखा; N शिताः शराः for शिलाशिताः ।
*b* Edns BCDEGHLN नकुलस्य कलापोयं । K reads नकुलस्य शरा ह्येते माद्रीपुत्रस्य धीमतः for कलापो &c.

17 *a* C अजयत् ।
*b* C माद्रिपुत्रस्य । v. omitted in K.

18 *a* C ये ह्रि मे । HKM सर्वेपार॰ । DH पारशवाः N पारशराः ।
*b* Edns CDKN चित्रक्रियोपेताः । line omitted in BE; verse omitted in A.

19 *b* K सुपर्वाणो । L राज्ञश्चैते ।

20 *a* A शिलापृष्ठ BE शिलापृष्ठः M शलीपृष्ठः D शिलाधृष्टः । AM शलीमुखः BE शिलामुखः ।
*b* D एव L इव *for* एषः । GHL गुरुभार । the portion *from* सहः *in v. 20* to the end of गुरुभार in v. 21 is omitted in M.

---

14–19 vv. not in S. cl.
20 *a* SA, SG, ST दिव्यः for दीर्घः । S. cl. गव्ये कोशे च दंशितः (ST व्यवस्थितः for च दंशितः) ।
*b* S. cl. पार्थस्यायं महाघोरः सर्वभारसहो महान् ।

वैयाघ्रकोशे सुमहान्भीमसेनस्य सायकः ।
गुरुभारसहो दिव्यः शात्रवाणां भयंकरः ॥ २१ ॥
सुफलश्चित्रकोशश्च हेमत्सरुरनुत्तमः ।
निस्त्रिंशः कौरवस्यैष धर्मराजस्य धीमतः ॥ २२ ॥
यस्तु पञ्चनखे कोशे निहितश्चित्रविग्रहे ।
नकुलस्यैष निस्त्रिंशो गुरुभारसहो दृढः ॥ २३ ॥
यस्त्वयं पिङ्गलः खड्गो गव्ये कोशे समर्पितः ।
सहदेवस्य विद्ध्येनं सर्वभारसहं दृढम् ॥ २४ ॥

इति विराटपर्वणि गोहरणे आयुधकथनं नाम
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

21 *a* BE वैयाघ्रः । Edns ABCEGHKLN कोशः for कोशे । A च GHL तु for सु॰ ।
*b* GHL गुरुर्भार॰ । M हतः for सहः । C बाणानां च BE शात्रवानाम् । N भयंकरं ।

22 *a* D श्वफल्कः H सुफणः N अमणः for सुफलः । N तु for च ।
*b* L निस्त्रिश । K ॰स्येह L ॰स्यैव M ॰स्यैषा for ॰स्यैषः ।

23 *a* Edns BCDEGHKLN पाचनखे । Edns योधने A वीर्यवान् BCEGH माधने K शोभिते N सखने L मापनः for विग्रहे । D चित्रितत्सरुः for चित्रविग्रहे ।
*b* L नकुलस्यैव निस्त्रशः । H गुरुर्भार ।

24 *a* Edns CDGKN विपुलः BEH विमलः for पिङ्गलः । BE गव्य॰ ।
*b* L निस्त्रिंशः for विद्ध्येनं । L ॰सहोदृढः N ॰सहं गुरु ।

---

21 *a* S. cl. वैयाघ्रकोशो भीमस्य पञ्चशार्दूललक्षणः ( SA लक्षणाः ) ।
*b* not in S. cl.

22 *a* not in S. cl.
*b* S. cl. राज्ञो युधिष्ठिरस्याय कुन्तीपुत्रस्य धीमतः ।

23 ver. not in S. cl.

24 S. cl reads for this ver:– यस्त्वयं पिङ्गलः खड्गश्चित्रो मणिमयत्सरुः । सहदेवस्य खड्गोय भारसाहोऽरिदर्शिनः ॥

## ॥ चत्वारिंशोऽध्यायः ॥

उत्तर उवाच।

सुवर्णविकृतान्येषामायुधानि महात्मनाम्।
रुचिराणि प्रकाशन्ते पार्थानामाप्तकारिणाम् ॥ १ ॥
क्व नु स्यादर्जुनः पार्थः कौरव्यो वा युधिष्ठिरः।
नकुलः सहदेवश्च भीमसेनश्च पाण्डवः ॥ २ ॥

सर्व एव महात्मानः सर्वेऽमित्रविनाशनाः।
राज्यमक्षैः पराकीर्य न श्रूयन्ते कथंचन ॥ ३ ॥

XL. 1 *a* All except K इमानि for एषाम्।
*b* M प्रकाश्यते। BE पंचानाम् for पार्थानाम्। Edns BECG आशु° for आप्त° K अमितौजसां for आप्तकारिणाम्।

2 *a* N कुतश्चित् Edns ACDGHKLM कनुस्वित्। L शूरः for पार्थः। K क्व च राजा for कौरव्यो वा।
*b* HN वा for च ( first ) K वीर्यवान् for पाण्डवः।

3 *a* Edns BDEGH सर्वामित्र°। M सर्वे क्लेशविकाशनाः।
*b* BE राज्येवाक्षैः पारकीये। BEKL कदाचन D क्व ते गताः।

---

XL. 1 *a* SK, SG, SA °रुचिराणि for विकृतानि। ST इह for एषाम्। ST शस्त्राणि-विविधानि च for आयुधानि &c.
*b* SK आशुकारिणाम्। ST अमरकारिनाम्। line omitted in SG, SA.

2 S. cl. has 5 ver for this v:-
( *a* ) क्व धर्मराजः कौन्तेयो धर्मपुत्रो युधिष्ठिरः। and after some lines giving epithets ( vide App. )— ( *b* ) भीमसेनार्जुनौ चापि सर्वे ते मातुला मम। नकुलः सहदेवो वा सर्वास्त्रकुशलो रणे ॥
( *a* ) SG, SA कौरव्यः for कौन्तेयः। ( *b* ) SA[2] ST चैव for चापि। ST सर्वास्त्रकृतनिश्चयौ for सर्वे ते &c. ST अपि for वा। SG, SA कुशलः। ST माद्रीपुत्रौ परन्तपौ for सर्वास्त्र &c.

3 *a* SK, SG, SA सर्वामित्र°। ST सर्व एते महेष्वासाः सर्वास्त्रविदुषां वराः।
*b* S. cl. पणेन च। SK, SA, ST नः for न। S cl. वन गताः for कथंचन।

द्रौपदी क्व नु पाञ्चाली स्त्रीरत्नमिति नः श्रुतम् ।
जितानक्षैस्तदा कृष्णा तानेवान्वगमत्स्वयम् ॥ ४ ॥

अर्जुन उवाच ।

अहमस्म्यर्जुनः पार्थः सभास्तारो युधिष्ठिरः ।
बल्लवो भीमसेनश्च चित्रान्नरसपाचकः ॥ ५ ॥
अश्वबन्धोऽथ नकुलः सहदेवस्तु गोपनीः ।
सैरन्ध्रीं द्रौपदीं विद्धि यस्यार्थे कीचको हतः ॥ ६ ॥

उत्तर उवाच ।

दश पार्थस्य नामानि यानि पूर्वं श्रुतानि मे ।
प्रब्रूयास्तानि यदि मे श्रद्दध्यां सर्वमेव ते ॥ ७ ॥

4 *a* Edns C च N अथ for नु । N भुवि for इति । Edns BCDEHKN विश्रुता KL न श्रुतं G न श्रुता ।
*b* All except M वनम् D वने for स्वयम् ।
5 *a* D मात्स्य for अस्मि ।
*b* Edns BCEKLN तु for च । All except M & A पितुस्ते M मृष्टान for चित्रान्न । L रसपाचकः for रसपाचकः ।
6 *a* BELM अथ D च for तु । Edns ACDGHMN गोकुले L गोकुलिः K[2] गोपतिः ।
7 *a* D & H interch. पार्थस्य & नामानि । H पूर्व० । C ते for मे ।
*b* N त्व for प्र० । M तस्सत्य यदि मे ब्रूयात् । 1 omitted in C.

---

4 *a* ST क च SK, SG, SA चापि for क नु । SA[2] कल्याणी । SK मे श्रुता SG, ST, SA विश्रुता ।
*b* ST जिता S cl. चाक्षैः । ST, SA[1] तथा for तदा SA[2] तात for कृष्णा । S. cl. वने for स्वयम् ।
5 *a* SA अपि ST अति for अस्मि । SK, SA, ST नाम SG नाम्ना for पार्थः । SK, SG, ST कङ्को नाम्ना for सभास्तारो ।
*b* S. cl. भीमसेनस्तु वल्लः । S. cl. पितुस्ते for चित्रान्न० । SG, ST, SA परिचारकः for रसपाचक ।
6 *a* ST अश्वबन्धु. । S cl. तु for अथ । S. cl. गोपतिः ।
*b* SK, SG, ST यदर्थे । ST कीचका हता. ।
7 *a* SK, SA, SG श्रूयते मे ( SA[2] वै ) कथासु च ST विख्यातानि महात्मनः for यानि &c.
*b* SG, SA मृयास्त्व यदि जानीते । SA श्रद्धेयं वचस्तव SG श्रद्दधीये वचस्तव, ST श्रद्दास्याद्वचनं तव ।

अर्जुन उवाच ।

अहं ते कथयिष्यामि दश नामानि मे पुनः ।
वैराटे शृणु तानि त्वं यानि पूर्वं श्रुतानि ते ॥ ८ ॥
अर्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवाहनः ।
बीभत्सुर्विजयः कृष्णः सव्यसाची धनंजयः ॥ ९ ॥

उत्तर उवाच ।

केनासि विजयो नाम केनासि श्वेतवाहनः ।
किरीटी नाम केनासि सव्यसाची कथं भवान् ॥ १० ॥
अर्जुनः फाल्गुनो जिष्णुः कृष्णो बीभत्सुरेव च ।
धनंजयश्च केनासि प्रब्रूहि मम तत्त्वतः ॥ ११ ॥

8 *a* Edns ABEGLN हन्त तेऽहं समाचक्षे D हन्त ते ह तदाचक्षे D हंत ते ह तदाचक्ष्ये H अह तु ते समाचक्षे । K हन्त for अहम् । All except M यानि मे for मे पुनः ver. omitted in C.

*b* H इह for त्वम् 8 *b*. om in ABEKLMN ( 3 folios of F missing )

9 *a* A पार्थः $A^2$ जिष्णुः ।

10 *b* K चैव for नाम । M °साचि-भवेत् ।

11 *a* H फल्गु° । N omits portion from कृष्णः in v 9 to जिष्णुः here.

*b* L °स्य for °श्च । Edns CG ब्रूहि तद् BE ब्रूयाहि for प्रब्रूहि ।

---

8 *a* SG, SA हंत for अहम् । S. cl. तर्हि तदाचक्षे । SK तानि मे SG, ST SA यानि मे for मे पुनः ।

9 *a* S. cl. फल्गुनो ।

*b* S. cl. पार्थः for कृष्णः ।

10&11*a* S. cl. reads these lines as:– सव्यसाची च केनासि जिष्णुर्बीभत्सुरेव च । अर्जुनः फाल्गुनः पार्थः किरीटी केन सारथे । ( SA कृष्णः for जिष्णुः । SA जिष्णुः पार्थः for पार्थः किरिटी & adds असि after केन । order of names in ST rather agrees with our text above:– ST has किरिटी केन चेवासि सव्यसाच्यासि केन तु । अर्जुनश्चासि केनासि फल्गुनो जिष्णुरेव च ।

*b* ST बीभत्सुः for केनासि । SA शंस वद बृहन्नले SK, SG वद शंस बृहन्नले ST कृष्णः केनासि शंस मे ।

श्रुता एतस्य वीरस्य केवला नामहेतवः ।
तत्सर्वं यदि मे ब्रूयाः श्रद्दध्यां सर्वमेव ते ॥ १२ ॥

अर्जुन उवाच ।

सर्वाञ्जनपदाञ्जित्वा वित्तमाच्छिद्य केवलम् ।
मध्ये धनस्य तिष्ठामि तेन माहुर्धनंजयम् ॥ १३ ॥

अभिप्रयामि संग्रामे यदहं युद्धदुर्मदम् ।
नाजित्वा च निवर्तामि तेन मां विजयं विदुः ॥ १४ ॥

श्वेताः काञ्चनसन्नाहा रथे युज्यन्ति मे हयाः ।
संग्रामे युध्यमानस्य तेनाहं श्वेतवाहनः ॥ १५ ॥

12 *a* All except AM मे तस्य for एतस्य ।
*b* M तत्मर्यं । C ब्रूया D ब्रूहि M ब्रूयात् । BE तत् for ते ।

13 *a* Edns CG आदाय N आसाय for आच्छिद्य ।
*b* Edns ABDEKN तेनाहुर्मांम् C तेनोचुर्मा L तेन चाहु. ।

14 *a* BE अतिप्रायामि । Edns BCDFGKLN °दुर्मदान् H °दुर्मदः ।
*b* All except GL वि° । for च ।

15 *a* D तिष्ठति G युज्यंत ।

---

12 *a* S. cl. मे तस्य for एतस्य ।
*b* omitted in S. cl.

13 *a* SK सर्वाञ्जित्वा जनपदान् । S. cl. धनं च for वित्तम् । ST आहृत्य for आच्छिद्य ।
SK, SG, SA सर्वशः for केवलम् ।
*b* S. cl. तिष्ठन्तम् । SK, SG तन्माम् SA तस्मात् ST तेन च for तेन मा ।

14 *a* SA[2] यम् SK यदा for यत् । SK, SG °दुर्मदान् SA, ST °दुर्मदः ।
*b* S. cl. अजित्वा न for नाजित्वा च । SK, SG, SA[1] विवर्तेयम् ST निवर्तेऽहम् ।
SK वै SA[1] मा for माम् ।

15 *a* SA[1] ते for मे ।
*b* SK, SG, SA शत्रुभिः for सङ्ग्रामे । ST मां for अहम् ।

उत्तराभ्यां च पूर्वाभ्यां फल्गुनीभ्यामहं दिवा ।
जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः ॥ १६ ॥
पुरा शक्रेण मे दत्तं युध्यतो दानवर्षभैः ।
किरीटं मूर्ध्नि सूर्याभं तेन माहुः किरीटिनम् ॥ १७ ॥
न कुर्यां कर्म बीभत्सं युध्यमानः कथंचन ।
तेन देवमनुष्येषु बीभत्सुरिति मां विदुः ॥ १८ ॥
उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे ।
सव्यदक्षिणतो हन्मि सव्यसाचीति मां विदुः ॥ १९ ॥

16 *a* Edns फल्गुनीभ्याम् C फाल्गुनीभ्यां for च पूर्वाभ्याम् । DL तु for च । Edns C नक्षत्राभ्याम् for फल्गुनीभ्याम् ।
*b* BE हिमवत् ।
17 *a* C युध्यते । K दानवोत्तमैः ।
*b* H शत॰ for मूर्ध्नि । Edns BCDGKLN तेनाहुर्माम् A तेन मां वे । ver. omitted in E.
18 *a* M यत्कुर्यात् । A² भीत्यान्मे DKLM बीभत्सुं H बीभत्सुः । Edns युध्यमानम् ।
*b* All except A विश्रुतः for मां विदुः । verse omitted in E.
19 *a* D शिक्षितौ for दक्षिणौ । HL पाणौ । CG विकर्षणौ । A² धनुषाह समायुक्तः शरवर्षं सृजामि च for this line.
*b* All except A तेन देवमनुष्येषु for सव्यदक्षिणतो हन्मि । K विश्रुतः for मां विदुः । verse omitted in E.

---

16 *a* S. cl. तु for च । SA² पूर्णाभ्यां ।
*b* ST जातोसि फाल्गुने मासि । S. cl. फल्गन । S. cl. arranges these verses according to its order of the ten names ( vide at v. 9 above ).
17 *a* S. cl. explains किरीटी as:- किरीटं सूर्यसंकाशं भ्राजते मे शिरोगतम् । रणमध्ये रथस्थस्य सूर्यपावकसन्निभम् ॥ १ ॥ अच्छेद्यं रुचिरं चित्रं जाम्बूनदपरिष्कृतम् । इन्द्रदत्तमनाहार्यं तेनाहुर्मां किरीटिनम् ॥ २ ॥ ( ST reads a line similar to our *a* before these vv. having only दानवैः सह for दानवर्षभैः । v. 1a:-ST ममसूर्याभं for सूर्यसकाशम् । SA¹ रथमध्य । SG शिरस्थस्य SA² रणस्थस्य । 2-ST अभेद्यं for अच्छेद्यम् । SG चाहुः SA माहुः for आहुर्माम् । )
18 *a* ST यत् for न । SK, ST कदाचन ।
*b* ST देवा मनुष्याश्च ।
19 S. cl. reads for this verse:- उभौ मे तुल्यकर्माणौ गाण्डीवस्य विकर्षणे । भुजौ मे भवनः सङ्ख्ये परसैन्यविनाशिनौ । तयोः सव्योऽधिकस्तस्मात्सव्यसाचीति मां विदुः । ( v. 1a *a* SA नौ for मे । *b*-SG प्र॰ for मे । ST सुमुखे for भवनः । SA ॰विनाशने SG, ST ॰विनाशनौ । *c*-ST तु for इति । )

पृथिव्यां चतुरन्तायां वर्णो मे दुर्लभो यतः।
करोमि कर्म शुक्लं च तस्मान्मामर्जुनं विदुः ॥ २० ॥
युध्यमानस्य संग्रामे जय एव मतो मम।
तेन देवमनुष्येषु जिष्णुर्नामास्मि विश्रुतः ॥ २१ ॥
कृष्ण इत्येव दशमं नाम चक्रे पिता मम।
कृष्णावदातस्य सतः प्रियत्वाद्बालकस्य वै ॥ २२ ॥
वैशंपायन उवाच।
ततः पार्थं स वैराटिरभ्यवादयतान्तिकात्।
अहं भूमिंजयो नाम नाम्नाहमपि चोत्तरः ॥ २३ ॥

20 *a* C पृथिव्याश्चतुरंताया। N चतुर्णायां। All except DN समः D मतः for यतः।
*b* DKL तेन for तस्मात्।

21 *a* All except D:—अहं दुरापो दुर्धर्षो दमनः पाकशासनिः। (N मदनः for दमनः।)
*b* Edn[1] CMN जिष्णुनामास्मि H ॰नाम्नास्मि।

22 *a* BE कृष्णम्। N इत्यस्य। M पितामहं।
*b* N ॰वतारस्य सदा। CD सदा for सतः।

23 *a* Edns GHKLM ततः स पार्थम्। Edns BCDEHN ॰यदन्तिकात् KL ॰यदंतिके।
*b* HL भूमिजयो। D नामा। K द्वितीयम् for नाम्नाहम्। KL उत्तरं।

---

20 *a* SK, SG, SA सागरान्तायाम्। ST सुवर्णो for वर्णो मे। SK, SG, SA समः ST मम for यतः।
*b* S. cl. शुद्धत्वाद्ध्रुवत्वाच्च। S. cl. तेन for तस्मात्।

21 *a* S. cl. योत्स्यामि तैरहं सर्वैर्न मे तेभ्यः पराभवः। (SG, SA यैः for तैः।)
*b* SG नच for तेन। SA[1] ॰नाम्ना॰। SA[2] जिष्णुनामा॰।

22 *a* S. cl. reads this v. as:—कृष्णेत्येकादशं नाम प्रीत्या मे चक्रतुस्तदा। तुष्टौ च मम वीर्येण कर्मणाचाभिराधितौ ॥ referring to the gods पितामहमहेश्वरौ। vide App. ( v. ls–ST कृष्णेकादशम नाम SA, SG, ST तत्र चक्रतुः for चक्रतुस्तदा। SA चाभितोषितौ ST चामराधिपौ for चाभिराधितौ।)
S. cl. begins a new Adh. ( SK 44 ) from वैशं॰। here.

23 *a* SA, SG च for सः। SK, SG, SA[1] प्राञ्जलिस्त्वभ्यवादयत् SA[2] प्राञ्जलिः प्रत्यभाषत for अभ्य॰ &c line omitted in ST.
*b* SG, SA नाम्ना। SK, SG, SA प्रणतोऽस्मि धनंजय ST प्रीतिमानस्मि पांडव for नाम्ना &c.

दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनंजय ।
लोहिताक्ष महाबाहो नागराजकरोपम ॥ २४ ॥
यतस्त्वया कृतं पूर्वं विचित्रं कर्म दुष्करम् ।
अतो भयं व्यतीतं मे प्रीतिश्च परमा त्वयि ॥ २५ ॥
आस्थाय विपुलं वीर रथं सारथिना मया ।
कतमं यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया ॥ २६ ॥

अर्जुन उवाच ।

प्रीतोऽस्मि पुरुषव्याघ्र न भयं विद्यते तव ।
सर्वान्नुदामि ते शत्रूनरणे रणविशारदान् ॥ २७ ॥
स्वस्थो भव महाबुद्धे पश्य मां शत्रुभिः सह ।
युध्यमानं दिने ह्यस्मिन्कुर्वाणं भैरवं महत् ॥ २८ ॥

24 *a* D स्वागतेन ।
25 *a* Edns चित्रं कर्म सुदुष्करम् ।
*b* D ततो for अतो । Edns & other MSS except A finish an Adh. here.
26 *a* Edns & other MSS except A add उत्तर उवाच । before this, as the beginning of a new Adh. C अस्थाय । Edns C रुचिरम् for विपुलम् । L interch. रथ and मया ।
*b* M केनेमं for कतमम् । N प्रयुक्तो यामि for उक्तो यास्यामि । HL यथा for त्वया ।
27 *b* BEHL तुदामि for नुदामि । Edns BCDEGHKL °विशारद L °विशारदः ।
28 *a* N मुस्थो । Edns CG महाबाहो D महायुद्धे ।
*b* D युद्धमान । All except A and M विमर्दे for दिने हि ।

---

24 *a* ST त्वमेवासि धनजयः for स्वागत &c line omitted in SA[1]
*b* ST कमलाक्ष for लोहिताक्ष । SK, SG,ST °राजवरो° ।
25 *a* SG, ST, SA यत्तु for यतः । SG, SA कर्म for पूर्वम् । SK चित्र-ST चित्र-कर्म SG, SA विचित्र वै सुदुष्करम् ।
*b* ST ततो for अतो । SK, SG, SA व्यपेतम् ST प्रनष्टं for व्यतीतम् ।
26 *b* ST युक्तो for उक्तो । *b* omitted in SK, SG, SA.
27 *a* SK, SG, ST राजपुत्राय SA राजपुत्राग्र्य for पुरुषव्याघ्र ।
*b* ST रुप्यामि for नुदामि । SK, SG, SA °विशारद ST °विशारदः ।
28 *a* SK महान्युद्धे SG महाबाहो ST महायुद्धे ।
*b* S. cl. विमर्दे for दिने हि । SK, SG, SA रणम् ST रणम् for महत् ।

एतान्सर्वानुपासङ्गान्क्षिप्रमाहर मे रथे ।
अहं वै कुरुभिर्योत्स्ये अवजेष्यामि ते पशून् ॥ २९ ॥
संकल्य पक्षविक्षेपं बहुप्राकारतोरणम् ।
त्रिदण्डं तूणसंबाधमनेकध्वजसंकुलम् ॥ ३० ॥
ज्याक्षेपणं क्रोधकृतं नेमीनिनदढुन्दुभिम् ।
नगरं ते मया गुप्तं रथोपस्थे भविष्यति ॥ ३१ ॥
अधिष्ठितो मया संख्ये रथो गाण्डीवधन्विना ।
अजेयः शत्रु सैन्यानां वैराटे व्येतु ते भयम् ॥ ३२ ॥

29 *a* All except M वर्धाहि for आहर ।
*b* A²LM add अर्जुन उवाच before this l. H हि for वै । Edns BCEK योत्स्यामि । A² ⁰ध्यवजेष्यामि H ⁰सवजेष्यामि L ⁰न्यवजेष्यामि M अवजेष्यामि N निवर्तिष्यामि । G तान् for ते ।
30 *a* N सकल्य All except AN सकल्य⁰ । All except A and H बाहु⁰ for बहु⁰ ।
*b* Edns ABDEGHKN दण्ड⁰ । D ⁰ध्वज⁰ K² वेणु⁰ N तूर्ण for तूण⁰ । H सबाधानेकध्वजसमाकुलम् ।
31 *a* BE ⁰क्षेपण⁰ । C क्रोधकृत । Edn² दुदुभि FHKLM दुदुभि. ।
*b* Edn¹ ग,प्त । Edns CG रथोपस्थम् ।
32 *a* C स्वधिष्ठितो । C रथे । Edns BCDEGLN ⁰धन्वना ।
*b* A सर्व⁰ for शत्रु⁰ । M वैराट्यतु तेभय ।

---

29 *a* ST वर्धामहि रणे । SK, SG, SA वर्धाहि for आहर &c.
*b* ST ते for वै । SG, SA योत्स्यामि । SA अवजेष्यामि, ST प्रत्यानेष्यामि, SK मोक्षयिष्यामि ।
30 *a* S. cl. सकल्यागाधपरिघम् for सकल्य पक्षविक्षेपम् । SK, SG, SA बाहु⁰ for बहु⁰ ।
*b* S. cl. दण्ड⁰ । SA² स्थूण⁰ for तूण⁰ । SK, SG, ST, SA¹ नैक⁰ SA² एक⁰ । S cl ⁰समाकुलम् ।
31 *a* SK ज्याक्षेपनिनदारावम् SA ज्याक्षेपणं घोरतर SG ज्याक्षेपणक्रोधनदम् ST ज्याक्षेपणक्रोधविषमं । SK दुदुभि ।
*b* S cl. रथोपस्थम् ।
32 *a* SG, सख्ये । ST, SA ⁰धन्वना ।
*b* SK, अजय्य SA² सैन्य. SA¹ अजय. ।
40 Mt.

त्तर उवाच ।

विभेमि नाहमेतेषां जानामि त्वां स्थिरं युधि ।
केशवेनापि संग्रामे साक्षादिन्द्रेण वा समम् ॥ ३३ ॥
इदं तु चिन्तयन्नेव परिमुह्यामि केवलम् ।
निश्चयं चापि दुर्मेधा न गच्छामि कथंचन ॥ ३४ ॥
एवं युक्ताङ्गरूपस्य लक्षणैरुचितस्य च ।
केन कर्मविपाकेन क्लैब्यं त्वामिदमागतम् ॥ ३५ ॥
मन्ये त्वां क्लीबवेषेण चरन्तं शूलपाणिनम् ।
गन्धर्वराजप्रतिमं देवं वापि शतक्रतुम् ॥ ३६ ॥

अर्जुन उवाच ।

भ्रातुर्नियोगाज्ज्येष्ठस्य संवत्सरमिदं व्रतम् ।
चरामि ब्रह्मचर्यं वै सत्यमेतद्ब्रवीमि ते ॥ ३७ ॥

33 *a* D एतेभ्यो । G नाह विभेमि समरे । Edns interch, स्थिरम् & युधि ।
34 *a* C च for तु । Edns N एवम् G नून for एव ।
*b* BKM वापि for चापि । H निश्चयन्नापि । LM दुर्मेधान् । G निश्चयं नाभिगच्छामि चिंतयन् वै कथंचन ।
35 *a* G वीरागरूपस्य । Edns सूचितस्य for उचितस्य ।
*b* Edns BCDEGHLN क्लीबत्वमिदम् ।
36 *a* A °रूपेण N Edn[1] °वेशेन । D पशु° for शूल° ।
*b* BCEM चापि for वापि ।
37 *a* A वियोगा° A[2] नियोगा° । L इमम् for इदम् ।
*b* Edns व्रतचर्यम् च ।

---

33 *a* S. cl. एतेभ्यः for एतेषाम् । ST रणे स्थिरं for स्थिरं युधि ।
*b* SG समः for समम् ।
34 *b* S. cl. निश्चय नाधिगच्छामि नावगच्छामि किंचन । ( SG नाधि° for नाव° । )
35 *a* SK, SG वराङ्गरूपस्य SA वीरांगरूपस्य ST °विधस्य रूपस्य । SK सूचित° SG, SA उद्दित° ST द्योतित° for उचित° ।
*b* SK, SG, SA क्लीबत्वं–SK त्वामुपागतम् SG, SA समुपागतम् । ST क्लीबता समुपागता ।
36 *a* SK, SG, SA[2] °रूपेण for °वेषेण ।
37 *a* SG, ST °नियोगमास्थाय । ST इमम् for इदम् । *b* ST वै for ते ।

नास्मि क्लीबो महाबाहो परवान्धर्मसंयतः ।
समाप्तव्रतमुत्तीर्णं विद्धि मां त्वं नृपात्मज ॥ ३८ ॥

उत्तर उवाच ।

परमोऽनुग्रहो मेऽद्य यत्प्रतर्को न मे वृथा ।
न हीदृशाः क्लीबरूपा भवन्तीति नरोत्तमाः ॥ ३९ ॥
सहायवान्रणे चास्मि युध्येयममरैरपि ।
साध्वसं तत्प्रनष्टं मे किं करोमि ब्रवीहि माम् ॥ ४० ॥
अहं ते संग्रहीष्यामि हयाञ्छत्रून्प्रयास्यतः ।
शिक्षितो ह्यस्मि सारथ्ये तीर्थतः पुरुषोत्तमात् ॥ ४१ ॥

38 *a* H परम धर्मसाश्रितः । All except H & M सयुतः ।
*b* AM नगरिज for नृपात्मज । H परवान् धर्मसयुतः for विद्धि &c.

39 *a* BE अथ for अद्य । Edns CG यतस्तर्कों BE मतर्कोऽय D यद्वितर्को । BEL मृषा H अन्यथा for वृथा ।
*b* Edns CG तु H इह for इति । N भविष्यति & om. इति । AM नृपोत्तमाः । D नरसत्तमाः for इति &c.

40 *a* All except N °वानस्मि रणे ।
*b* Edns CN हि GH तु for तत् । G भवामि for ब्रवीहि । Edns BCDELN मे M यत् for माम् । H तत् किं करोहं भवामि ते for मे किं &c.

41 *a* D हन्त for अहम् । D °गृह्णी । Edns शत्रुरथानजान् A शत्रुगणान् जय BCDE शत्रुरथान्ज KN शत्रुरथानजः G परस्थानज H परस्थायुज L छत्रध्वजान् । D रथ for हयान् ।
*b* C विभीतो for शिक्षितो । BEL अस्म्यश्व° for ह्यस्मि । BDEKN सारथ्यं BE शासनः HN तत्वतः L धीयतः । K पुरुषोत्तमः L पुरुषर्षभः Edns ABCDE GH पुरुषर्षभ ।

---

38 *a* ST, SA[1] अहम् for अस्मि । SK °सयुतः । ST धर्मसाश्रितः SA अस्मि धर्मतः ।

39 *a* ST यः for यत् ।
*b* SG, ST, SA इह, SK तु for इति । ST नरोत्तम ।

40 *a* S. cl. अस्मि रणे for रणे चास्मि ।
*b* ST तु for तत् । SA मनसः । SG, ST, SA भवामि for ब्रवीहि । SK मे for माम् ।

41 *a* SK शत्रुनिबर्हण SG शत्रुधान्वज । ST अरकुल SA अधाहज for प्रयास्यतः ।
*b* ST च for हि । SK, SA निपुणः SG निपुणः । SA पुरुषर्षभ । ST तत्वतः शत्रुकर्षन for तीर्थ etc.

दारुको वासुदेवस्य यथा शक्रस्य मातलिः ।
तथा मां विद्धि सारथ्ये शिक्षितं नरपुंगव ॥ ४२ ॥
यस्य याते न पश्यन्ति भूमौ क्षिप्तं पदंपदम् ।
दक्षिणां यो धुरं युक्तः सुग्रीवसदृशो हयः ॥ ४३ ॥
योऽयं धुरं धुर्यवरो वामां वहति शोभनः ।
तं मन्ये मेघपुष्पस्य जवेन सदृशं हयम् ॥ ४४ ॥
योऽयं काञ्चनसंनाहः पार्ष्णिं वहति शोभनः ।
वामं सैन्यस्य मन्ये तं जवेन बलवत्तरम् ॥ ४५ ॥

42 *a* H मातलि ।
*b* CGN °पुगव KLM °पुगवः ।

43 *a* M अश्व for यस्य । ABEHM यानेन C पातेन D जातेन । DHLMN मृगं for क्षिप्तम् । A²-पदं पदात् L पद् गवां M·पदं पदीं । l. omitted in K.
*b* A दक्षिण । L युक्तं ।

44 *a* C धुर्यं for धुरं । N रोहे for °वरो । ADGK धाम । । K हरति for वहति ।
*b* D विद्धि for मन्ये ।

45 *a* CL सनाह H सन्नाहपार्ष्णिः । G शोभनं ।
*b* M वाम° । Edns CDGN समं शैब्यस्य for वाम सैन्यस्य । Edns C तं मन्ये DG मन्येह ।

---

43 *a* SG यातोन SA² यानेन for यानेन । SG, ST, SA मात्तम् for क्षिप्तम् ।
ST, SA² परपदम ।
*b* SG, SA दक्षिणं । S. cl. योक्त for युक्त । S. cl. ग्रीवेण समो ।

44 *a* SG, ST धुर्यंवहो SA² धुर्यवर्यो । SG, SA याम ।
*b* SG omits this line.

45 *a* S. cl. interchanges vv. 44 and 15. SK, SA पार्मं for पार्ष्णिम् ।
line omitted in SG, ST.
*b* SK, SG धुर्यं SA धुरं ST धर्याः for वामम् । SK शैब्यस्य ST सैन्येन । ST मन्येहं SK, SG, SA तं मन्ये for मन्ये तं ।

योऽयं वहति पार्ष्णिं तु दक्षिणामञ्चितोद्यतः ।
बलाहकादपि मतो जवेन बलवत्तरः ॥ ४६ ॥

त्वामेवायं रथो वोढुं संग्रामेऽर्हति धन्विनम् ।
त्वं च मे रथमास्थाय योद्धुमर्हो मतो मम ॥ ४७ ॥

वैशंपायन उवाच ।

ततो निर्मुच्य बाहुभ्यां वलयानि स वीर्यवान् ।
चित्रे दुन्दुभिसन्नादे प्रत्यमुञ्चत्तले शुभे ॥ ४८ ॥

46 *a* Edns CN मे पार्ष्णिम् BDGHKL ते पार्ष्णि । Edns C अमितःस्थितः A उद्दितोद्यतः BE आर्चितोद्गः DK अचितोद्यमः M ऊर्चितोद्यतः N आरे चोद्यतः ।
*b* K °हस्स्येव समो । D अनवरः Edn¹ अभिमतः for अपि मतः । Edns AC GHLN स जवे K जवतो D स वीर्य° for जवेन । Edns CGHKLN वीर्य° for बल° ।

47 *a* M मामे चायं । LM रथे । AC हन्ति for °र्हति । BE बलवत्तरं for अर्हति धन्विनम् ।
*b* Edns ACHN इमम् for मे । H omits च । D नं चेमं । K अर्हसि सत्तमः ।

48 *a* Edns CGHKM विमुच्य ।
*b* BE चित्रं । Edns CG काञ्चन° for दुन्दुभि° । Edns BCDEGM सैनादे । Edns CG तदा for तले । Edn² तले for शुभे ।

---

46 *a* SK वे पार्ष्णि SA वे मार्ष्णि ST मे वाह्य for पार्ष्णि तु । ST उचितोद्यमः SA² अभ्यितोद्यमः । SA¹ °द्यताम् । SG reads this line after v. 43. *a*.
*b* SK, ST, SA तेजसा वीर्यवत्तरः for जवेन etc. v. omitted in SG.

47 *b* S. cl. इमम् for मे ।
ST begins a new Adh. from v. 48 here ( vide App. )

48 *a* SK, SG, SA विमुच्य । SK, ST शंखपूर्णानि SG शंखमादाय SA² शंखपूर्णादि SA¹ शंखपञ्चानि–S. cl. वीरः for वलयानि &c.
*b* S. cl. तौ च दुन्दुभिसन्नादौ प्रतिमुच्य तलेशुभौ । ( v. l. ST °सन्नादौ for सन्नादौ । SG, ST प्रत्यमुञ्चत् तदशुभौ । )

कृष्णान्भङ्गीमतः केशाञ्छ्वेतेनोद्ग्रथ्य वाससा ।
अभिदध्यौ महाबाहुः सर्वास्त्राणि रथोत्तमे ॥ ४९ ॥
ऊचुश्च पार्थं सर्वाणि प्राञ्जलीनि नृपात्मजम् ।
इमानि स्म महाबाहो किंकराणीन्द्रनन्दन ॥ ५० ॥
प्रणिपत्य च पार्थः स समालभ्य च पाणिना ।
सर्वाणि मानसानीह भवतेत्यभ्यभाषत ॥ ५१ ॥
प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनोऽभवत् ।
अधिज्यं तरसा कृत्वा गाण्डीवं प्राक्षिपद्धनुः ॥ ५२ ॥
तस्य विक्षिप्यमाणस्य धनुषोऽभून्महास्वनः ।
यथा शैलस्य महतः शैलेनैवाभिजघ्नुषः ॥ ५३ ॥

49 *a* Edns BCEK भंगिमतः D भृंगायतः G ऊर्मिवतः L संयमितान् । D तत उद्ग्रथ्य for श्वेतनोद्ग्रथ्य ।
*c* Edn[1] अपि दध्यौ N प्रतिदध्यौ । A महास्त्राणि । D रथोत्तमः । K omits this l.
50 *b* Edns CDE इमे स्म परमोदाराः– D⁰दार । BGHL महोदार for महाबाहो । Edns CDE किंकराः पाडुनंदन । N इन्द्रदर्शन ।
51 *a* Edns BCE ततः पार्थः om. च & सः । KL अर्जुनस्तानि GHN तु पार्थः । H तान् N च for सः ।
*b* AFKM मनसा⁰ । HL भवं तु । D सर्वाणि मम सान्निध्यं संभवं· त्वित्यभाषत ।
52 *a* M ⁰ददतां भवत् । *b* All except AM व्याक्षिप⁰ ।
53 *a* BEN चाक्षिप्य⁰ DK[2]L व्याक्षिप्य⁰ । BDELN ⁰मानस्य । Edns C महाध्वनिः ।
*b* K महता । BE शैलेनोवाभिजघ्नतः । Edns N अवजघ्नतः ADL अभिजघ्नतः K अपिजघ्नतः । G शैलेनैवाभिनिघ्नतः ।

---

49 *a* SK, SG, SA श्लक्ष्णान्केशान्मृदून्स्निग्धान् ST कृष्णान् ते रगितान् केशान् । SG उद्ध्य SA उद्ग्रथ्य ।
*b* and 50, 51, 52 *a* omitted in SG, ST, SA.
50 *b* SK स्मो महोदार ।
51 *a* SK ततः पार्थः for च पार्थः सः ।
*b* SK मानसानि ।
52 *b* S. cl. व्याक्षिपत् ।
53 *a* ST अधिनि⁰ for मस्य वि⁰ । SG निक्षिप⁰ ।
*b* SK शैलान् for शैलेन । SK, SG आक्षिप्य SA अत्यभि⁰ for एवाभि⁰ ।

सनिर्घाताभवद्भूमिर्दिक्षु वायुर्ववौ भृशम् ।
भ्रान्तद्विजं खं तदासीत्प्रकम्पितमहाद्रुमम् ॥ ५४ ॥
तं शब्दं कुरवोऽजानन्विस्फोटमशनेरिव ।
यदर्जुनो धनुःश्रेष्ठं बाहुभ्यामाक्षिपद्द्रुतम् ॥ ५५ ॥

उत्तर उवाच ।

एकस्त्वं पाण्डवश्रेष्ठ बहूनेतान्महारथान् ।
कथं जेष्यसि संग्रामे सर्व शस्त्रास्त्रपारगान् ॥ ५६ ॥
असहायोऽसि कौन्तेय ससहायाश्च कौरवाः ।
उवाच जिष्णुर्मा भैषीः प्रहस्य स्वनवत्तदा ॥ ५७ ॥
युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदासीत्सखे मम ॥ ५८ ॥

54 *a* Edn[1] ABF सनिर्वाता Edn[2] स निर्घातो । Edn[2] N भूभित् for भूमिः ।
*b* Edns BCDEGHN °ध्वजम् for द्विजम् । D omits खं & adds च° after तदा ।
55 *a* ACDMN कुरवो राजन् ।
*b* M धनुःश्रेष्ठो । Edns CGHLN रथे BDEK रणे for द्रुतम् ।
56 *b* D जेष्यंति G जेष्यामि N °शस्त्रार्थं° ।
57 *a* C हि M अस्मि for असि ।
*b* All except AM पार्थो for जिष्णुः । D adds वैशं• । before this *b.*
58 *a* M च महा° for सुमहा° ।
*b* Edns BCDEGKLN सखा । H सहायवान् M सहायता for सखे मम ।

---

54 *a* SG महत् for अभवत् ।
*b* S. cl. अभवन् for तदासीत् । SK, SG, ST प्राकम्पन्त महाद्रुमाः ।
55 *a* S. cl. राजन् for अजानन् ।
*b* S. cl. तथा for यत् । SG, SA रथी, ST रथे, SK धन्वी for द्रुतम् ।
SG & SA finish the Adh. at this verse, while ST continues the same, but SG, ST, & SA omit all the following verses of this Adh.
SK adds वैशंपायन उवाच before v. 57*b*.
58 *b* SK सखा for सखे ।

तथा प्रतिभये तस्मिन्देवदानवसंकुले ।
खाण्डवे युध्यमानस्य का तदासीत्सहायता ॥ ५९ ॥

निवातकवचैः सार्धं पौलोमैश्च महाबलैः ।
युध्यतो देवराजार्थे कः सहायस्तदाभवत् ॥ ६० ॥

स्वयंवरे च पाञ्चाल्या राजभिः सह संयुगे ।
युध्यतो बहुभिस्तात कः सहायस्तदा भवत् ॥ ६१ ॥

उपजीव्य गुरुं द्रोणं शक्रं वैश्रवणं यमम् ।
वरुणं पावकं चैव कृपं कृष्णं च माधवम् ॥ ६२ ॥

पिनाकपाणिनं चैव कथमेतान्न योधये ।
रथं वाहय मे शीघ्रं व्येतु ते मानसो ज्वरः ॥ ६३ ॥

इति विराटपर्वणि गोहरणे उत्तरस्याभयप्रदानं नाम
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

59 *b* Edns CGHLN कस्तदासीत्सखा मम BE कस्तदासीत्सहायता DK कस्तदासीत्सहायता M कःसहायस्तदाभवत् ।

60 *a* M पौलस्तै° for पौलोमै° । H महाबल M महारथैः । H & M interch. vv. 59 & 60.

61 *a* M स्व Edns BCEGHKLN तु for च । D संगरे for संयुगे । ver. omitted in A.

62 *a* D उपजीव्यं ।
*b* C कृपा । H कृष्णः ।

63 *b* D शीघ्रं मे ।

---

59 *b* SK कस्तदासीत्सखा मम for का तदा &c.

61 *a* SK तु for च ।

62 *a* SK इन्द्रम् for शक्रम् ।
ST continues the Adh.

दिव्यानां तत्र माल्यानां गन्धः पुण्यश्च सर्वशः ।
प्रससार वसन्ताग्रे वनानामिव पुष्पिणाम् ॥ १४ ॥
रक्तारक्तानि देवानां समदृश्यन्त तिष्ठताम् ।
आतपत्राणि वासांसि स्रजश्च व्यजनानि च ॥ १५ ॥
उपशाम्यद्रजो भौमं सर्वं व्याप्तं मरीचिभिः ।
दिव्यान्गन्धानुपादाय वायुर्योधान्निषेवते ॥ १६ ॥
प्रभासितमिवाकाशं चित्ररूपमलंकृतम् ।
संपतद्भिः स्थितैश्चापि नानारत्नावभासितैः ॥ १७ ॥
विमानैर्विविधैश्चित्रैरुपनीतैः सुरोत्तमैः ।
वज्रभृच्छुशुभे तत्र विमानस्थैः सुरैर्वृतः ॥ १८ ॥

इति विराटपर्वणि गोहरणे विमानदर्शनं नाम
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

14 *a* V. omitted in M. Edn[2] CG सर्वं for तत्र । Edns BCDEGHKLN अथ for च ।
*b* Edn[1] D वसन्तादौ । Edn[1] वृक्षाणां for वनानां । Edn[2] CG भारत for पुष्पिणां ।

15 *a* Lines are interchanged in Edn[1] and D. Edns CG तत्र रत्नानि HL तत्र रक्तानि । K[2] विमानानि चकाशिरे for समदृश्यन्त तिष्ठताम् ।
*b* Edn[1] D ध्वजाश्च for स्रजश्च ।

16 *a* Edns BCDEGN उपा° for उप° । CD °शाम्य° । AF मूर्त्या L मौमे for भौमम् ।
*b* Edn[2] दिव्यगन्धान् N दिव्यगन्ध । C उपादीय । A योधान् BE देवान् । Edns ABCDEGKL असेवत MN असेवते for निषेवते ।

17 *b* D स्थितैः for स्थितै. K चैव N चापि । A °रत्नादि° CG °वर्णाव° *for* °रत्नाव° N नानारत्नैरभासयत् ।

18 *a* Edns BGHKLM उपा° for उप° ।
*b* K[2] वज्रधृक् for वज्रभृत् । N भद्र for तत्र । Edn[1] DHKMN विमानस्थः M सह for वृतः । line omitted in AL.

---

See note on this Adh, p. 387.

## ॥ द्विपञ्चाशोऽध्यायः ॥

वैशंपायन उवाच ।

दृष्ट्वा व्यूढान्यनीकानि कुरूणां कुरुनन्दनः ।
तत्र वैराटिमाभाष्य पाण्डवोऽथाब्रवीदिदम् ॥ १ ॥
जाम्बूनदमयी वेदी ध्वजे यस्य प्रकाशते ।
तस्य दक्षिणतो याहि कृपः शारद्वतो यतः ॥ २ ॥
धनंजयवचः श्रुत्वा वैराटिस्त्वरितस्तदा ।
हयान्रजतसंकाशान्हेमभाण्डानचोदयत् ॥ ३ ॥
आनुपूर्व्या नुदञ्छूर आस्थाय जवमुत्तमम् ।
प्राहिणोच्चन्द्रसंकाशान्कुपितानिव तान्हयान् ॥ ४ ॥

LII. 1 *a* M repeats v. 3 of Adh 50 before v. 1 and reads अर्जुन उवाच instead of वैशं° ।
L व्यूह्य° for व्यूढा° । M व्यूढान्यनीकानि । Edn[1] D पांडुनन्दनः ।
*b* Edns CG आमन्त्र्य for आभाष्य । Edns CG पार्थो वचनमब्रवीत् D पाण्डवो वाक्यमब्रवीत् ।
2 *a* BEN read अर्जुन उवाच before the v. D° मया for °मयी । Edns CG प्रदृश्यते D प्रभासते K विराजते । L ध्वजाग्रे यस्य दृश्यते ।
3 *a* Edns CDGHKN read वैशंपायन उवाच before the v.
Edn[2] CGHKN ततः for तदा ।
*b* Edns BCLGH हेमभाण्डानचोदयत् D हेमदण्डेन चोदयन् K हेमभाण्डपरिच्छदान् N हेमदण्डेन चोदयत् ।
4 *a* Edns CDGN आनुपूर्व्यात्तु नत्सर्व H आनुपूर्वात्तदा शूरः KLM आनु (M अनु) पूर्व्यानुदञ्छूरः । Edn[1] DG जवमास्थाय उत्तम M आस्थाय रथमुत्तम ।
*b* BE सकाशा । A च for इव ।

---

LII. 1 *a* omitted in S cl.
*b* ST आमन्त्र्य for आभाष्य । S1 पाण्डवो वाक्यमब्रवीत् । omitted in SK, SG, SA
2 *a* omitted in S. cl.
*b* ST सारथे त्वरित याहि । First 14 verses omitted in SK, SG, SA.
3 *a* omitted in SK, SG, SA.
*b* ST हेमतुरगानचोदयत् । omitted in SK, SG, SA.
4 omitted in S. cl.

म गत्वा कुरुसेनायाः समीपं हयकोविदः ।
पुनरावर्तयामास तान्हयान्वातरंहसः ॥ ५ ॥
प्रदक्षिणमुपावृत्य मण्डलं सव्यमेव च ।
कुरून्संमोहयामास मत्स्यो यानेन तत्त्ववित् ॥ ६ ॥
कृपस्य रथमास्थाय वैराटिरकुतोभयः ।
प्रदक्षिणमुपावृत्य तस्थौ तस्याग्रतो बली ॥ ७ ॥
ततोऽर्जुनः शङ्खवरं देवदत्तं महारवम् ।
प्रदध्मौ बलमास्थाय नाम विश्राव्य चात्मनः ॥ ८ ॥
तस्य शब्दो महानासीद्धम्यमानस्य जिष्णुना ।
महावीर्यवतां संख्ये पर्वतस्येव दीर्यतः ॥ ९ ॥

5 *a* C सं for स । G यात्वा for गत्वा । AL °सेनायाम् M °सेनानीः ।
6 *a* H सव्यमंडलमेवं च । FM हि for च ।
*b* DKN मात्स्यः । v. omitted in A.
7 *a* DHMN आसाद्य for आस्थाय । line omitted in A. F omits वैराटिर- कुताभयः ।
*b* D बलं । line omitted in F.
8 *a* M शङ्खधर । Edn¹, D महाध्वनम् । C reads:- कुरून्संमोहयामास देवदत्तमहारव । । F omits this line.
*b* BE नाधमत् for प्रदध्मौ । DHKMN रथं for बलम् । F omits प्रदध्मौ बलमास्थाय ।
9 *a* Edn¹ AL ध्मायमानस्य H दास्यमानस्य ।
*b* Edns CGHKLM तथा वार्यवता BEF महावीर्यवतां D यथा वीर्यवताम् N तथा वीर्यवतः ।

---

5 *a* omitted in S. cl.
6 *a* omitted in SK, SG, SA.
*b* ST मात्स्यः । omitted in SK, SG, SA.
7 *a* ST मासाद्य for आस्थाय । omitted in SK, SG, SA.
*b* ST दक्षिणं सव्यमाश्रित्य ततस्तस्याग्रतो वशी । omitted in SK, SG, SA.
8 *a* ST महोदरम् for महारवम् । omitted in SK, SG, SA.
*b* ST रथम् for बलम् । omitted in SK, SG, SA.
9 *a* ST ध्मायमानस्य । omitted in SK, SG, SA.
*b* ST तथा वीर्यवतां संख्ये पर्वतः स्वेत दीर्यतः । omitted in SK, SG, SA.

पूजयांचक्रिरे शङ्खं कुरवस्ते च सैनिकाः ।
अर्जुनेन तथा ध्मातः शतधा यत्र दीर्यत ॥ १० ॥
दिवमावृत्य निर्वृत्तः शब्दस्तु शुश्रुवे पुनः ।
सृष्टो मघवता वज्रः प्रपतन्निव पर्वते ॥ ११ ॥
एतस्मिन्नन्तरे विप्रो बलदर्पसमन्वितः ।
अमृष्यमाणस्तं शब्दं कृपः शारद्वतस्तदा ॥ १२ ॥
अर्जुनं प्रति संरब्धो युद्धार्थी स महारथः ।
महोदधिजमादाय दध्मौ वेगेन वीर्यवान् ॥ १३ ॥
स तु शब्देन लोकांस्त्रीनावृत्य रथिनां वरः ।
धनुरादाय सुमहज्ज्याशब्दमकरोत्ततः ॥ १४ ॥

10 *a* K कौरवाः for कुरवः । Edns CDG सह H ते स° N नेन for ते च ।
*b* Edn[1] D समा F तदा for तथा । Edns BCDEFGHKLN दीर्यते M दीव्यत ।
11 *a* L आश्रित्य for आवृत्य । Edns ABCDEGHKLN शब्दस्तु M सर्वं तु for निर्वृत्तः । All MSS. except F निवृत्तः for शब्दस्तु ।
*b* M मुक्तः F धृष्टः for सृष्टः । D पर्वतैः ।
12 *a* Edns BCDEGN वीरः AF राजन् L दर्पः for विप्रः । Edn[2] CG बलवीर्य° ।
*b* Edn[1] M तथा ABEGHKL ततः for तदा ।
13 *a* HL संयोद्धुम् K संरोद्धुम् for संरब्धः । K युद्धाय but K[2] युद्धार्थी । BE महाबलः ।
*b* C आसाद्य for आदाय । K शङ्खं दध्मौ स वीर्यवान् ।
14 *a* K मावृत्य M निवृत्य ।
*b* L शब्दाय N ◦रुष्य for आदाय । Edns ABCDEFGLMN तदा for ततः ।

---

10 omitted in S. cl.
11 omitted in S. cl.
12 *a* omitted in S. cl.
*b* ST शंखम् for शब्दम् । नदन् for तदा । omitted in SK, SG, SA.
13 *a* ST योद्धुं सः for संरब्धः । च for स । omitted in SK, SG, SA.
*b* ST दध्मौ युधि स वीर्यवान् । omitted in SK, SG, SA.
14 *a* ST शङ्खेन for शब्देन । omitted in SK, SG, SA.
*b* ST च सः for ततः । omitted in SK, SG, SA.

तौ रथौ सूर्यसंकाशौ योत्स्यमानौ महाबलौ ।
शारदाविव जीमूतौ व्यरोचेतां व्यवस्थितौ ॥ १५ ॥

ततः शारद्वतस्तूर्णं पार्थं दशभिराशुगैः ।
विव्याध परवीरघ्नं निशितैर्मर्मभेदिभिः ॥ १६ ॥

पार्थोऽपि विश्रुतं लोके गाण्डीवं परमायुधम् ।
विकृष्य चिक्षेप बहून्नाराचान्मर्मभेदिनः ॥ १७ ॥

तानप्राप्ताञ्छितैर्बाणैर्नाराचान्रक्तभोजनान् ।
कृपश्चिच्छेद पार्थस्य शतशोऽथ सहस्रशः ॥ १८ ॥

15 *a* DN तौ वीरौ । M बलौजसा K महारथौ for महाबलौ ।
*b* D व्यराजेताम् ।

16 *b* BEM ⁰वीरघ्नः ।

17 *a* L विश्रुषं for विश्रुतम् ।
*b* C वरान् for बहून् । LM ⁰भेदिभिः ।

18 *a* KL तान्प्राप्तान् निशितैः । C स्थितैः N निशितैः for शितैः । K[1] बाणान् for बाणैः । M नक⁰ for रक्त⁰ ।

---

15 *a* SK, SG, SA वीरौ for रथौ । SG omits सूर्य⁰ । SK, SG, SA महारथौ for महाबलौ । ST तयोर्युद्धे महात्मनोः for योत्स्य⁰ &c.
*b* SK, SG, SA वार्षिकौ for शारदौ । ST व्यराजेतां महाजवौ ।

16 omitted in SK, SG, SA.

17 *a* ST धनुरुत्तमम् for परमायुधम् । SK, SG, SA प्रगृह्य गाण्डिवं लोके विश्रुतं पुनरर्जुनः ।
*b* omitted in S. cl. ( ST reads:- विकृष्यत महाचापं नाराचाग्रकभोजनान् चिक्षेप युधि पार्थोपि रूपं प्रति महारथः ॥ )

18 *a* SK, SG, SA प्रगृह्य बलवच्चापम् ।
*b* SK पार्थाय SA, SG चिक्षेप ST पार्थस्य for चिच्छेद । SK चिक्षेप SG, SA पार्थाय ST चिच्छेद for पार्थस्य ।

ततः पार्थः सुसंक्रुद्धः शीघ्रास्त्रत्वं प्रदर्शयन् ।
दिशः संच्छादयन्बाणैः प्रदिशश्च महारथः ॥ १९ ॥
एकच्छायमिवाकाशं कुर्वन्नग्रगतः प्रभुः ।
प्रच्छादयदमेयात्मा पार्थः शरशतैः कृपम् ॥ २० ॥
स शरैरार्चितः क्रुद्धः शितैरग्निशिखोपमैः ।
तूर्णं शतसहस्रेण पार्थमप्रतिमौजसम् ॥ २१ ॥
अर्दयित्वा महात्मानं ननाद समरे कृपः ।
ततः कनकपुङ्खाग्रैर्वीरः सन्नतपर्वभिः ॥ २२ ॥

19 *a* Edn[1] D पार्थश्च संक्रुद्धः Edn[2] BCEGHKLN पार्थस्तु संक्रुद्धः A पार्थ सुसक्रुद्धः FM पार्थः ससंक्रुद्धः । Edns CGK चित्रान्मार्गान् N चित्रान्बाणान् for शीघ्रास्त्रत्वम् । AL वि BEHM च्य N श्र for प्र ।
*b* M महारथैः । Edn[1] D read :–दिशः प्रच्छाद (D श्चाद)यामास बाणौघैः प्रदिशस्तथा ।
20 *a* D °छायाम् । Edns CGH अकरोत्सर्वतः प्रभुः D कुर्वन् व्यपतस्त्वरन् K प्रकुर्वन् सर्वतःप्रभुः ।
*b* Edns CGKLMN प्राच्छादयत् । D ततः प्राच्छादयामास for प्रच्छादयदमेयात्मा । K शतशरैः । BE omit this line.
21 *a* Edns CDGKN अर्दितः H अर्पितः for आचितः । Edns CGHKLMN शितैरग्नि° BE चिच्छेदाग्नि° । C शितोपमैः L विपोपमैः ।
*b* Edns CGH दश for शत ।
22 *a* F दर्शयित्वा । Edn[2] CG ननर्द for ननाद ।
*b* Edns CG °पर्वभिः । N शरैः for वीरः । This verse is omitted in F.

---

19 *a* S. cl. चचार समरे पार्थः for ततः पार्थः सुसक्रुद्धः । SK, ST, SG चित्रमार्गान् SA चित्रान्मार्गान् for शीघ्रास्त्रत्वम् । SK, SA विदर्शयन् ।
*b* SK, SG, ST, SA[2] सर्वाश्चैव दिशो बाणैः SA[1] स सर्वा विदिशो बाणैः । SK, ST महाबलः for महारथः ।
20 *a* SK, SG, SA सर्वतः कृतवान् for कुर्वन्नग्रगत. । SA विभुः for प्रभुः । ST आकाशमावृणोत्पार्थः सर्वं च निशितैः शरैः ।
*b* SK, SA प्राच्छादयत् । ST जिष्णुः for पार्थः ।
21 *a* S. cl. अर्पितः for आचितः । ST शूरः for क्रुद्ध. । S. cl. शितैः for शतैः ।
*b* S. cl. ततःशर° for तूर्णशत° ।
22 *a* SG, SA अर्पयित्वा । SK महाबाहुः SG, ST, SA महानादम् । SG अकरोत् for ननाद ।
*b* S. cl. ततः कनकपुङ्खेन शरेण नतपर्वणा ।

त्वरन्गाण्डीवनिर्मुक्तैरर्जुनस्तस्य वाजिनः ।
चतुर्भिश्चतुरस्तीक्ष्णैरविध्यत्परमेषुभिः ॥ २३ ॥
ते हया निशितैर्बाणैर्ज्वलद्भिरिव पन्नगैः ।
उत्पेतुः सहसा सर्वे कृपः स्थानादवाच्यवत् ॥ २४ ॥
च्युतं तु गौतमं स्थानात्समीक्ष्य कुरुनन्दनः ।
नाविध्यत्परसंविघ्नो रक्षमाणोऽस्य गौरवम् ॥ २५ ॥
स तु लब्ध्वा पुनः स्थानं गौतमः सव्यसाचिनम् ।
विव्याध दशभिर्बाणैस्त्वरितः कङ्कपत्रिभिः ॥ २६ ॥
ततः पार्थो धनुस्तस्य भल्लेन निशितेन च ।
चिच्छेदैकेन भूयश्च हस्ताच्चापमपाहरत् ॥ २७ ॥
ततोऽस्य कवचं बाणैर्निशितैर्मर्मभेदिभिः ।
व्यधमन्न च पार्थोऽस्य शरीरमवपीडयत् ॥ २८ ॥

23 *a* M सत्वान् गाण्डीवनिर्मुक्तो ।
24 *a* D ते हेमविशिखैः स्पृष्ट्वा । Edn[1] ABEFHLM विद्धाः K भिन्नाः N स्पृष्टाः for बाणैः । DN पावकोपमैः Edn[1] इव पावकैः for इव पन्नगैः ।
*b* Edns ABCDEGHKLMN अथ for अव ।
25 *a* L च्यवंतम् for च्युतं तु । Edn[1] D गौतममालोक्य for तु गौतम स्थानात् । Edn[1] D स्थानात्कुंतीसुतस्तदा for समीक्ष्य कुरुनंदनः ।
*b* D न विध्यत् । All except M परवीरघ्नः । N रक्षमाणस्य ।
26 *a* C सव्यसाचिनाम् ।
*b* H त्वरितम् ।
27 *a* Edn[2] CG ह for च ।
*b* Edn[1] D भूयस्तु । Edns GHL हस्ताचापं । Edns ABCDEGHLN अथ for अप० । BEH अच्छिनत् for अपाहरत् ।
28 *a* Edns BCDEGHKLMN अथास्य for ततोऽस्य ।
*b* A विधमत् L अधमत for व्यधमत् । CD तच्च K न तु for न च । L नावपीडयत् ।

23 v.omitted in S. cl.
24–25 vv. omitted in S. cl.
26–27 omitted in S. cl.
28–29 omitted in SK, SG, SA. 28 *a* ST:– अथास्य निशितैर्बाणैः सतीक्ष्णं मर्मभेदिभिः । 28 *b* व्यधमत् कवच पार्थः for व्यधमन्न च पार्थोऽस्य ।

तस्य निर्मुच्यमानस्य कवचात्काय आबभौ ।
समये मुच्यमानस्य सर्पस्येव तनुर्यथा ॥ २९ ॥
च्छिन्ने धनुषि पार्थेन सोऽन्यदादाय कार्मुकम् ।
चकार गौतमः सज्यं तदद्भुतमिवाभवत् ॥ ३० ॥
एवमन्यानि चापानि बहूनि कृतहस्तवत् ।
शारद्वतस्य चिच्छेद पाण्डवः परवीरहा ॥ ३१ ॥
स च्छिन्नधनुरादाय रथाच्छक्तिं प्रतापवान् ।
प्राहिणोत्पाण्डुपुत्राय प्रदीप्तामशनीमिव ॥ ३२ ॥
तामर्जुनः समायान्तीं शक्तिं हेमविभूषिताम् ।
वियद्गतां महोल्काभां चिच्छेद दशभिः शरैः ॥ ३३ ॥

29 *a* D कायमाबभौ । H omits कवचात्काय आबभौ ।
*b* C समय D यथा सर्पस्य वै तनुः । H omits समये मुच्यमानस्य ।

31 *a* K कृतहस्तवान् N दृढहस्तवत् ।

32 *a* H स च्छन्न° । Edn² ABEKL रथशक्तिम् H रथेशक्तिम् ।

33 *a* Edns CDGHN तदायान्तीम् K तथायान्तीम् M विभूषणाम् ।

---

29 *a* ST निर्मथ्यमानस्य ।
*b* ST त्वचा विमुच्यमानस्य सर्पस्येव तनुस्तदा । v. 28-29 come in ST, after v. 38.

30 *a* ST नान्यदादत्त कार्मुकम् । omitted in SK, SG, SA.
*b* omitted in S. cl.

31 *a* ST यानि चान्यानि चापानि । omitted in SK, SG, SA.
*b* omitted in SK, SG, SA.

32 S. cl. reads:- अथ शक्तिं परामृश्य सूर्यवैश्वानरप्रभाम् । चिक्षेप सहसा क्रुद्धः पार्थायाद्भुत कर्मणे । [ SG रथशक्ति for अथ शक्तिम् । ]

33 S. cl. reads:- तामर्जुनस्तथारूपां शक्तिं हेमपरिष्कृताम् । आपतन्तीम् महोल्काभां चिच्छेद दशभिः शरैः ॥ These v. (32-33) come after 39 *a* in S. cl. [SA तथाभूतान् ST निशितैः for दशभिः । ]

युगमध्येन भल्लैस्तु ततः स सधनुः रूपः ।
तमाशु निशितैः पार्थं विभेद दशभिः शरैः ॥ ३४ ॥
ततः पार्थो महातेजा विशिखानग्नितेजसः ।
चिक्षेप समरे क्रुद्धस्त्रयोदश शिलाशितान् ॥ ३५ ॥
अथास्य युगमेकेन चतुर्भिश्चतुरो हयान् ।
षष्ठेन च शिरः कायाच्छरेण रथसारथेः ॥ ३६ ॥
त्रिभिस्त्रिवेणुं समरे द्वाभ्यामक्षं महारथः ।
द्वादशेनाथ भल्लेन चकर्तास्य ध्वजं तथा ॥ ३७ ॥
ततो वज्रनिकायेन फाल्गुनः प्रहसन्निव ।
त्रयोदशेनेन्द्रसमः रूपं वक्षस्यताडयत् ॥ ३८ ॥

31 *a* Edns G युगपच्चैव BDK युगमध्ये तु L कायमध्ये तु N युगमस्य तु । D भल्लेन । K आदाय for ततः सः । K सशरं धनुः । D ततः स धनुः रुतः L ततः समधमल्रूपः N समरुंतत् ततः रूपः ।
*b* K तमेव for तमाशु । D विव्याध for विभेद । omitted in ACEF.
35 *a* C विशिखाग्निसुतेजसः ।
*b* K समये for समरे । FL शला° for शिला° । LM °सितान् ।.
36 *b* N एकेन for षष्ठेन । A तु for च । D सारथेः पत्रिणा तथा ।
37 *a* BE आच्छेत् K अक्षः L अक्षौ for अक्षम् । M महारथाः ।
*b* Edns CGH तु ABDEKLN च for अथ । Edn[2] CN तदा for तथा । Edn[1] D ध्वजोत्तमम् ।
38 *a* Edns ABCDEGHKMN निकाशेन for निकायेन ।
*b* AL सम for समः । F इद्रदमः । Edns CDN अविध्यत for अताडयत् ।

---

34 v. 34 omitted in S. cl.
35 S. cl. reads:– तान्निहत्य ततः पार्थो निमेषादिव भारत ।
पुनरन्यान्समाधत्त त्रयोदश शिलीमुखान् ॥
[ *a* SG महापर्थः *b* SG समादाय SA समादत्त ]
36 *a* SA[1] पुनरेकेन for युगमेकेन ।
*b* SK, SG, SA षष्ठेन तु शिरः संख्ये ST एकादशेन शिरः संख्ये । SG न्यरुंतन SK, SA रुपस्य for शरेण । SG, ST रुपसारथेः ।
37 *a* S. cl. बलवान् for समरे । S. cl. महाबलः for महारथः ।
*b* S. cl. तु for अथ । S. cl. रुपस्य सशरं धनुः ।
38 *a* S. cl. reads:– छित्वा वज्रनिकाशेन फल्गुनः प्रहसन्निव । [ ST शक्र° for छित्वा । ]
*b* SG सामर्षः for इंद्रसमः । SK, SG, SA प्रत्यविध्यत्स्तनांतरे ST रुपं विव्याध दक्षं ।

स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
गदापाणिरवप्लुत्य तूर्णं चिक्षेप तां गदाम् ॥ ३९ ॥
सा तु मुक्ता गदा गुर्वी कृपेण सुपरिष्कृता ।
अर्जुनेन शरैर्नुन्ना प्रतिमार्गमथागमत् ॥ ४० ॥
ततो योधाः परीप्सन्तः शारद्वतममर्षणम् ।
सर्वतः समरे पार्थं शरवर्षैरवाकिरन् ॥ ४१ ॥
ततो विराटस्य सुतः सव्यमावृत्य वाजिनः ।
यमकं मण्डलं कृत्वा तान्योधान्प्रत्यवारयत् ॥ ४२ ॥
ततः कृपमुपादाय रथं तेन नरर्षभाः ।
अपाजग्मुर्महावेगात्कुन्तीपुत्राद्धनंजयात् ॥ ४३ ॥

इति विराटपर्वणि गोहरणे कृपभङ्गोनाम
द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

39 *b* C विक्षेप for चिक्षेप ।
40 *a* Edns CGHK सा च । K तेन । N सुपरिष्कृतां ।
*b* CD अथागता ।
41 *a* Edns CGHKLM तन्तु N तत्र for ततः ।
*b* D शरमातैः । G इव L अथ for अव ।
42 *b* K दक्षिणं for यमकम् । G कुण्डलं for मण्डलम् । H समुपाद्रवत् L प्रत्यषेधयत् ।
43 *a* Edns ABCDEGHKLN विरथं ते for रथं तेन । CL नरर्षभः ।
*b* Edns ABCEGHK अपजग्मुः DLM अपाजग्मुः । Edns BCDEGLN महावेगाः K महाभाग । M कुन्तीपुत्रः ।

---

39 *a* SA[1] सच्छिन्नधन्वा ।
*b* S. cl. reads:— गदापाणिरवप्लुत्य रथात्तूर्णमरिन्दमः ।
गदां चिक्षेप सहसा पार्थायामिततेजसे ॥ १ ॥
[ 1 *a* ST अथाप्लुत्य for अवप्लुत्य । ST तथा for रथात् । 1 *b* ST तरसा for सहसा । SA[2], SG, ST पाण्डवायामितौजसे । ]
40 *a* SK, SG, ST च for तु । SK कृपेणास्य परिष्कृता ।
*b* S. cl. अर्जुनस्य । SK, SG, SA प्रतिमार्गं जगाम सा ।
vv. 41, 42, 43 omitted in S. cl.

## ॥ त्रिपञ्चाशोऽध्यायः ॥

वैशंपायन उवाच।

कृपेऽपनीते द्रोणोऽथ प्रगृह्य सुमहद्धनुः।
अभिद्रवदनाधृष्यः शोणाश्वः श्वेतवाहनम् ॥ १ ॥
स तु रुक्मरथं दृष्ट्वा गुरुमायान्तमन्तिकात्।
अर्जुनो रथिनां श्रेष्ठ उत्तरं वाक्यमब्रवीत् ॥ २ ॥
यत्रैषा काञ्चनी वेदी प्रदीप्ताग्निशिखोपमा।
उच्छ्रिता प्रवरे दण्डे पताकाभिरलंकृता ॥ ३ ॥
तत्र मां वह भद्रं ते द्रोणानीकाय मारिष।
अश्वाः शोणाः प्रकाशन्ते बृहन्तश्चारुवाहिनः ॥ ४ ॥

LIII. 1 *a* All except D तु for अथ। AL विगृह्य। Edns CGK सशरम् DN विपुलम् for सुमहत्।
*b* All except A&N अभ्य॰ N अभ्या॰। D ॰धृष्यं। K दुराधर्षः for अनाधृष्यः।
2 *a* K अतिक्रम्।
*b* Edns CG जयताम् for रथिनाम्। L वैराटि for उत्तरम्। v. omitted in M.
3 *a* Edns BCDEFGMN add अर्जुन उवाच before this l. Edns C ध्वजे यस्य प्रकाशते for प्रदीप्ता &c.
*b* FM प्रवरा येन for प्रवरे दण्डे।
4 *a* Edn² G अत्र for तत्र। Edns C सारथे K मानद for मारिष।
*b* A वहन्तः BE वहतः for बृहन्तः। BE साधु॰ for चारु॰। H हासिनः for वाहिनः।

---

LIII. 1 *a* v. omitted in S. cl.
2 *a* SK, SG, ST, SA² कौंतेयः समभिद्रुतम् SA¹ कौंतेयः समभिद्रवत् for गुरुमायान्त &c.
*b* S. cl. आचार्यं त महाबाहुः प्रांजलिः for अर्जुनो रथिनांश्रेष्ठः उत्तरम्। S. cl. reads this v. after v. 10.
3 *a* S. cl. वेदिर्दृश्यतेमि॰ for वेदी प्रदीप्ताग्नि॰।
*b* S. cl. कांचने for प्रवरे।
4 *a* SK, SG, ST द्रोणं योत्स्यामि सत्तमम् SA द्रोण यास्यामि सत्तमम् for द्रोणानीकाय मारिष।
*b* S. cl अमी for अश्वाः। S. cl. तुरगाः साधुवाहिनः for बृहन्त &c.

स्निग्धविद्रुमसंकाशास्ताम्रास्याः प्रियदर्शनाः ।
युक्ता रथवरे यस्य सर्वशिक्षाविशारदाः ॥ ५ ॥
दीर्घबाहुर्महातेजा बलरूपसमन्वितः ।
सर्वलोकेषु विख्यातो भारद्वाजः प्रतापवान् ॥ ६ ॥
बुद्ध्या तुल्यो ह्युशनसा बृहस्पतिसमो नये ।
वेदास्तथैव चत्वारो ब्रह्मचर्यं तथोत्तमम् ॥ ७ ॥
संतिष्ठन्ति हि दिव्यानि सर्वाण्यस्त्राणि मारिष ।
धनुर्वेदश्च कार्त्स्न्येन यस्मिन्नित्यं प्रतिष्ठितः ॥ ८ ॥
क्षमा दमश्च सत्यं च आनृशंस्यमथार्जवम् ।
एते चान्ये च बहवो नित्यं यस्मिन्द्विजे गुणाः ॥ ९ ॥

5 *a* N स्निग्धा । BE ताम्राक्षाः । N चारु° for प्रिय° ।
6 *b* Edns CG विक्रान्ता L विज्ञातः for विख्यातः । L भाद्वाजः ।
7 *b* Edns BCDEGHKLN तथैव च for तथोत्तमम् ।
8 *a* Edns ABCDEGHKLN ससंहाराणि for संतिष्ठंति हि । Edns CGK सर्वाणि for दिव्यानि Edns CGK दिव्यानि for सर्वाणि । K प्राति च for मारिष ।
9 *a* K दया शमः for क्षमा दमः । BE सत्वम् for सत्यम् । K[2] reads धर्मार्जवश्च सत्यं च दमानृशंस्यमेव च । (Cancelled by the writer & '*a*' written on the margin.)
*b* Edns BCDEGKL यस्मिन्नित्यम् ।

---

5 *a* S. cl. °वैदूर्यसंकाशाः ताम्रास्याः प्रियदर्शनाः ।
*b* SK तस्य for यस्य । SA[2] °विशारदैः । S. cl. reads *b* before *a*.
6 *a* SK आदित्य इव तेजस्वी SG, ST, SA पीनदीर्घभुजः श्रीमान् for दीर्घबाहुर्म° &c.
S. cl. बलवीर्य° for बलरूप° ।
*b* S. cl. सर्वलोकधनुर्धेष्ठः सर्वलोकेषु पूजितः । SA °लोके धनुः° । SG विश्रुतः for पूजितः ।
7 *a* S. cl. अंगिरोगनसोस्तुल्यो नये बुद्धिमतां वरः for बुद्ध्या तुल्यो &c.
*b* S. cl. चत्वारो निखिला वेदाः सांगोपांगाः सलक्षणाः for वेदास्तथैव &c.
8 *a* SK, ST, SA, SG भारद्वाजे समस्तानि सर्वण्येतानि सांप्रतम् (SG समस्तानि) for संतिष्ठंति हि &c.
*b* SK, ST म हं चार्त्स्न्यं प्रतिष्ठितम् SG, SA[1] साङ्गमस्त्रं प्रतिष्ठितम् for यस्मिन्नित्यं प्रतिष्ठितः । S. cl. reads *b*. before *a*.
9 *a* SK, SG, ST मैत्री मार्दवमार्जवम् SA मार्दवं शौचमार्जवम् for आनृशंस्य &c
*b* S. cl. प्रतिष्ठिता गुणा यस्मिन् बहवो द्विजसत्तमे ।

तेनाहं योद्धुमिच्छामि महाभागेन संयुगे ।
तस्मात्त्वं प्रापयाचार्यं क्षिप्रमुत्तर वाहनम् ॥ १० ॥
वैशंपायन उवाच ।
अर्जुनेनैवमुक्तस्तु वैराटिर्हेमभूषणान् ।
नोदयामास तानश्वान्भारद्वाजरथं प्रति ॥ ११ ॥
तमापतन्तं वेगेन पाण्डवं रथिनां वरम् ।
द्रोणः प्रत्युद्ययौ पार्थं मत्तो मत्तमिव द्विपम् ॥ १२ ॥
ततः प्रध्मापयच्छङ्खं भेरीशतनिनादितम् ।
प्रचुक्षुभे बलं सर्वमुद्धूत इव सागरः ॥ १३ ॥
अथ शोणान्सदश्वांस्तान्हंसवर्णैर्मनोजवैः ।
मिश्रितान्समरे दृष्ट्वा विस्मयन्त रणे नराः ॥ १४ ॥

10 *b* Edns तस्मात्तम् H इमं त्वम् for तस्मात्त्वम् । Edns ADFGHKLMN वाहय for वाहनम् ।
11 *a* A उक्तश्च । D ⁰भूषितान् ।
*b* Edns BCDEGN चोदयामास L प्रेरयामास ।
12 *b* D मत्तः for पार्थम् ।
13 *a* Edns BCGKN प्राध्मापयत् । Edns BCEFHKM निनादितम् ।
*b* A उद्धूतः F उद्धूतम् M मुहूर्तम् for उद्धूतः । FM सागरम् ।
14 *a* H हयैः for अथ । BE हयोत्तमैः K महाजवैः ।
*b* F मिश्रितान् for विस्मि⁰ । BE सगरे for समरे । Edns ABCDEGHKN व्यस्मयंत । K जनाः for नराः ।

---

10 *a* S. cl. क्षत्रधर्मं पुरस्कृत्य तेन योत्स्ये हि सांप्रतम् (SG, ST, SA ⁰योत्स्यामिसंयुगे ।)
*b* S. cl. आचार्यं प्रापयेदानीं ममोत्तर महारथम् ।
11 *a*&*b* S. cl. उत्तरस्त्वेवमुक्तोश्वांश्चोदयामास तं प्रति । आजगामार्जुनरथो भारद्वाजरथं प्रति । SK, SG, SA omit वैशंपायन उवाच ।
12 *a* SG, SA² संप्रेक्ष्य for वेगेन । S. cl. सरथं रणे for रथिनां वरम् ।
*b* S. cl. अभ्यभ्यद्रवत् for प्रत्युद्ययौ ।
13 *a* S. cl. प्राध्मापयत् । SK पटहवादितम् SA, SG पणवनादितम् for ⁰शत &c.
*b* SK, ST व्यक्षोभत SA व्यक्षोभयत् SG व्यक्षोभ्यत for प्रचुक्षुभे । SK, SA सागरम् । SK, SA, ST उद्धूतम् ।
S. cl. reads v. 13 after v. 20.
14 *a* S. cl. अश्वान्शोणान्महावेगान्हंसवर्णांस्तु वाजिभिः ।
*b* S. cl. व्यस्मयन्त । S. cl. पृथग्जनाः for रणे नराः । S. cl. reads v. 14 after v. 21 *a*.

तौ रथौ वीर्यसंपन्नौ दृष्ट्वा संग्राममूर्धनि ।
आचार्यशिष्यावजितौ कृतविद्यौ मनस्विनौ ॥ १५ ॥
समाश्लिष्टौ तदान्योन्यं द्रोणपार्थौ महाबलौ ।
दृष्ट्वा प्राकम्पत मुहुर्भरतानां महद्बलम् ॥ १६ ॥
हर्षयुक्तस्तदा पार्थः प्रहसन्निव वीर्यवान् ।
रथं रथेन द्रोणस्य समासाद्य महारथः ॥ १७ ॥
अभिवाद्य महाबाहुः सान्त्वपूर्वमिदं वचः ।
उवाच श्लक्ष्णया वाचा कौन्तेयः परवीरहा ॥ १८ ॥
उषिताः स्म वने वासं प्रतिकर्म चिकीर्षवः ।
कोपं नार्हसि नः कर्तुं सदा समरदुर्जय ॥ १९ ॥

15 *a* Edn[2] वीरसंपन्नौ M वीरसापन्नौ ।
*b* L शिष्यौ विजितौ । C °वीर्य° for °विद्यौ ।
16 *a* HK तथा for तदा । DN महारथौ for महाबलौ ।
*b* E प्रकम्पत । BEFHKL भारतानाम् । N महाबलम् ।
17 *a* Edns CDGHKN ततः for तदा ।
18 *a* H महात्मानम् for महाबाहु । Edns GK सामपूर्वम् for सान्त्वपूर्वम् ।
19 *a* Edns BCDEFGLMN स्मः । H त्वत्प्रसादाद्दिदृक्षम for प्रतिकर्म &c.
*b* D कर्तुम् for कोपम् । A नम् H तव् for नः । D कोपं नः K कर्तुं नः for नः कर्तुम् । AFHM दुर्जयः BCE दुर्जयम् ।

---

15 *a* S. cl. वीरौ for रथौ । SK समरमूर्धनि ।
*b* S. cl. रथिनौ for अजितौ । SK, SA, ST कृतवीर्यौ तरस्विनौ । SG तरस्विना for मनस्विनौ । S. cl. reads this v. after 24 *b*.
16 *a* S. cl. इव तदा for तदान्योन्यम् । S. cl. द्रोणपाण्डवयोर्भ्रंजो ।
*b* SK, SA भारतानाम् । S. cl. महाचमूः for महद्बलम् । S. cl. reads v. 16 after v. 17.
17 *a* S. cl. आचार्यः for पार्थः । SA SG ST प्रत्यगृह्णन पाण्डवम् SK, प्रत्यगृह्णात्म-पाण्डवम् for प्रहसन्निव वीर्यवान् । S. cl. interch. *a*, *b* and reads this v. after v. 14.
*b* S. cl. पार्थस्य for द्रोणस्य । SA, SG, ST समागम्य परंतपः SK समागम्य परंतपः for समासाद्य महारथः ।
18 v. omitted in S. cl.
19 *a* SK स्मः ।
*b* SA[1] नार्हति । SG ST दुर्मद for दुर्जय ।

अहं तु प्रहृते पूर्वं प्रहरिष्यामि तेऽनघ ।
इति मे वर्तते बुद्धिस्तद्भवान्कर्तुमर्हति ॥ २० ॥
ततोऽस्मै प्राहिणोद्द्रोणः शरानधिकविंशतिम् ।
अप्राप्तांश्चैव तान्पार्थश्चिच्छेद कृतहस्तवत् ॥ २१ ॥
ततः शरसहस्रेण रथं पार्थस्य वीर्यवान् ।
अवाकिरत्ततो द्रोणः शीघ्रमस्त्रं प्रदर्शयन् ॥ २२ ॥
हयांश्च रजतप्रख्यान्कङ्कपत्रैः शिलाशितैः ।
अवाकिरदमेयात्मा पार्थं संकोपयन्निव ॥ २३ ॥
एवं प्रवर्तते युद्धं भारद्वाजकिरीटिनोः ।
समं विमुञ्चतोः संख्ये विशिखान्दीप्ततेजसः ॥ २४ ॥

20 *a* D त्वया for अहम् । BE प्रहृते GH प्रहते । C पूर्वे । D अहं तव for तेऽनघ ।
*b* K प्र° for मे DKL अर्हसि ।

21 *a* D असौ N अस्मिन् for अस्मै । D °विंशतीन् FM °विंशतिः K °विंशतिं ।
*b* N अपास्तान् for अप्राप्तान् । BE omit portion from द्रोणः in 21 *a* to द्रोणः in 22 *b* and read शीघ्रमस्त्रं &c. after द्रोणः here (*a.*)

22 *a* G शत° for शर° ।
*b* AFM अवाकिरन् । D रणे for ततः । BE तीव्रास्त्रत्वम् D शीघ्रहस्त K शीघ्रं शस्त्रं । Edns GLN विदर्श° BCE व्यदर्श° D निदर्श° K उदीर° ।

23 *a* A शिलाशतैः F शलासितैः ।

24 *a* Edns BCDEFGKN प्रवृत्ते H सप्रवृत्ते । M प्रवृत्ते & तु after युद्धम् ।
*b* D अग्नि F दीप्ति° for दीप्त° । N °चेतसः for तेजसः ।

---

20 *a* S. cl. ताडितः पूर्वम् । SK, SA प्रहरेयं तवानघ SG, ST प्रहरेयं त्वयानघ ।
*b* SK, SA[2], ST क्षन्तुम् for कर्तुम् । SA[1] अनुमन्यताम् SG कर्तुमर्हसि । S. cl. reads vv. 19, 20 after v. 2.

21 *a* S. cl. reads पेशं॰ before this v. SK, SG, ST ततस्तु for ततोऽस्मै । SK अथ स for अधिक ।
*b* SK, अप्राप्तानेव for अप्राप्तांश्चैव । SK °हस्तवान् । this v. is omitted in SA.

22 *b* SK, SG, ST शीघ्रहस्तम् for शीघ्रमस्त्रम् । v. is omitted in SA.

23 *b* ST संकोपयन् for संकोपयन् । this verse is omitted in SK, SA, SG.

24 *a* SK, SG प्रवृत्ते । line omitted in SA.
*b* S. cl. विमुञ्चतोः शरानुग्रान् for समं विमुञ्चतोः संख्ये । SA विशिखान् for विशिखान् । S. cl. reads v. 14, 17 & 16 between *a* & *b* of this v.

तावुभौ ख्यातकर्माणावुभौ वायुसमौ जवे ।
उभौ दिव्यास्त्रविदुषावुभावुत्तमतेजसौ ॥ २५ ॥
क्षिपन्तौ शरजालानि मोहयामासतुर्नरान् ।
विस्मयन्त ततो योधा ये तत्रासन्समागताः ॥ २६ ॥
शरान्विसृजतोस्तूर्णं साधुसाध्विति पूजयन् ।
द्रोणं हि समरे कोऽन्यो योद्धुमर्हति फाल्गुनात् ॥ २७ ॥
रौद्रः क्षत्रियधर्मोऽयं गुरुणा सह युध्यते ।
इत्यब्रुवञ्जनास्तत्र संग्रामशिरसि स्थिताः ॥ २८ ॥

25 *a* AFKL वात° for वायु° ।
*b* DK²N विद्वांसौ । D तुल्यपराक्रमौ for उत्तम &c
26 *a* L क्षमन्तौ for क्षिपन्तौ । All except L नृपान् ।
*b* Edns BCDEGHN व्यस्मयंत AM विस्मयंतः । BE ये च तत्र समा° DKN सर्वे तत्र समा° ।
27 *a* CH विसृजतः । D शीघ्र for तूर्णम् । All except FM अपूजयन् ।
*b* BE द्रोणेन K द्रोणं तु । C समरं । AFLM इच्छति । A पांडवात् ।
28 *a* Edns ACDGHKL यत् BEN यत्र for सह । Edns ACDKL अयुध्यत H अयोध्यत ।
*b* A मवन् G इति मु° ।

---

25 *a* SK, SG, ST, SA² उभौ विश्रुतकर्माणावुभौ श्रमगतौ जये । ( SA¹ श्रमगते रणे for श्रमगतौ जये )
*b* S. cl. उभावतिरथौ लोके शुभौ परपुरंजयौ ( हि omitted in SA and ST. )
26 *a* ST क्षिपंतौ तान् शरान् दृष्ट्वा for क्षिपन्तौ शरजालानि । SK, SG, ST क्षत्रिया-न्मोह आविशत् SA क्षत्रिया मोहमाविशन् for मोहयामासतुर्नरान् ।
*b* SK व्यस्मयन्त नराः सर्वे SA, SG, ST व्यस्मयन्त जनाः सर्वे for विस्मयन्त ततो योधाः । S. cl. द्रोणार्जुनसमागमे for ये तत्र &c.
27 *a* S. cl. reads नराणां मुचतां बाणं श्रूयते स महास्वनः । ( SA, SG, ST सृजतां for मुचतां ST, SA सुमहास्वनः SG तुमुलस्वनः । )
*b* SK, SA, ST अथार्जुनात् SG पार्जुनात् for फाल्गुनात् ।
28 *a* SA¹ कुर्वे वै यद्योधयत् SK, SA², ST गुरुं वै यद्योधयत् SG गुरु वै समयो-धयत् for गुरुणा सह युध्यते ।

वीरौ तावतिसंरब्धौ संनिकृष्टौ महारथौ ।
छादयेतां शरव्रातैरन्योन्यमपराजितौ ॥ २९ ॥
विस्फार्य सुमहच्चापं हेमपृष्ठं दुरासदम् ।
भारद्वाजोऽथ संरब्धः फाल्गुनं प्रत्यविध्यत ॥ ३० ॥
स सायकमयैर्जालैरर्जुनस्य रथं प्रति ।
भानुमद्भिः शिलाधौतैर्भानोः प्राच्छादयत्प्रभाम् ॥ ३१ ॥
पार्थं स सुमहाबाहुर्वेगेन च महारथः ।
विव्याध निशितैर्बाणैर्मेघो वृष्टेव पर्वतम् ॥ ३२ ॥
तथैव दिव्यं गाण्डीवं धनुरादाय फाल्गुनः ।
शत्रुघ्नं वेगवद्धृष्टो भारसाधनमुत्तमम् ॥ ३३ ॥

*a* D तौ वीरौ । Edns CGK अभिसं° N अविसं° । K संनिविष्टौ । Edns CG महाभुजौ ।
*b* L छादयंतौ ।
30 *a* H च for सु° ।
*b* DHKN संरब्धोऽथ भरद्वाजः । C अपि for अथ । Edn² CG संक्रुद्धः । BE LN °युध्यत D °बुध्यत ।
31 *b* BE धौतः । Edns AC आच्छाद° ।
32 *a* Edns ABCDEGHKLN च for स । DHN स for सु° । KLN °बाहुं M °बाहो । Edns ABCDEGHKLN महावेगैः for वेगेन च ।
*b* H बहुभिः for निशितैः ।
33 *a* Edns BCE पाण्डवः D चार्जुनः ।
*b* Edns CDKN वेगवान् । Edn CK हृष्टः D दृष्ट्वा BE कृत्वा GHLM धृष्ट N दृप्तः for धृष्टः ।

---

29 *a* S. cl. तौ समीक्ष्य तु संरब्धौ । SG, ST अनिकृष्टमहारथौ ।
*b* SK, SA, ST शरौघैस्तौ SG शरौघास्तौ for शरव्रातैः ।
30 *a* SK, SG विष्फार्य च महाचापं SA, ST स विस्फार्य महच्चापम् । SA दुरानमम् for दुरासदम् ।
*b* S. cl. संरब्धस्तु तदा द्रोणः प्रत्ययुध्यत फाल्गुनम् । (SA² पाण्डवम् for फाल्गुनम् ।)
31 *b* S. cl. भानोः for भानोः । SG, ST प्रच्छादयत् । SK, ST दिशः SA, SG द्विजः for प्रभाम् ।
32 *a* S. cl. reads:—अर्जुनस्तु तदा द्रोणं महावेगैर्महारथः । ( SA¹ महारथैः । )
*b* S. cl. शतशो for निशितैः । S. cl. धाराभि॰ for मेघो वृष्टवा ।
33 *a* SK आनम्यचार्जुनः SG, ST, SA¹ आयम्य चार्जुनः SA² उद्यम्य पाण्डवः for आदाय फाल्गुनः ।
*b* SK सृज्य SA¹ सृष्ट्वा SA² दृष्ट्वा SG धृष्टः ST धृष्टः for धृष्टः ।

विससर्ज शरांश्चित्रान्सुवर्णविकृतान्बहून् ।
नाशयच्छरवर्षाणि भारद्वाजस्य वीर्यवान् ॥ ३४ ॥
तूर्णं चापविनिर्मुक्तैस्तदद्भुतमिवाभवत् ।
स रथेन चरन्पार्थः प्रेक्षणीयो धनंजयः ॥ ३५ ॥
युगपद्दिक्षु सर्वासु सर्वशोऽस्त्राण्यदर्शयत् ।
एकच्छायमिवाकाशं बाणैश्चक्रे समन्ततः ॥ ३६ ॥
नादृश्यत ततो द्रोणो नीहारेणेव संवृतः ।
तस्याभवत्तदा रूपं संवृतस्य शरोत्तमैः ॥ ३७ ॥

34 *a* BE तीक्ष्ण for चित्रान् ।
*b* Edns GKM नाशयन् DM शमयन् । D सर्व° for शर° । K °जालानि for वर्षाणि । D भरद्वाज° ।
35 *a* N चापि for चाप° । CD मुक्ताः N विमुक्तानि ।
*b* H तमोभवत् for धनंजयः ।
36 *a* K बाणैश्च for सर्वासु । Edns CGH सर्वतः BDEKLN सर्वशस्त्राणि । ABELN °दर्शयन् । v. omitted in M.
*b* N एकंछाय° । D धनजय N धनंजयः K स सर्वशः for समन्ततः ।
37 *a* Edns CDGLN तदा for ततः ।
*b* A स वृत्तस्य ।

---

34 *a* SK, SA, SG शरांश्च विसृजन् ST शरांश्च विक्षिपन् for विससर्ज शरान् ।
*b* S. cl. reads आच्छादनदमेयात्मा भारद्वाजरथं प्रति ( SG, ST, SA अच्छादयत् । ST भारद्वाजम् । )
35 *a* S. cl. read: द्रोणचापविनिर्मुक्तान्बाणान्बाणैरवारयत् । ( SG, ST, SA बाणैर्बाणान् for बाणान्बाणैः । ST अपायत, SG अदारयत् for अवारयत् । )
*b* SK, ST सरथोऽप्यचरत्पार्थः SA सरथो व्यचरत्पार्थः SG सरथो विचरत्पार्थः । S. cl. महारथः for धनंजयः ।
36 *a* SK, SA सर्वतोऽस्त्राण्यवासृजन् SG सर्वतोऽस्त्रानधारयत् ST सर्वतोऽस्त्राण्यवारयत् for सर्वशोऽस्त्राण्यदर्शयत् ।
*b* SA[1] धनञ्जयः SG निरंतरम् for समन्ततः ।
37 *a* SK, SA, ST पर्वतः SG भानुमान् for संवृतः ।
*b* S. cl. रम्यं तस्य रथोत्तमे for संवृतस्य शरोत्तमैः ।

जाज्वल्यमानस्य यथा पर्वतस्येव सर्वशः ।
स दृष्ट्वा तु रणे पार्थः शरैः स्वरथमावृतम् ॥ ३८ ॥
विस्फार्य च धनुःश्रेष्ठं मेघस्तनितनिःस्वनम् ।
अग्निचक्रोपमं घोरं विकर्षत्परमायुधम् ॥ ३९ ॥
व्यशातयच्छरांस्तीक्ष्णान्द्रोणः समितिशोभनः ।
महानभूत्ततः शब्दो वंशानामिव दह्यताम् ॥ ४० ॥
जाम्बूनदमयैः पुङ्खैश्चित्रचापवरातिगैः ।
प्राच्छादयदमेयात्मा दिशः सूर्यस्य च प्रभाम् ॥ ४१ ॥

38 *a* D यथाजाज्व⁰ । Edns CGN तदा for यथा । M ⁰स्येव H ⁰स्य च । all except DN सर्वतः ।
*b* All except AFM दृष्ट्वा तु पार्थस्य रणे ( D पार्थस्य तु H शरैः for रणे । ) H रणे for शरैः ।
39 *a* Edns ABCDEFGKLN स विस्फार्य for विस्फार्य च । DKN चित्रं for श्रेष्ठम् । M ⁰जनित⁰ for ⁰स्तनित⁰ ।
*b* K चक्रमिवाविद्धं । Edns CGHK व्यकर्षत् D विकर्ष ABEFKLM विकर्षन् । N परमायुसम् ।
40 *a* Edn[1] D व्यपातय⁰ KM विशातय⁰ । Edn[2] ACFGHKLMN तांस्तु for तीक्ष्णान् । D समर⁰ for समिति ।
41 *a* Edns BEG विनिर्गतैः A ⁰मरातिगैः ।
*b* H प्रभाः ।

---

38 *a* This line is omitted in S. cl.
*b* This line is omitted in S. cl.
39 *a* SK, ST विकृष्य सुमहच्चापम् SG विस्फार्य च महच्चापम् SA विकृष्य बलवच्चापम् for विस्फार्य च धनुःश्रेष्ठम् ।
*b* SK, SG, ST, मण्डलीकृतमाहवे SA मण्डलीकृतकार्मुकम् for विकर्षत्परमायुधम् । S cl. interchanges *a* & *b*,
40 *a* SK, SG, ST तान्विधूय शरान्घोरान् SA तान् विधुन्वञ्छरान् घोरान् for व्यशातयच्छरांस्तीक्ष्णान् । S. cl. द्रोणोपि समितिंजयः ।
*b* line omitted in SK, SG, SA.
41 *a* SG, ST, SA ततय जाम्बूनदमयैः SK ततजाम्बूनदमयैः for जाम्बूनदमयैः पुङ्खैः । SK दीप्तैरग्निसमैः शरैः SA दीप्तैरग्निशिखोपमैः SG शरैरग्निशिखोपमैः ST दीप्तैरग्निमयैः शरैः for चित्रचापवरातिगैः ।
*b* SG, SA प्रच्छादयत् । SA[1] प्रभः ।

ततः कनकपुङ्खानां शराणां नतपर्वणाम् ।
वियच्चराणां वियति दृश्यन्ते बहवो व्रजाः ॥ ४२ ॥
द्रोणस्य पुङ्खसक्ताश्च प्रभवन्तः शरासनात् ।
एको दीर्घ इवादृश्यदाकाशे संहतः शरः ॥ ४३ ॥
एवं तौ स्वर्णविकृतान्विमुञ्चन्तौ महाशरान् ।
आकाशं संवृतं वीरावुल्काभिरिव चक्रतुः ॥ ४४ ॥
शरास्तयोश्च विबभुः कङ्कबर्हिणवाससः ।
पङ्क्तयः शिरसिस्थानां हंसानां चरतामिव ॥ ४५ ॥

42 *b* BE नश्यंते for दृश्यन्ते । K² सर्वतः for बहवः ।
43 *a* LM द्रोणश्च । N पुङ्खाशक्ता° BE पुङ्खशब्दा° C पुङ्खमुक्ता° HK पुङ्खसंसक्ताः । L पश्यत् for °दृश्यत् । D संवृतः H संयतः N सहरः । L शिरः । K इवाकाशे प्रभवन् दृश्यते शरः ।
44 *b* D आवृतम् H संवृतौ for भवृतम् । A उप L अभि for इव ।
45 *a* Edns EGH तु for च । Edns BCDEGHKN °बर्हिण° । M °वाससाः
*b* Edns BCEGKLMN पङ्क्तयः AD पंक्तिः । Edns ABCDEGKLN शरदि for शिरसि । H शरत्काले for शिरसिस्थानाम् । Edns ADGKLN स्वस्थानाम् BE स्वस्थानाम् । H सयोनानामिवांबरे for हंसानां &c ।

---

42 *a* SK, ST कांचन for कनक° ।
*b* S. cl. वियद्गतानां चरताम् for वियच्चराणा वियति । SG दृश्यते बहुला प्रभा ST पश्यंति बहवः प्रभाः SA दृश्यन्ते बहुशः प्रभाः for दृश्यन्ते बहवो व्रजाः ।

43 *a* S. cl. reads शरासनात्तु द्रोणस्य प्रभवन्ति स्म सायकाः ।
*b* SK, आपतः SG आपातात् ST, SA अपाङ्गात् for अदृश्यत् । SK, SG, SA प्रदृश्यन्ते महाशराः ST प्रदृश्यत महारथः for आकाशे महतः शरः ।

44 *a* S. cl. एवं सुवर्णविकृतान् । SK विमुञ्चन्तौ शरान्बहून् SA विमुञ्चन्तौ बहून्छ-रान् ST विमुञ्चन्सुबहून् शरान् ।
*b* SG संवृता मेघाः for सवृतं वीरौ । SG धाराभिः for उल्काभिः ।

45 *a* SG शराश्चापि बभुः । SK, SA, ST तयोः शराश्च । S. cl. बर्हिणवाससः ।
*b* SK, SG, SA पङ्क्तयः शरदि मत्तानां । ST शरमत्तानाम् for शिरसिस्थानाम् । S. cl. सारसानामिवाम्बरे for हंसानां चरतामिव ।

युद्धं समभवत्तत्र सुसंरब्धं महात्मनोः ।
द्रोणपाण्डवयोर्घोरं वृत्रवासवयोरिव ॥ ४६ ॥
तौ गजाविव चासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ४७ ॥
तौ व्यवाहरतां शूरौ संरब्धौ रणशोभिनौ ।
उदीरयन्तौ समरे दिव्यान्यस्त्राणि भागशः ॥ ४८ ॥
अथ आचार्यमुख्येन शरान्सृष्टाञ्छरासनात् ।
निवारयच्छितैर्बाणैरर्जुनो जयतां वरः ॥ ४९ ॥
दर्शयन्नैन्द्रिरात्मानमुग्रमुग्रपराक्रमः ।
रेणुभिस्तूर्णमाकाशं बहुभिश्च समावृणोत् ॥ ५० ॥

46 *a* N तयोः before युद्धं & omit तत्र । K तयोः संरब्धयोर्महत् for सुसंरब्धं &c.
47 *a* BEN संक्रुद्धौ D सरब्धौ for चासाद्य । *b* BE ⁰जग्मतुः ।
48 *a* DN उभौ व्यचरताम् for तौ व्यवा &c. FHM व्यव⁰ BE ⁰हारताम् । Edns युद्धे G युद्धम् for शूरौ ।
*b* A उदीरयेताम् F उदीर्यंतां हि M उदीरयंताम् । BE भागतः ।
49 *a* Edns BCDEGHN त्वाचार्य⁰ । AKL स तथाचार्यमुख्येन for अथ आचार्य &c. Edns BCDEGHL शिलाशितान् N शिलान् सितान् for शरासनात् ।
*b* Edns ABCDEFHMN न्यवारयत् । K रथिनां for जयताम् ।
50 *a* Edns DGN वीक्षमाणानाम् C वीक्ष्य⁰ AK रौद्रमात्मानम् FM इंद्रमात्मानम् । Edns DGN अस्त्रम् C शास्त्रं for उग्रम् । M समन्युश्च for उग्रमुग्रम् । CHL पराक्रमम् ।
*b* D स for च ।

---

46 *a* SK, SA तत्तु युद्ध महद्धोरम् for युद्ध समभवत्तत्र । SK, SA, ST तयोः संरब्धयोरभूत् SG तयोः संरब्धयोस्तदा for सुसरब्ध महात्मनोः ।
*b* S. cl. अत्यद्भुतमचिन्त्यं च for द्रोणपाण्डवयोर्घोरम् ।
47 *a* S. cl. महागजाविवासाद्य ।
48 *a* S. cl. व्यदारयतां for व्यवाहरताम् । S. cl. सन्नद्धौ for संरब्धौ । SA रणशोभितौ ।
*b* S. cl. दिव्यानि for समरे । SK, SG. ST माहात्म्यं SA सर्वाणि for दिव्यानि । S. cl. reads this l. after v. 46
49 *a* S. cl. त्वाचार्यमुख्येन । SK, SA, SG शिलाशितान् ST शिलीमुखान् for शरासनात् ।
*b* SK, SA², ST अवारयत् SA¹ अवाकिरत् for निवारयत् । SG अवारयन्नेने बाणैः for निवार &c.
50 *a* SK, SA, SG ऐन्द्रम् for ऐन्द्रिः । ST दर्शयन्नेव चात्मानम् ।
ST उग्रमुग्रपराक्रमः । SG उग्रपराक्रमम् ।

जिघांसन्तं नरव्याघ्रमर्जुनं तिग्मतेजसम् ।
अर्जुनेन सह क्रीडञ्शरैः सन्नतपर्वभिः ॥ ५१ ॥
दिव्यास्त्राणि विमुञ्चन्तं भारद्वाजं महारणे ।
अस्त्रैरस्त्राणि संवार्य फाल्गुनः समयोधयत् ॥ ५२ ॥
तयोरासीत्संप्रहारः क्रुद्धयोर्नरसिंहयोः ।
जयैषिणोस्तदान्योन्यं देवदानवयोरिव ॥ ५३ ॥
ऐन्द्रं वायव्यमाग्नेयमस्त्रमस्त्रेण पाण्डवः ।
द्रोणेन मुक्तं मुक्तं च ग्रसति स्म पुनः पुनः ॥ ५४ ॥
एवं शूरौ महेष्वासौ विसृजन्तौ शरांस्ततान् ।
एकच्छायं चक्रतुस्तावाकाशं शरवृष्टिभिः ॥ ५५ ॥

51 *a* K भाम° for तिग्म° ।
*b* Edns ABCEGMN आक्रीड्य । HK अवारयत्तदा वीर for अर्जुनेन &c
52 *a* Edn² CG दिव्यान्यस्त्राणि वर्षन्तम् Ldn¹ ABDLLN दिव्यान्यस्त्राणि मुञ्चन्तम् K दिव्याण्यस्त्राणि च द्रोणो । Edn² CG तस्मिन्वै तुमुले रणे । Ldn¹ BDEHN भारद्वाज K विमुञ्चन्तम् for भारद्वाजम् ।
*b* Edns BCDEGHKN फाल्गुनम् ।
53 *b* Ldns ABCDEGKLN अमर्षिणो H सामर्षिणो for जयैषिणो ।
54 *a* ACF ऐन्द्र । M repeats *a* —ऐन्द्र वायव्यमाग्नेय विसृजे स शरांस्ततान् ।
*b* Ldns CG मुक्तमात्रं तु BDE मन्त्रमुक्तं तु । HK न for च । N ग्रसते च for ग्रसति स्म ।
55 *a* D सूतौ I वीरौ for शूरौ । A विसृजन । D सृजन्तौ निशितान् शरान् । Ldns CG HN निशितान् शरान् A शरान् शतान् BLL शरान् शितान् for शरांस्ततान् । *b* omitted in M.

---

51 *a* SG, SA भास्वत्तेजसम् SK भासद्द्युतिम् ST भास्वत्तेजसा for तिग्मतेजसम् ।
SG, ST, SA समाक्रीडन् SK सम्प्रक्रीडन् for सह क्रीडन् ।
52 *a* this line is omitted in S cl.
*b* S cl. पार्थो द्रोणमवारयत् for फाल्गुनः समयोधयत् ।
53 *a* SG गुरुशिष्ययोः for नरसिंहयोः ।
*b* S cl. अन्योन्यमन्यपोः रहन्ये मन्त्रिणामथयोरिव । (ST पूर्व° for मन्त्रि° ।)
54 *a* SA वारुणम् for वायव्यम् । ST अस्त्रयोगेन for अस्त्रमस्त्रेण ।
*b* SK, SA, ST मुक्तं मुक्तं द्रोणपार्थः SG मुक्तं मुक्तं द्रोणस्य for द्रोणेन मुक्तं मुक्तं च । S cl. ग्रसते ।
55 *a* SK, SG विसृजन्तौ SA विसृजन्तौ ST विसृजन्तौ for विसृजन्तौ ।
*b* S cl. ग्रहतारौ for चक्रतुस्तौ । S cl. गगनम् for आकाशम् ।

ततोऽर्जुनेन मुक्तानां पततां वै शरीरिषु।
पर्वतेष्विव वज्राणां शराणां श्रूयते स्वनः ॥ ५६ ॥

ततो नागा रथाश्चैव वाजिनश्च विशांपते।
शोणिताक्ता व्यदृश्यन्त पुष्पिता इव किंशुकाः ॥ ५७ ॥

बाहुभिश्च सकेयूरैर्विचक्रैश्च महारथैः।
सुवर्णचित्रैः कवचैर्ध्वजैश्च विनिपातितैः ॥ ५८ ॥

योधैश्च निहतैस्तत्र पार्थबाणप्रपीडितैः।
बलमासीत्समुद्भ्रान्तं द्रोणार्जुनसमागमे ॥ ५९ ॥

56 *a* Edns BCEFGHKLM तत्र for ततः। DN पतितानां for पतता वै। AB EFHKLM च for वै।
*b* AK[1] शुश्रुवे for श्रूयते। F[2] स्वरः M पुनः for स्वनः।

57 *a* CD नागरथा.। DHKN सादिनः for वाजिनः।
*b* H दृश्यते L व्यराजन्त fo· व्यदृश्यन्त। L किंशुका इव पुष्पिताः for पुष्पिता &c.

58 *a* Edns BCEGHKLMN विचित्रैः foı विचक्रैः।
*b* C °चित्रैश्च कवचैः। N गजैश्चापि निपातितैः D ध्वजैश्चापि निपातितैः।

59 *a* BE यानैः for योधैः।
*b* H सैन्यम् for बलम्। BEHKM सुसभ्रान्तम् D सुविभ्रान्तम् for समुद्भ्रान्तम्।

---

56 *a* S. cl. च for वै।
*b* SG एव for इव। ST वर्षाणाम् for वज्राणाम्।

57 *a* SK, SG, ST रथाश्वाश्च SA रथाश्वाश्चाः for रथाश्चैव। S. cl. सादिनः for वाजिनः। SG पदातयः for विशांपते।
*b* SA[2] शोणितार्द्राः for शोणिताक्ताः। S. cl. च दृश्यन्ते for व्यदृश्यन्त।

58 *a* S. cl. निकृत्तैः for विचक्रैः।

59 *a* SA[1] चापि f. r तत्र। SG कृष्ण° for पार्थ°। S. cl. अभिपीडितैः।
*b* SK सुसभ्रान्तम् for समुद्भ्रान्तम्।

विधुन्वानौ तु तौ तत्र धनुषी भारसाधने ।
आच्छादयेतामन्योन्यमन्वेक्षन्तौ रथेषुभिः ॥ ६० ॥
तयोः समभवद्युद्धं तुमुलं भरतर्षभ ।
द्रोणकौन्तेययोस्तत्र बलिवासवयोरिव ॥ ६१ ॥
अथ पूर्णायतोत्सृष्टैः शरैः सन्नतपर्वभिः ।
व्यदारयेतामन्योन्यं प्राणद्यूते प्रवर्तिते ॥ ६२ ॥
अथान्तरिक्षे नादोऽभूद्द्रोणं तत्र प्रशंसताम् ।
दुष्करं कृतवान्द्रोणो यदर्जुनमयोधयत् ॥ ६३ ॥
प्रमाथिनं महावीर्यं दृढमुष्टिं दुरासदम् ।
जेतारं देवदैत्यानां सर्पाणां च महारथम् ॥ ६४ ॥

60 *a* N वीरौ for तत्र । D धनुषा । A omits from 'तत्र' in 60 *a to* तत्र in 61 *b*.
*b* D आच्छेदयेताम् BE आच्छादयन्ताम् C आच्छादयताम् F आच्छादयेतम् । Edns BCDEGN ततक्षतुः H मतर्जतुः K वितक्षतौ L सतक्षंतौ F मन्येक्षतौ । H रथेषुभिः ।
61 *a* D रोमहर्षणम् FMN लोमहर्षणम् for भरतर्षभ ।
*b* K वृत्र° for बलि° ।
62 *b* HL विदार° BE °व्यदारयंतौ for व्यदारयताम् । M प्राणि° । ABDEHLM प्रवर्त्तिते । N reads this l. after v. 55 also ( v. l. : -छादयेतामथान्योन्यम् । )
63 *a* H अंतरिक्षनादः ।
64 *a* L तरस्विनम् for दुरासदम् ।
*b* DN मर्त्यानाम् for दैत्यानाम् । Edns CDGK सर्वेषाम् for सर्पाणाम् । DK महात्मनाम् ।

---

60 *a* ST विधुन्वाना ततो वीरा । SK, SG तु तौ वीरौ SA एतौ वीरौ for तु तौ तत्र ।
*b* SK, SA² माच्छादयेताम् ST, SA¹ मच्छादयेताम् । SK, SA द्विषन्तौ परेषुभिः, SG द्विषन्तेताविषुभिः ST दिदृक्षन्तौ परेषुभिः for अन्वेक्षन्तौ रथेषुभिः ।
61 verse omitted in S. cl.
62 this verse is omitted in S. cl. except ST.
63 *a* SG अन्तरिक्षे तु शब्दोऽभूत् ।
64 *b* SK सर्वदैत्यानाम् SG, ST सर्वमर्त्यानाम् SA सर्वदेवानाम् । S. cl. सर्वेषां for सर्पाणाम् ।

अविभ्रमं च शिक्षां च लाघवं दूरपातितम्।
पार्थस्य समरे दृष्ट्वा द्रोणस्याभूच्च विस्मयः ॥ ६५ ॥
अथ गाण्डीवमुद्यम्य दिव्यं धनुरमर्षणः।
खे चकर्ष रणे पार्थो बाहुभ्यां भरतर्षभः ॥ ६६ ॥
तस्य बाणमयं वर्षं शलभानामिवायतम्।
न च बाणान्तरे वायुस्तस्य शक्नोति सर्पितुम् ॥ ६७ ॥
अनिशं संदधानस्य शरानुत्सृजतस्तथा।
ददृशे नान्तरं कश्चित्पार्थस्याददतोऽपि च ॥ ६८ ॥
तथा शीघ्रास्त्रयुद्धे तु वर्तमाने सुदारुणे।
शीघ्राच्छीघ्रतरः पार्थः शरानन्यानुदीरयत् ॥ ६९ ॥

65 *a* L शिष्यस्य M शिष्याणाम् for शिक्षा च।
*b* BEK आसीत् for अभूत्।
66 *a* H अमर्षगम्।
*b* Edns ACDFGHKLMN विचकर्ष। K रथे for रणे। Edns BEKN भरतर्षभ।
67 *a* L आयतिः Edns ACDFGHKMN आयतिम्।
*b* DN अप्यस्य K तस्य for वायुः। Edns CGH अस्य DKN वायुः for तस्य।
68 *a* D वै सृजतः N विसृजतः for उत्सृजतः।
*b* Edns ददर्श BE नान्तरम् for ददृशे। BE ददृशे for नान्तरम्। D किंचित्। BE वा for च।
69 *a* H अथ for तथा। N तथास्त्रयुद्धे घोरे तु। BE वर्तमानेऽतिदारुणे।
*b* Edns CG शीघ्र शीघ्रतरम्। HK शीघ्रतरम्।

---

65 *a* S. cl. दूरपातनम् for दूरपातितम्।
*b* SG पांडवस्य समम् for पार्थस्य समरे। S. cl. आसीत् for अभूत्।
66 *b* S. cl. विचकर्ष for खे चकर्ष। SG कृष्णः for पार्थः।
67 *a* SG शलभानान्तरामयत्। S. cl. अभवत् for आयतं।
*b* SG कुतः for न च। S. cl. तस्य for वायुः। S. cl वायुः for तस्य।
68 *a* S. cl. अभीक्ष्णम् for अनिशम्। S. cl. बाणान् for शरान्।
*b* SK नान्तरं SA नान्तरः। SK, SG, ST किंचिद् for कश्चित्। SK, SA[2] आपततः SA[1] ST, SG अपि ततः for आददतः। SG युधि for अपि च।
69 *a* SK, SA युद्धे तु कृतशीघ्रास्त्रे SG युद्धेषु कृतशीघ्रास्त्रे ST युद्धे तु कृतशीघ्रास्त्रे for तथा शीघ्रास्त्रयुद्धे तु।
*b* S. cl. शीघ्रतरम् for शीघ्रतरः। SG कृष्णः for पार्थः। SK, SG, SA उदैरयत् ST उदीरयन्।

ततः शतसहस्राणि शराणां नतपर्वणाम् ।
युगपत्प्रापतंस्तत्र द्रोणस्य रथमन्तिकात् ॥ ७० ॥

द्रोणेऽवकीर्यमाणे तु शरैर्गाण्डीवधन्विना ।
हाहाकारो महानासीत्सैन्यानां भरतर्षभ ॥ ७१ ॥

पाण्डवस्य च शीघ्रास्त्रं मघवान्संप्रपूजयत् ।
गन्धर्वाप्सरसश्चैव ये च तत्र समागताः ॥ ७२ ॥

ततो वृन्देन महता रथानां रथयूथपः ।
आचार्यपुत्रः सहसा पाण्डवं प्रत्यवारयत् ॥ ७३ ॥

70 *a* CH शरा⁰ for शत⁰ । M ⁰सहस्राणाम् ।
*b* D पातयत् HN प्रापयत् । H अन्तिकम् K सन्निधौ for अन्तिकात् ।

71 *a* Edn² CG कीर्यमाणे तदा द्रोणे Edn¹ D आकीर्यमाणे द्रोणे तु H अवकीर्यमाणे द्रोणे तु । BE द्रोणे विकीर्यमाणे तु K विकीर्यमाणे द्रोणे तु N कीर्यमाणे द्रोणे तु । Edns BCDEFGHLN धन्वना ।
*b* A सेनानाम् ।

72 *a* Edns ABCDFGHLN तु for च । K तत्पाण्डवस्य । Edn² BCDEGHKLN मघवा प्रत्य⁰ Edn¹ F मघवान् प्रत्य⁰ । M ते देवान् प्रत्यपूजयत् ।
*b* H सर्वे for श्चैव । DN तत्र तत्र for ये च तत्र ।

73 *a* HK अथ for ततः । L रथयूथपैः ।
*b* Edn² CG पर्यवारयत् ।

---

70 *a* SK, ST शरसहस्राणि ।

71 *a* S. cl. विकीर्यमाणे द्रोणे तु । SK, SA, ST ⁰धन्वना ।

72 *a* SK तु for च । SK मघवा SG देवाश्च for मघवान् । SG समपूजयन् SK, SA, ST समपूजयत् for सम्पूजयत् ।
*b* SG गन्धर्वाप्सरसः ।

73 *a* SK, SA¹, S *ґ*, ST रथिनाम् SA² रथेन for रथानाम् । SK रथियूथपः SA¹ रथयूथपम् SA² रथयूथपैः for रथयूथपः ।
*b* S. cl. तु शरैः for सहसा । SA¹ समवारयत् for प्रत्यवारयत् ।

अश्वत्थामा तु तत्कर्म हृदयेन महात्मनः ।
पूजयामास पार्थस्य कोपं चास्य करोद्भृशम् ॥ ७४ ॥
सोऽमर्षवशमापन्नः पार्थमभ्यद्रवद्रणे ।
किरञ्छरसहस्राणि पर्जन्य इव वृष्टिमान् ॥ ७५ ॥
आवर्त्य तु महाबाहुर्यतो द्रौणिस्ततो हयान् ।
अन्तरं प्रददौ पार्थो द्रोणस्य व्यपसर्पितुम् ॥ ७६ ॥
स तु लब्ध्वान्तरं तूर्णमपयाज्जवनैर्हयैः ।
च्छिन्नवर्मध्वजः शूरो निकृत्तः परमेषुभिः ॥ ७७ ॥

इति विराटपर्वणि गोहरणे द्रोणभङ्गो नाम
त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

74 *a* D च for तु ।
*b* All except M अकरोत् ।
75 *a* Edns CDGHKN स मन्युवशमापन्नः । M रणे ।
*b* E वृष्टिवान् ।
76 *a* All except M आवृत्य ।
*b* KL व्यवसर्पितुम् M च व्यवस्थितुम् for व्यपसर्पितुम् ।
77 *a* Edn[2] BCEFGHKLMN अपायात् Edn[1] व्यपायात् D व्यपयात् ।
*b* BH °चर्म° F °वर्त्म° LN °धर्म° for °वर्म° । C निवृत्तः EL निरुंतः ।

---

74 *a* SG महामनाः for महात्मनः ।
*b* SK, SA[2], SG, ST तदाकरोत् SA[1] सदाकरोत् for करोद्भृशम् ।
75 *a* S. cl. स मन्युवशम् ।
76 *a* SK, SG, ST आवृत्य for आवर्त्य । SK, SA[2] च SA[1], SG स ST सु for तु । SK, SG द्रोणस्ततोऽभवत् ST द्रोणस्ततो ययौ SA[2] द्रौणिस्तमभ्ययात् for द्रौणिस्ततो हयान् ।
*b* SG व्यपसर्पितुम् SA व्यवसर्पितुम् ।
77 *a* SK, SG, ST लब्धान्तरः for लब्ध्वान्तरम् । SG उपायात् ST व्यपयात् SK, SA अपायात् ।
*b* S. cl. °ध्वजधः for वर्मध्वजः ।

## ॥ चतुःपञ्चाशोऽध्यायः ॥

वैशंपायन उवाच ।

अथ द्रौणिर्महावीर्यः प्रययावर्जुनं प्रति ।
शरजालेन महता वर्षमाणमिवाम्बुदम् ॥ १ ॥
तयोर्देवासुरसमः संनिपातो महानभूत् ।
किरतोः शरजालानि वृत्रवासवयोरिव ॥ २ ॥
न स्म सूर्यस्तदा भाति न च वाति समीरणः ।
शरगाधकृते व्योम्नि छायाभूते समन्ततः ॥ ३ ॥
महांश्चटचटाशब्दो योधयोर्युध्यमानयोः ।
दह्यतामिव वेणूनामासीत्परपुरंजय ॥ ४ ॥

LIV 1 *a* Edns CDGHKLMN ततः for अथ । Edns GHL महाराज A महाभागः BEF महाभाग M महावीर्य । C प्रययौ । Edns BCDEGHKLMN रणे for प्रति ।
*b* L शरधारेण । D °माण इवाम्बुदः N वर्षमास इवाम्बुदः ।
2 *a* DK ततः for तयोः । D तयोः for महान् ।
*b* DE किरन्तः ।
3 *a* H, न सः for न स्म । N भाति for सूर्यः । D दिवा for तदा । N सूर्यः for भाति । D रात्रि° for वाति ।
*b* Edns H जालावृते BE भूते कृते CGM गाढे कृते D संवीकृते K जालाचित° N सर्वेश्रिते for गाधेकृते । D हाहाभूते ।
4 *a* BE चरचराशब्दः । H यस्तयो for योधयोः । Edns BCEG हन्यमानयोः AKH वध्यमानयोः K भिद्यमानयोः N विध्यमानयोः ।
*b* AECDEFGKMN पुरंजयः ।

---

LIV. 1 *a* omitted in S. cl.
*b* S. cl. वर्षमाण इवाम्बुदः ।
2 *a* SG महात्मनोः for महानभूत् ।
3 *b* SK, SG शरगाढे ST SA[1] शरजाले SA[2] शरजाते for शरगाध° । 'S cl. छायाभूतमिवाभवत् ।
4 *a* ST चटपटी for चटचटा । SA योधयोः
*b* S. cl. परमदारुणः for परपुरंजयः ।

हयानस्यार्जुनः सर्वान्कृतवानल्पजीवितान् ।
ते राजन्न प्रजानन्ति दिशं कांचन मोहिताः ॥ ५ ॥
ततो द्रौणिर्महावीर्यः पार्थस्य विचरिष्यतः ।
विवरं सूक्ष्ममालोक्य ज्यां चिच्छेद क्षुरेण ह ॥ ६ ॥
तदस्यापूजयन्देवा दृष्ट्वा कर्मातिमानुषम् ।
द्रोणो भीष्मश्च कर्णश्च कृपश्चैव महात्मनः ॥ ७ ॥
ततो द्रौणिर्धनूंष्यष्टावाक्रम्य तु नरर्षभात् ।
पुनरेवाहनत्पार्थं हृदये कङ्कपत्रिभिः ॥ ८ ॥

5 *a* L हयास्तस्यार्जुनः । H तूर्णं for सर्वान् । KL अल्पजीविनः ।
*b* Edns CFG प्रजानन्त D अभिजानन्ति HL प्रजानाति ।
6 *a* D तदा N तथा for ततः । BE अतिचरिष्यतः HK चरतो रणे L वितरिष्यतः ।
*b* H चिच्छेद् ज्या शरेण ह । D सः LM हि N च for ह ।
7 *a* H दूतस्य पूजयन्नेव । D कर्म for देवाः । Edns BCEHKLLN कर्म D देवाः for दृष्ट्वा । Edns BCDEGHKLN दृष्ट्वातिमानुषम् ।
*b* L द्रोणभीष्मौ च । Edn[2] GHM महारथाः Edn[1] BCDEKLN महारथः ।
8 *a* BE द्रोणिः । Edns CG धनुःश्रेष्ठम D धनुष्कृष्य FHL धनुष्यष्टौ M धनुष्यस्यौ । Edns CG अपकृष्य BEL अपक्रम्य D व्युपक्रम्य HM उपक्रम्य K व्यपक्रम्य N व्यपकृष्य । Edns CGH रथर्षभम् BE नरर्षभ D रथर्षभः K महारथः LM नरर्षभम् N च वीर्यवान् ।

---

5 *a* S cl. हयास्तस्यार्जुनः । SK, SG, ST सख्ये SA सखे for सर्वान् । S cl. अल्पतेजसः ।
*b* SA स राजन्न प्रजानाति SG राजन्न प्रतिजानाति ST राजन्नतिविजानाति । SA, SG दिशः ST दिशि for दिशम् । SA काञ्चन मोहितः ।
6 *b* S, cl. नुनोद for चिच्छेद । SK, ST, SA सः SG च for ह ।
7 *a* S. cl. कर्म दृष्ट्वा for दृष्ट्वा कर्म । ST अतिमानवम् ।
*b* ST टिन्नद्रोणकृपाश्चैव कर्णश्चैव महारथः । line omitted in SK, SG, SA.
8 *a* SK धनुर्ध्वस्य SG धनुः परथा ST धनुष्टौ । SK, ST, SA व्यपक्रम्य । SG व्यतिक्रम्य । SA[2] परंतपः SK, SG, ST, SA[1] नरर्षभः ।
*b* SK, SG, ST पुनरभ्यहन् SA पुनरभ्यहनत् ।

ततः पार्थो महाबाहुः प्रहस्य स्वनवत्तदा ।
योजयामास नवया मौर्व्या गाण्डीवमोजसा ॥ ९ ॥
ततोऽर्धचन्द्रमावृत्य तेन पार्थः समागमत् ।
वारणेनेव मत्तेन मत्तो वारणयूथपः ॥ १० ॥
ततः प्रववृते युद्धं पृथिव्यामेकवीरयोः ।
रणमध्ये द्वयोरेवं सुमहल्लोमहर्षणम् ॥ ११ ॥
तौ वीरौ ददृशुः सर्वे कुरवो विस्मयान्विताः ।
युध्यमानौ महावीर्यौ यूथपाविव संगतौ ॥ १२ ॥
तौ समाजघ्नतुर्वीरावन्योन्यं पुरुषर्षभौ ।
शरैराशीविषाकारैर्ज्वलद्भिरिव पन्नगैः ॥ १३ ॥

9 *a* K विहस्य for प्रहस्य ।
*b* A मूर्व्या ।
10 *b* Edns BCEGKL इव HN च for एव ।
11 *b* DGHKLN एव for एवम् । F सुमहा° for सुमहत्° ।
12 *a* M विस्मय गता ।
*b* K महात्मानौ N महावीरौ for महावीर्यौ । H वृषभाविव । D सहतौ N मयुता for संगतौ ।
13 *a* Edn[1] BDE समाजग्मतुः । D अन्योन्य° for अन्योन्यम् ।
*b* C आशिविषाकारै. M आशीविषाग्रै । AK पावकैः for पन्नगैः ।

---

9 *a* ST तत्र for ततः । SK, SG प्रहसन् ।
*b* SK, SG, SA च तदा ST स तदा for नवया । ST मौर्व्या ।
10 *a* SK, SA[2] आहृत्य for आवृत्य । SK, SA[2] समाह्व. । omitted in SG, ST, SA[1]
*b* omitted in SA[1]. SK, SG, ST, SA[2] इव for एव ।
11 *a* SG प्रवर्तते for प्रववृते । omitted in SA[1]
*b* SK, SG, ST, SA[2] एव for एवम् । रोम° for लोम° । omitted in SA[1],
12 *a* S cl कुरव. for ददृशु. । ददृशु for कुरव ।
*b* S. cl. महामानौ । S cl. द्विरदौ for यूथपौ ।
13 *a* ST, SA[1] समाजग्मतु । SK, SG, ST परस्परजयैषिणौ SA[2] परस्परमर्मभिदौ SA[1] परस्परमर्मणौ for अन्योन्य &c. ।
*b* S. cl पावकै. for पन्नगै ।

अक्षय्याविषुधी दिव्यौ पाण्डवस्य महात्मनः ।
तेन पार्थो रणे शूरस्तस्थौ गिरिरिवाचलः ॥ १४ ॥

अश्वत्थाम्नः पुनर्बाणाः क्षिप्रमभ्यस्यतो रणे ।
जग्मुः परिक्षयं तूर्णमभूत्तेनार्जुनोऽधिकः ॥ १५ ॥

ततः कर्णो महच्चापं विकृष्याभ्यधिकं रुषा ।
अवाक्षिपत्ततः शब्दो हाहाकारो महानभूत् ॥ १६ ॥

तत्र चक्षुर्दधे पार्थो यत्र विस्फार्यते धनुः ।
ददर्श तत्र राधेयं तस्य कोपो व्यवर्धत ॥ १७ ॥

स रोषवशमापन्नः कर्णमेव जिघांसया ।
समैक्षत विवर्ताभ्यां नेत्राभ्यां कुरुपुंगवः ॥ १८ ॥

14 *a* K अक्षज्यौ K[1] अक्षयौ । H इषुधिः ।

15 *a* M सुपर्वाणाः for पुनर्बाणाः । Edn[1] CG अभ्यस्यतः N अभ्यस्यतौ ।
*b* BEHKLN शीघ्रं for तूर्णम् । Edns BCDEGHKLMN अधिकोऽर्जुनः for अर्जुनोऽधिकः ।

16 *a* Edns G महाचापम् । Edns CG तथा for रुषा ।
*b* C अवाक्षिपम् L अथाक्षिपत् N अवाकिरत् । BE शक्तीं for शब्दः ।

17 *a* Edns CLN ततः BE अथ for तत्र ।
*b* M यत्र for तत्र । Edn[1] न्यवर्धत H अभ्यवर्ततः K अप्यवीवृधत् L अभ्यवीवृधत् N अप्यवर्धतः for व्यवर्धत । D कोपश्चास्याभवत्ततः । M तस्य कायोत्यवीवृधत् ।

18 *a* N सरोषवेशम् ।
*b* Edns CGL तमैक्षत D समेक्षत F समैक्ष्यत K अन्वैक्षत N अपैक्षत for समैक्षत । Edns ACDGKLMN विवृत्ताभ्याम् । BEH तमैवैक्षत वृत्ताभ्याम् । K कुरुनंदनः ।

---

14 *a* SK अक्षयौ । ST जयैषिणः for महात्मनः ।

15 *a* SG याणान् ।
*b* S. cl. शीघ्रम् for तूर्णम् । SG मुहूर्तेन for अमूसेन । S. cl. अधिकोर्जुनः ।
End of Adh at v. 15. vv. 16, 17, 18 are omitted in S. cl.

तथा तु विमुखे पार्थे द्रोणपुत्रस्य सायकात् ।
त्वरिताः पुरुषा राजन्नुपाजन्हुः सहस्रशः ॥ १९ ॥
उत्सृज्य च महाबाहुर्द्रोणपुत्रं धनंजयः ।
अभिदुद्राव सहसा कर्णमेव सपत्नजित् ॥ २० ॥
तमभिद्रुत्य कौन्तेयः क्रोधसंरक्तलोचनः ।
कामयन्द्वैरथेनैनमिदं वचनमब्रवीत् ॥ २१ ॥

इति विराटपर्वणि गोहरणे अश्वत्थामभङ्गो नाम
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

अर्जुन उवाच ।

कर्ण यत्ते सभामध्ये बहु वाचा विकत्थितम् ।
न मे युधि समोऽस्तीति तदिदं पर्युपस्थितम् ॥ १ ॥

19 *a* Edns CG सायकात् ।
*b* D उपानिन्युः G अपाजन्हुः M उपजन्हुः । H समंततः for सहस्रशः ।
20 *a* D तु for च । L महाबाहुम् ।
*b* L सपत्नयन् ।
21 *a* M ततोभिद्रुत्य ।
*b* Edns BCEG द्वैरथं तेन A वैरथोनेन D द्वैरथेनेमम् HKL द्वैरथे युद्धम् M द्वैरथे-नैवम् for द्वैरथेनैनम् । Edns युद्धम् CG युद्धे for इदम् ।

* * * * *

LV. 1 *a* HL यत्त्वं । HL विकत्थसे ।
*b* H मम for न मे । ABDEH युद्धे । H समो नास्ति Edns ABCDEFGH LN समुपस्थितं K त्वामुपस्थित ।

---

vv. 19, 20, 21, omitted in S. cl.
21 *a* ST सम् for नैम् ।
*b* ST श्रामयित्वा धनुर्वीर इदम् । ST reads vv. 20 & 21 after v. 6 of Adh 57.

* * * * *

LV. N. B.-ST repeats elsewhere almost all the verses of this adhy. noted here as ST[2].
1 *a* SK, ST[2] omit अर्जुन उवाच before this v. SK यत्त्वं SA यत्तत् SG ST[1] यत्त्वं । ST[2] यत्ते कर्ण । SK, SG, SA बह्वयद् ST[1] बह्वयद्वान् ST[2] बहुवाक्य । SK, ST, SA[1] प्रभाषसे SG, SA[2] विकत्थसे for विकत्थितं ।
*b* SG, ST[1] मृषा न मे युधि समः । ST[2] समुपस्थितं ।

सोऽद्य कर्ण मया सार्धं व्यवहृत्य महामृधे ।
ज्ञास्यस्यवरमात्मानं न चान्यानवमंस्यसे ॥ २ ॥
अवोचः परुषा वाचो धर्ममुत्सृज्य केवलम् ।
इदं तु दुष्करं मन्ये यदिदं ते चिकीर्षितम् ॥ ३ ॥
यत्त्वया कथितं पूर्वं मामनादृत्य सूतज ।
तदद्य कुरु राधेय कुरुमध्ये मया सह ॥ ४ ॥
यत्सभायां स्म पाञ्चालीं क्लिश्यमानां दुरात्मभिः ।
दृष्टवानसि तस्याद्य फलं प्राप्नुहि केवलम् ॥ ५ ॥

2 *a* A सोऽद्य K अद्य for सोऽद्य । L महायुधि ।
*b* Edn[1] BDEGLMN ज्ञास्यसे । Edn[1] BDEGMN बलं Edn[2] AC अचलं for अवरं । Edn[1] D आत्मीयं । BEN अन्यम् । Edns CDFGHK अवमन्यसे ।
3 *a* ACELMN पुरुषाः K[1] परमाः for परुषाः । H धनुरुत्सृज्य । M केवलाम् ।
*b* F तदिदम् । M चिकीर्तितम् ।
4 *a* Edns BCEGN मामनासाद्य AD मामनाधृत्य । Edns BCEGHLMN किंचन for सूतज ।
*b* L तदिदं । G महद्भुतं for मया सह । F omits verse 4.
5 *a* Edns G स CHKN च D तु for स्म । K[1] रुध्यमाणां for क्लिश्यमानां ।
*b* BE दृष्टवानासि । Edns GN आप्नुहि C मा ब्रूहि K प्राप्नोषि for प्राप्नुहि । F omits v. 5.

---

1. 2 *a* ST[2] अद्य for सोऽद्य । ST[2] युध्यस्व च महामनाः । for व्यवहृत्य &c.
*b* ST[2] ज्ञास्यस्व परमात्मान । ST[2] अवमन्यसे । SK, SG, ST[1], SA omit the whole v.
3 *a* SK, SG, ST[1], SA सभायां पौरुषं प्रोच्य (SA[1] प्राप्य) for अवोचः परुषा वाचः ।
*b* ST[1] कर्म for मन्ये । ST विदिनं for यदिदं । SK, SG, ST[1], SA कर्तुमिच्छसि यत्कर्म ( SG दुर्बुद्ध ) तन्मन्ये ( ST[1] मन्ये तत् ) दुष्करं त्वया for इदं तु &c.
4 *a* S. cl. नास्तिमद् ( ST[1] मे ) सम इत्यपि for मामनादृत्य सूतज ।
*b* SK, SG, ST, SA[1] सत्यं SA[2] सर्वं for अद्य ।
5 *a* SG, ST[2] तु for स्म । SK सभायां यत्तु ST[1] यतः सभायां । SK नदा त्वया SG त्वया तथा for दुरात्मभिः ।
*b* SK, SG, SA असि for असि । SK, ST[2] अभुहि SA, आप्नुहि । ST[2] फलं भूयः समाप्नुहि ।

निष्पतन्तो रथात्तस्य धौता हैरण्यवाससः ।
आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ॥ ३६ ॥
तस्य तद्दिव्यमस्त्रं हि विगाढं चित्रमस्यतः ।
प्रेक्षन्ते स्मान्तरिक्षस्थाः सर्वे देवाः सवासवाः ॥ ३७ ॥
तद्दृष्ट्वा परमप्रीतो गन्धर्वश्चित्रमद्भुतम् ।
शशंस देवराजाय चित्रसेनः प्रतापवान् ॥ ३८ ॥
पश्यैतानरिनिर्दारान्संसक्तानिव गच्छतः ।
चित्ररूपमिदं जिष्णोर्दिव्यमस्त्रमुदीर्यते ॥ ३९ ॥
नेदं मनुष्याः श्रद्दध्युर्न हीदं तेषु विद्यते ।
पौराणानां महास्त्राणां विचित्रोऽयं समागमः ॥ ४० ॥

36 *a* FHKL निपतन्तः । AM हिरण्यवाससः ।

37 *a* K प्रगाढ । BL छिन्नमस्यतः ।
*b* LN प्रेक्ष्यन्ते ।

38 *a* Edns ACGMN न for तद् । D परम । M चित्रमुत्तमम् ।
*b* FM शशसे ।

39 *a* Edns BCEFGHLMN इमान् D इमम् for एतान् । Edns CG पार्थ निर्मुक्तान् D अथ निर्दारान् L परिवृन्दानि M अरिभिर्दूरान् N राजनिर्दारान् । M ससक्तां N संयुक्तान् ।
*b* A दिव्या । Edns BCEGHN उदीर्यतः D अदीर्यत ।

40 *a* Edns ACG सद्दध्यु L श्रद्दधु M श्रद्दध्याः । L नेदेद ।
*b* DN द्राम्णानां L पौरवाणां । BCL समागतः ।

---

36 *b* SK, SG समदृश्यत ।
37 *a* SK, SG, SA प्रगाढ ।
38 *a* SK, SG, SA[2] न SA[1] सः for तद् ।
39 *a* SK, SG, SA परमान् । SA[2] इति नद्दागन् ( on the margin अरिभिर्दारान् ) ।
*b* SK, SG, SA[1] उदीर्यतः ।
40 *b* SK सौराणां च SG [illegible] for पौराणानां । SG विचित्राणां [illegible] ।

आददानस्य च शरान्संदधानस्य मुञ्चतः ।
विकर्षतश्च गाण्डीवं नान्तरं स्म प्रदृश्यते ॥ ४१ ॥
मध्यंदिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।
न शक्नुवन्ति सैन्यानि पाण्डवं प्रतिवीक्षितुम् ॥ ४२ ॥
तथैव भीष्मं गाङ्गेयं द्रष्टुं नोत्सहते जनः ।
उभौ सदृशकर्माणावुभौ युद्धविशारदौ ॥ ४३ ॥
इत्युक्तो देवराजस्तु पार्थभीष्मसमागमम् ।
पूजयामास दिव्येन पुष्पवर्षेण भारत ॥ ४४ ॥
ततो भीष्मः शान्तनवो वामपार्श्वे समर्दयत् ।
अस्यतः प्रतिसंधाय विवृतं सव्यसाचिनः ॥ ४५ ॥

41 *a* Edns CGHKLMN हि for च । Edns CDGHN संधाय च विमुंचतः M माद्‍धानस्य मुंचतः ।
*b* M विकर्पन्तश्च । Edns CGL समदृश्यत H प्रत्यदृश्यत N संप्रदृश्यते for स्म प्रदृश्यते ।
42 *a* C प्रपतन्तं । H अन्तरे ।
*b* Edn² CGL नाशक्नुवन्त F नाशक्नुवत । K प्रसमीक्षितुम् L प्रतिवीक्षितम् ।
43 *b* D ततः for उभौ । N cl. ( except H ) विश्रुतकर्माणौ H दिव्यास्त्रविदुषौ । Edns CDGKMN उभौ तीव्रपराक्रमौ L उभौ युधि दुरासदौ ।
44 *a* D अथ for तु । M इत्युक्तो धर्मराजस्तु । L समागमे M समागत ।
45 *a* Edns BCEG शान्तनवो भीष्मः । Edns CGL वामं पार्श्वं BEHKM वामे पार्श्वे N वाण पार्श्वे । Edns CG अताडयत् ADFK समार्पयत् BEHLMN समर्पयत् ।
*b* Edns CG पश्यतः H आस्यतं for अस्यतः । D प्रविसंधाय । Edns CG विध्यतः BEM विवृतः H विधृत for विवृत ।

41 S. cl. omits this v.
42 *b* SK प्रसमीक्षितुम् ।
43 *a* S. cl. omits this line.
*b* SK विविधकर्माणौ SG सदृशकर्माणौ । SK, SG, SA² युधि दुरासदौ for युद्धविशारदौ ।
45 *a* SK बाणान् पार्श्वे । SK, SA² समार्पयत् ।
*b* SA¹ [illegible] प्रतिसंधाय । SA² [illegible] for विवृत ।

ततः प्रहस्य बीभत्सुः पृथुधारेण कार्मुकम् ।
न्यकृन्तत् गार्ध्रपत्रेण भीष्मस्यामिततेजसः ॥ ४६ ॥
अथैनं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ।
यतमानं पराक्रान्तं कुन्तीपुत्रो धनंजयः ॥ ४७ ॥
स पीडितो महाबाहुर्गृहीत्वा रथकूबरम् ।
गाङ्गेयो युधि दुर्धर्षस्तस्थौ गिरिरिवाचलः ॥ ४८ ॥
ततः पार्थोऽग्निसंकाशं ज्वलमानमिवोरगम् ।
निचखान ललाटाग्रे भीष्मस्य शरमुत्तमम् ॥ ४९ ॥
तं विसंज्ञमपोवाह संयन्ता रथवाजिनाम् ।
उपदेशमनुस्मृत्य रक्षमाणो महारथम् ॥ ५० ॥

इति विराटपर्वणि गोहरणे भीष्मभङ्गो नाम
एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

46 *b* Edns CG चिच्छेद् AKN न्यकृंतत् BLM न्यकृन्त D चकर्त E न्यकृत्तात् H निकृत्तं । B आह्रार्धपत्रेण M गार्धपत्राणि N गार्धपार्धेन । Edns CG आदित्यतेजसः ।
47 *b* N पातमान for यतमान ।
48 *a* H पीडितस्तैः LM संपीडितः ।
*b* Edns ABCEGHN युद्धदुर्धर्षः । Edns BCEGLM दीर्घ DN दीर्घः H सूर्यः for गिरिः । Edns BCEGL अन्तरं HM अंबरे for अचलः ।
49 Edns BCDEGHKLMN omit this whole v.'
50 *a* MN अपोवाह । ADF सं यन्ता H सयना L सयनः M सयन्ताः । ABDE रथवाजिन G रथिवाजिनां L रथसारथि. ।
*b* A उपादेश ।

---

46 *a* SK प्रसह्य ।
*b* SK, SG, SA न्यकृन्तत् गृध्रपत्र । SA² जांबूनदपरिष्कृतम् for भीष्मस्य° &c. ST omits vv. from 28 *b* to 46 both inclusive.
47 *a* S. cl. दशभिः पश्चात् ।
*b* SG महाबलं for धनंजयः ।
48 *b* SK दीर्घ इवातुरः SG दीर्घमिवातुर ST दीर्घ विनिश्वसन् SA¹ दीर्घं इवातुरः SA² दीर्घमिवातुरः for गिरिरिवाचलः ।
49 S. cl. omits the whole v
50 *a* ST, SA स यन्ता । ST रथवाजिन. ।
*b* ST दृशामन्दामनुस्मृत्य ।

## ॥ षष्टितमोऽध्यायः ॥

वैशंपायन उवाच ।

भीष्मे तु संग्रामशिरो विहाय ।
पलायमाने धृतराष्ट्रपुत्रः ॥
उच्छ्रित्य केतुं विनदन्महात्मा ।
धनुर्विगृह्यार्जुनमाससाद ॥ १ ॥

स भीमधन्वानमुदारवीर्यम् ।
धनंजयं शत्रुगणे चरन्तम् ॥
आकर्णपूर्णायतनोदितेन ।
भल्लेन विव्याध ललाटमध्ये ॥ २ ॥

LX. 1 *a* D अथ L च for तु ।
*c* Edns ACFGH उत्सृज्य M उद्यम्य N उद्धृत्य । DN चापं for केतुं ।
*d* DKN स्वयं for धनुः । BE विगाह्य । H सुतं विराटस्य शरेण जघ्ने for धनुर्वि° ।
2 *a* Edns BCDEGHKMN उद्भववीर्यम् ।
*b* HM शत्रुरणे ।
*c* Edns BCDEGN चोदितेन ।
*d* HK बाणेन । Edns CG विव्याध भल्लेन ।

---

LX. 1 *a* SG omits वैशं॰ before this.
*c* ST उद्धृत्य ।
*d* ST स्वयं निगृह्य । v. omitted in SK, SG, SA.
2 *a* SK उद्भववेगः SG, SA उद्भववेगं ST उद्भवशौर्यम् ।
*b* SK शत्रुशतैरजेयम् SG शत्रुगणैरजेय्यम् SA शत्रुगणैरजेयम् ।
c S. cl. चोदितेन ।
*d* SA[1] बाणेन ।

स तेन बाणेन समर्पितेन ।
जाम्बूनदाग्रेण सुसंहितेन ॥
रराज राजन्रजनीयकर्मा ।
यथैकपर्वा रुचिरैकशृङ्गः ॥ ३ ॥

अथास्य बाणेन विदारितस्य ।
प्रादुर्बभूवासृगजस्रमुष्णम् ॥
सा तस्य जाम्बूनदपुष्पचित्रा ।
मालेव चित्राभिविराजते स्म ॥ ४ ॥

3 *a* BE वातेन समापितेन ।
*b* A सुपुष्पितेन BE सुसहतेन C समोह्हितेन DL सुशासितेन HK सुसधितेन M सुसमितेन N सुसशितेन ।
*c* Edn² BDEN महनीयकर्मा H जननीयकर्मा ।

4 *a* BEN भल्लेन ।
*b* DH अनन्य K अथोसम् for अजस्र । M उल्यम् ।
*c* Edns CGHLM स तस्य DK² ततस्य K¹ ततः स । Edns CGLM पुष्पचित्रः H चित्रपुष्प. ।
*d* Edns CGLM भित्वा ललाट D मालेव कण्ठे । Edns CGL सुविराजते DN अतिविराजते K अभिविराजनि M सुविराजाते । BE चित्रस्य विराजते ।

---

3 *b* SK, SG, SA जाम्बूनदाभेन । SG, SA सुसशितेन ST सुनेजनेन ।
*c* SK, SG, SA रराज पार्थो रुधिरं क्षरन्वै ST रराज सम्यममणीयकर्मा ।
*d* SK SG, SA यथैक (SG तथैक) रश्मिभंगवान् दिवा (SA इवा) SG यथार्कः ST यथा च लोके रचितैकशृङ्गः ।

4 *b* SK, SG, ST अस्र for असृग् । S. cl. उग्गम् for उल्यम् ।
*c* ST चित्रपुष्पा ।
*d* S. cl. धारा for चित्रा । ST च रराज भीमा ।

स तेन बाणेन हतस्तरस्वी ।
दुर्योधनेनोद्धतमन्युवेगः ॥
शरानुपादाय विषाग्निकल्पान् ।
विव्याध राजानमदीनसत्वः ॥ ५ ॥

दुर्योधनश्चापि तमुग्रतेजाः ।
पार्थश्च दुर्योधनमेकवीरः ॥
अन्योन्यमाजौ पुरुषप्रवीरौ ।
समं समाजघ्नतुराजमीढौ ॥ ६ ॥

ततः प्रभिन्नेन महागजेन ।
महीधराभेण पुनर्विकर्णः ॥
रथैश्चतुर्भिर्गजपादरक्षैः ।
कुन्तीसुतं जिष्णुमथोऽभ्यधावत् ॥ ७ ॥

5 *a* ABCDEFGLN बाणाभिहतः । K मनस्वी ।
*b* H जातमन्युः ।
*c* M परानुपादाय विपासिकल्पान् ।
Edns omit v. 5

6 *a* K उग्रकर्मा L उग्रधन्वा ।
*b* एव for एक ।
*d* Edns CGN समौ । Edn² ACDGK समाजग्मतुः ।

7 *c* M कक्षैः for रक्षैः ।
*d* Edns ABCDEFGHKLM अथाभ्यधावत् ।

---

5 *a* ST अनेन for स तेन । SK, SA² बाणाभिहतः SG बाणाभिमुखं ।
*b* SG उत्थित for उद्धत । ST वेगमन्युः ।

6 *a* ST उग्रधन्वा ।
*d* SG समाजग्मतुः । ST आजिभूमौ ।

7 *c* ST गजैः for रथैः ।
*d* SK, SG, SA पाण्डवमभ्यधावत् ST फल्गुनमभ्यधावत् ।

तमापतन्तं सहसा नगेन्द्रम् ।
धनंजयः कुम्भविभागमध्ये ॥
आकर्णपूर्णेन दृढायसेन ।
बाणेन विव्याध महाजवेन ॥ ८ ॥
पार्थेन सृष्टः स तु गार्ध्रपक्षः ।
आपुङ्खदेशात्प्रविवेश कायम् ॥
विदार्य शैलप्रवरप्रकाशम् ।
यथाशनिः पर्वतमिन्द्रसृष्टः ॥ ९ ॥
शरप्रभिन्नः स तु नागराजः ।
प्रवेपिताङ्गो व्यथितान्तरात्मा ॥
सुगाढविद्धो निपपात मह्याम् ।
वज्राहतं शृङ्गमिवाचलस्य ॥ १० ॥

8 *a* Edns BCDEGHKLMN त्वरितं for सहसा । Edns ABCDEFGHK LN गजेन्द्रम् ।
 c L आकर्णपूरेण । Edns CG महायसेन D दृढायतेन L दृढासनेन ।
9 *a* Edns BCEGKLMN गार्ध्रपत्रः H गार्ध्रपत्री ।
 *b* M आपुङ्खदेशात्प्रतिवेशनागः । Edns BCDEGHKLN नागम् for कायम् ।
 *c* Edns CN शैलप्रवरं ।
 *d* M इन्द्रमुक्तः ।
10 *a* Edns BCDEGHKN शरप्रनन्नः ।
 *c* Edns BCDEGHKLMN संसीदमानः AF स गाढविद्धः । D अपि पपात मह्याम् K दृढमाहतश्च L निपपात भूमौ ।
 *d* M इवाचचाल । K पपात भूमौ भृशमुन्नदन्सः ।

---

8 *a* S. cl. त्वरितं गजेन्द्रम् ।
 *b* SK, SG, SA ललाटमध्ये ।
 *c* ST च लोहकेन for दृढायसेन । SG आकर्णपूर्णायतचोदितेन ।
 *d* S. cl. भृशं मृगारिः ( SK तु वीरः ST नगेन्द्रम् ) for महाजवेन ।
9 *a* $SA^2$ मुक्तः for सृष्टः । SK गृध्रपत्रः SG, ST, SA गार्ध्रपत्रः ।
 *b* SK, SG, SA ह्यापुङ्खदेशात् ( SK देशं )। S. cl. नाग for कायम् ।
10 *a* SK, SG, SA शरप्रततः ।
 *c* SK, SG, $SA^2$ संसीदमानः $SA^1$ स सीदमानः ST समीक्ष्मानः for सुगाढविद्धः । SG, $SA^2$ विरराज $SA^1$ विरराज for निपपात । SK, ST भूमौ SG भूम्यां ।

निपातिते दन्तिवरे पृथिव्याम् ।
त्रासाद्विकर्णः सहसावतीर्य ॥
तूर्णं पदान्यष्टशतानि गत्वा ।
विविंशतेः स्यन्दनमारुरोह ॥ ११ ॥

निहत्य नागं तु शरेण तेन ।
वज्रोपमेनाप्रतिमप्रभावः ॥
तथाविधेनैव शरेण पार्थः ।
दुर्योधनं वक्षसि निर्बिभेद ॥ १२ ॥

हते गजे राजनि चैव भिन्ने ।
तथा विकर्णे च सपादरक्षे ॥
गाण्डीवमुक्तैर्विशिखैः प्रणुन्नाः ।
ते योधमुख्याः सहसा प्रजग्मुः ॥ १३ ॥

12 *b* Edns BCDEGHLM अद्रिवराग्रुदाभ K अद्रिमिवाग्रुवीराः N अद्रिमिवांयुदाभं for अप्रतिम° ।

13 *a* Edns CDGHMN ततः L गते for हते । BEN भग्ने for भिन्ने ।
*b* Edns ACDFGHKL भग्ने N ततः for तथा ।
*c* K च शरैः for विशिखैः । D प्रणुन्नान् K विभिन्नाः ।
*d* D सु for ते । H अथ जग्मुः Edns ABCDEFGKL अपजग्मुः ।

---

11 *b* ST अतिवीर्यात् for अवतीर्य ।

12 *a* ST विशिखेन तेन for तु शरेण तेन ।
*b* SK, SG, SA अद्रिवरप्रकाशम् ST अद्रिवरोन्छ्राभम् for अप्रतिम
*c* ST च नागयोधान् for शरेण पार्थः ।
*d* omitted in ST.

13 *b* SK, SG, SA भग्ने विकर्णे । SG सह for च स° ।
*c* SG इषुभिः for विशिखैः । SK प्रभिन्नाः ।
*d* SG सु for ते । ST omits this v.

दृष्ट्वैव बाणेन हतं तु नागम् ।
योधांश्च सर्वान्द्रवतो निशम्य ॥
रथं समावर्त्य कुरुप्रवीरः ।
रणात्प्रदुद्राव यतो न पार्थः ॥ १४ ॥

तं भीतरूपं त्वरितं द्रवन्तम् ।
दुर्योधनं शत्रुमहो निषङ्गी ॥
प्राक्ष्वेडयद्योद्धुमनाः किरीटी ।
बाणेन विद्धा रुधिरं वमन्तम् ॥ १५ ॥

14 *a* D तु for एव । Edns CG पार्थेन for बाणेन । Edns ACFGHKLM च for तु ।
*b* D निरीक्ष्य for निशम्य ।
*c* Edns ABCDEFGHN समावृत्य M समाचक्ष्य ।,
*d* D द्रुतं for रणात् ।

15 *a* Edns BCEGHKLM भीमरूप ।
*b* Edns BCDEG अभिपद्मात् N हि पद्मात् ।
*c* Edns BCEG प्रास्फोटयत् DN प्राक्षेपयत् K प्रक्ष्वेडयत् । Edns AH युद्धमनाः ।
*d* Edns ACGHLM विद्ध for विद्धा ।

---

14 *a* SA दृष्ट्वैक° । SK, SG, SA च for तु । ST omits *a*.
*b* SK नृपतिः for द्रवतः । SK, SG, SA निरीक्ष्य for निशम्य ।
*c* S. cl. समावृत्य ।
*d* SG रणात्प...द्यनु पार्थः ।

15 *a* SA[1], ST भीमरूपं । SK, SG, SA[1] मजन्तम् SA[2] पयान्तम् ।
*b* SK, SG, SA[2] शत्रुगणावमर्दी ( SG° मर्दः ) SA[1] शत्रुगणैरजेयम् ।
*c* SK अन्वाह्वयत् SG अन्वभ्यपात् ST तमन्वगात् SA[1] असाह्वयत् SA[2] अन्वागमत् for प्राक्ष्वेडयत् । ST युद्धमनाः ।
*d* SK बाणाभिविद्धं SG बाणेनविद्ध ST बाणेन विद्धं SA बाणाभिविद्धं ।

अर्जुन उवाच ।

विहाय कीर्तिं विपुलां यशश्च ।
युद्धात्परावृत्य पलायसे किम् ॥
न तेऽद्य तूर्याणि समाहितानि ।
यथावदुद्यान्ति गतस्य युद्धे ॥ १६ ॥

युधिष्ठिरस्यास्मि निदेशकारी ।
पार्थस्तृतीयो युधि च स्थिरोऽहम् ॥
तदेवमावृत्य मुखं प्रयच्छ ।
नरेन्द्रवृत्तं स्मर धार्त्तराष्ट्र ॥ १७ ॥

16 *a* Edn² ABCEGHLN विपुलं ।
*c* N. cl. except F समाहतानि ।
*d* Edns CG तथैव for यथावत् । Edns CG राज्यादवरोपितस्य for उद्यान्ति &c. BE उद्धांति DK उर्व्यांवि⁰ for उद्यान्ति । A युद्धाद् । *c* and *d* omitted in H.

7 *a* N नियोगकारी ।
*b* Edns ACFGL संस्थितः BDEKN चास्थितः H न युधि स्थितः । N cl. except AH अस्मि for अहम् ।
*c* Edns CFGHKLM तदर्थं A त्वदर्थं for तदेवम् ।

---

6 *a* SK, SA omit अर्जुन उवाच । SA² प्रहाय । ST च वीर्यं for यशश्च SK, SG, SA कीर्तिं च यशश्च लोके ।
*c* ST समाहतानि । SK, SG, SA न नंदायिष्यंति ( SA ननादयिष्यंति तथाहतानि ) ( SG तथाहतानि ) for न तेऽद्य &c.
*d* SK, SG, SA तूर्याणि युद्धादवरोपितस्य । ST यथा पुरा ते सुगतानि युद्धे ।

17 *b* SA¹ आर्थितः for स्थिरः । S. cl. अस्मि for अहम् ।
*c* S. cl. तदर्थं for तदेवम् ।

मोघं तवेदं भुवि नामधेयम्।
दुर्योधनेति प्रथितं पुरस्तात्॥
न चेह दुर्योधनता तवास्ति।
पलायमानस्य रणं विहाय॥ १८॥

न ते पुरस्तादथ पृष्ठतोऽपि।
पश्यामि दुर्योधन रक्षितारम्॥
अपेहि युद्धात्पुरुषप्रवीर।
प्राणान्प्रियान्पाण्डवतोऽद्य रक्ष॥ १९॥

इति विराटपर्वणि गोग्रहणे दुर्योधनभङ्गो नाम
षष्टितमोऽध्यायः॥ ६०॥

---

18 *a* N घोरं for मोघम्। K चलेदं N तदेव। H सलु K तव N युधि for भुवि।
*b* Edns BCDEGHKN इह रूतं for प्रथितम्।
*c* Edns ACFGHKLM नहीह। H अद्य for अस्ति।

19 *a* Edns ACDFGHL वा for अपि।
*c* BCDEGLM अपेहि। H परीप्स K परेहि। H युद्धं। K युद्धेन कुरुप्रवीर।

* * * * *

---

18 *a* SK, ST, SA तवैतत्।
*b* S. cl. इह रूतं for प्रथितम्।
*c* S. cl. हि for च। SK अद्य for अस्ति।

19 *a* SK, SG, SA वा ST च for अपि।
*c* S. cl. परीप्स ( SG परीप्स्य ) for अपेहि। S. cl. युद्धेन कुरुप्रवीर।
*d* S. cl. प्राणान् ( SG प्राणं) मया बाणबला ( ST बाणयुना ) मितप्तान् ( SG तप्तम् SA[1] तप्तः )। ST reads this verse before v. 18.

## ॥ एकषष्टितमोऽध्यायः ॥

वैशंपायन उवाच ।

आहूयमानस्तु स तेन संख्ये ।
पार्थेन राजा धृतराष्ट्रपुत्रः ॥
निवर्तितश्चैव गिरङ्कुशेन ।
महागजो मत्त इवाङ्कुशेन ॥ १ ॥
सोऽमृष्यमाणो वचनाभिसृष्टः ।
महारथेनातिरथो तरस्वी ॥
पर्याववर्ताथ जवेन भोगी ।
भोगी यथा पातदलाभिमृष्टः ॥ २ ॥

LXI. 1 *a* Edns CGHL च for तु ।

*b* Edns CDGM महात्मना वै N महात्मनासौ for पार्थेन राजा । BE महामना धृतराष्ट्रस्य पुत्रः K महामना वै धृतराष्ट्रपुत्रः H महात्मना धृतराष्ट्रस्य पुत्र ।

*c* D निवृत्तितः M निपर्ततः F विवार्तितः । Edns BDEGHKLMN तस्य for चैव । C निवर्तमानस्य for निवर्तितश्चैव । Edn[1] BCEGHLMN गिरांकुशेन DK वचोंकुशेन ।

2 *a* Edns ABCDHLMN वचसाभिमृष्टः DK वचसाभिसृष्टः E वचसाभिपृष्टः ।

*c* DH पर्यावृत्याथ N पर्यापतत् पार्थ । Edns BCDEHKLM रथेन for जवेन । Edns CDGH वीरः L तेन M वेगं for भोगी । N रथं प्रवीरः for जवेन भोगी । K पर्याववर्तातिरथो जवेन । BE omit भोगी ।

*d* CD पादतलाभिसृष्टः G पादतलाभिपृष्टः L पादतलावमृष्टः ।

---

LXI. 1 *a* SA[1] आहूयमानस्य । ST तथा स तेन SA कुरुप्रवीरः SG स तेन संघे for स तेन संख्ये ।

*b* SK, SA, SG महात्मना वै ST संख्ये महात्मा for पार्थेन राजा । SK, ST धृतराष्ट्रसूनुः ।

*c* ST निर्भर्त्सितः । SK चापि SG, SA[2] तस्य SA[1] तत्र for चैव । SK, SA गिरां-कुशेन ST तद्वचनाङ्कुशेन ।

*d* SK गजो मदोन्मत्तः SG, SA गजो यथा मत्तः for महागजो मत्तः । ST omits महागजो etc and reads for it सोऽमृष्यमाणो च शराभिमृष्टः corresponding to the first half of v. 2 *a*. ST continues its Adh.

2 *a* SK, SA वचसाभिमृष्टः SA[2] वचनाभिमृष्टः । SG ... णे वचसाभिमृष्टः । ST reads *b* for this.

*b* ST has for this निवर्तयामास रथं स राजा ।

*c* S. cl. ततः स पर्यावृते रथेन ।

तं प्रेक्ष्य कर्णः परिवर्तमानम् ।
निवृत्य संस्तभ्य च विद्धगात्रः ॥
दुर्योधनस्योत्तरतोऽभ्यगच्छत् ।
पार्थं नृवीरो युधि हेममाली ॥ ३ ॥
भीष्मः पुनः शान्तनवो निवृत्य ।
हिरण्यकक्षांस्त्वरयंस्तुरङ्गान् ॥
दुर्योधनं पश्चिमतोऽभ्यरक्षत् ।
पार्थान्महाबाहुरधिज्यधन्वा ॥ ४ ॥

3 *a* L तं प्रेष्य । E कर्णात् । BE परिवर्त्यमानम् ।
*b* Edns CDGHKMN निवर्त्य । F सटम्य A संपुट GHKL संस्तंभ्य । Edns CDGHKLM विद्धगात्रम् F गात्रविद्धः । A विचित्रगात्रं N स विद्धगात्रं for च विद्धगात्रः ।
*c* Edns BCDEGKN अभ्यगच्छत् । HLM दुर्योधन दक्षिणतो ररक्ष ।
*d* HLM पार्थान्नृवीरात् ।
4 *a* Edns BCDEFGHKLMN ततः for पुनः । Edns ACFG विवृत्य K निवृत्तः ।
*b* Edns CGM हिरण्यकक्षः । Edns CG त्वरया A त्वरयः BEHN तुरगान् K तु हयान् for त्वरयन् । Edns CG अभिरगी BEH शिशगान् N शिघगान् K नियम्य M सुरगान् for तुरगान् ।
*c* L चोत्तरतः । C अभिरक्षत् D ररक्ष H ररक्षम् N अभ्यगच्छत् for अभ्यरक्षत् ।
*d* D चक्र H पार्थः L चाप for पार्थात् ।

---

3 *a* SA[1], SG समेक्ष्य । परिवर्त्यमानम् ।
*b* SA सस्तम्य SG विवृत्य for निवृत्य । SK सस्तमितसर्वगात्रम् SG संस्तभ्य च सर्वगात्रम् SA[2] गात्राण्यतिविद्धगात्रः SA[1] चाप्यत्रविविद्धगात्रम् । ST विवृद्ध बाणेन च विद्धगात्रम् ।
*c* S cl. दुर्योधन दक्षिणत. । SG, ST, SA ररक्ष SK अन्वरक्षत् for अभ्यगच्छत् ।
*d* S. cl. पार्थात् for पार्थम् । SK, SA[1] महाबाहुरधिज्यधन्वा for नृवीरो युधि हेममाली ।
4 *a* SK, SA, ST ततः SG तथा for पुनः । SK, SG, ST विवृत्य SA[1] निवर्त्य for निवृत्य ।
*b* SK, SA, ST हिरण्यकक्ष्यान् SG हिरण्यकक्ष्यम् । SK त्वरया SG त्वरय ST त्वरयु. for त्वरयन् । SG त्वरथ्यान् for तुरगान् ।
*c* S cl ररक्ष for अभ्यरक्षत् ।
*d* ST पादात् for पार्थात् । SA[1] पार्थान्नृवीरो युधि हेममाली ।

द्रोणः कृपश्चैव विविंशतिश्च ।
दुःशासनश्चैव निवृत्य शीघ्रम् ॥
सर्वे पुरस्ताद्विततेषुचापाः ।
दुर्योधनार्थे त्वरयाभ्युपेयुः ॥ ५ ॥

स तान्यनीकान्यनुवर्तमानः ।
आलोक्य पूर्णौघनिभानि पार्थः ॥
हंसो यथा मेघमिवापतन्तम् ।
धनंजयः प्रत्यपतत्तरस्वी ॥ ६ ॥

5 *b* Edns AFGKM विवृत्य ।
*c* Edns विततोरुचापाः F विधृतेषुचापाः M विततेषुचापाव् ।
*d* Edns BCDEGHN दुर्योधनार्थं K कुरुप्रवीराः । Edns CG त्वरिताभ्युपेयुः H त्वरिताभ्युपेतुः M त्वरयाभ्यपेतुः K युधि दुःप्रसह्याः F त्वरयाभ्यपेयुः ।

6 *a* Edns CGH निवर्तमानानि ABDEFKLN अनुवर्तमानानि for अनुवर्तमानः ।
*b* M त्रैलोक्य° for अलोक्य । N मेघौघनिभानि ।
*c* D मेघ इव । K[2] इवापतन्ते ।
*d* Edns GHKL प्रत्यतपद् BE अत्यपतद् M प्रत्ययते N प्रत्युपतद् ।

---

5 *a* SA[1] निवर्त्य ।
*c* S. cl. प्रणिधाय बाणान् for विततेषुचापाः ।
*d* SK, SG, SA दुर्योधनार्थं त्वरिताभ्युपेयुः ST दुर्योधनं धन्विनमभ्यरक्षन् ।

6 *a* S. cl. सर्वाण्यनीकानि निवर्तितानि ।
*b* S. cl. संवेक्ष्य for आलोक्य । ST मेघौघनिभानि ।
*c* SK महामेघं । SA[2] आपतान्ते for आपतन्तम्
*d* ST प्रत्युद्ययाद् for प्रत्यपतत् ।

ते सर्वतः संपरिवार्य पार्थम् ।
अस्त्राणि दिव्यानि समादधानाः ॥
ववर्षुरभ्येत्य शरैः समन्तात् ।
मेघो यथा भूधरमम्बुवेगैः ॥ ७ ॥
ततोऽस्त्रमस्त्रेण निवार्य तेषाम् ।
गाण्डीवधन्वा कुरुपुङ्गवानाम् ॥
सम्मोहनं शत्रुसहोऽन्यमस्त्रम् ।
प्रादुश्चकारैन्द्रिरपारणीयम् ॥ ८ ॥
ततो दिशः संप्रदिशो विवृत्य ।
शरैः सुधारैर्निशितैः सुपुङ्खैः ॥
गाण्डीवघोषेण मनांसि तेषाम् ।
महाबलः प्रव्यथयाञ्चकार ॥ ९ ॥

7 *a* F स परिवार्य L तं परिवार्यं ।
*b* Edns DN शस्त्राणि । Edns BCEGHKLMN समाददानाः D समाददाना ।
*d* Edns ABCDEFGKN मेघाः । Edn² अंबुवर्गैः ADFKL अम्बुवर्षैः BEN अंबुजालैः H अंबुपातैः ।

8 *a* BEN विद्रार्य । K अस्त्रै॰ प्रतिवार्य ।
*c* Edns BCDEFGHLMN अन्यदस्त्रम् K महास्त्रम् ।
*d* AL उग्र DN ऐन्द्र for ऐन्द्रिः । Edns BEN अवारणीयम् D इवारणीयम् । C ऐन्द्रियपारणीयम् ।

9 *a* Edns CFGHLM श्चानुदिशः DN समदिशः K सोऽनुदिशः । G विनृत्य H सर्वाः ।
*b* Edns ACFGH सुपत्रैः M सपत्रैः L सपुङ्खैः K सुपीतैः ।
*d* K महारथः । D प्रव्यथनञ्चकार ।

---

7 *a* SA¹ न परिवार्य ।
*b* SA¹ शस्त्राणि for अस्त्राणि । SA सर्वाणि for दिव्यानि । S. cl. समाददानाः ।
*c* SK समर्थैः for समन्तात् ।
*d* S. cl. मेघाः ।

8 c S. cl. अन्यदस्त्रम ।
*d* S. cl. ऐन्द्रमवारणीयम् ।

9 *a* S cl. चानुदिशो निवार्य ।
*b* SK सुघोरैः for सुधारैः । SA² सुमुखैः for निशितैः ।
*c* °शब्देन for °घोषेण । SG निवार्य for मनांसि ।
*d* SK महाबलम् SA¹ महारथः SG, ST मुदा बलः ।

ततः पुनर्भीमरवं प्रगृह्य ।
दोर्भ्यां महाशङ्खमुदारघोषम् ॥
व्यनादयत्संप्रदिशो दिशः खम् ।
भुवं च पार्थो द्विषतां निहन्ता ॥ १० ॥
ते शङ्खनादेन कुरुप्रवीराः ।
सुसंहताः पार्थसमीरितेन ॥
उत्सृज्य चापानि समुच्छ्रितानि ।
सर्वे तदा शान्तिपरा बभूवुः ॥ ११ ॥
तथा विसंज्ञेषु परेषु पार्थः ।
स्मृत्वा तु वाक्यानि तदोत्तरायाः ॥
निर्याहि मध्यादिति मत्स्यपुत्रम् ।
उवाच यावत्कुरवो विसंज्ञाः ॥ १२ ॥

10 *a* F भीमतरं N भीमवरं ।
*b* A उदारघोरं EM उदारघोषः ।
*c* D व्यनादयः LM विनादयन् । Edns BCDEGKLM सप्रदिशा N स्वं प्रदिशः । BEN च for खम् ।
*d* H दिवं for भुवं । H omits पार्थः N omits *d*.
11 *b* Edns BCDEGHKLMN संमोहिताः for सुसंहताः । C पार्थसमाहितेन ।
*c* Edns ABCDEFGHKMN दुरासदानि for समुच्छ्रितानि ।
12 *a* Edn[2] BE च तेषु Edn[1] CGK बलेषु for परेषु ।
*b* Edns BEGHKLN स्मृत्वा च C स्मृता च D स्मृत्वाथ M स्मृत्वानि । Edns CGHKLM तथा for तदा ।
*c* H वासांसि हि for मध्यादिति । N मात्स्यपुत्रं ।

---

10 *a* S. cl. निगृह्य ।
*b* SA मुदा शङ्खम् ।
*c* SK, ST, SG व्यनादयन् SA सप्रदिशः । SG दशम् ST दिशम् for दिशः ।
*d* SA[1] विषयान् निहन्ता ।
11 *a* SA, SG, ST शंख्यशब्देन ।
*b* S. cl. संमोहिताः ।
*c* SK, ST दुरासदानि SA, SG दुरानमानि for समुच्छ्रितानि ।
*d* SK, SG मोहपराः ST मोहयुताः for शान्तिपराः ।
12 *a* SK ततो विसंज्ञानि ।
*b* SK, SA[2], SG, SA संस्मृत्य ST[1] संस्पृश्य for स्मृत्वातु । S. cl. संदेशमथोत्तरायाः ।
*c* SK, SG, ST वाहाम् SA वाहान् for मध्यात् । S. cl. मात्स्यपुत्रम् ।

आचार्यशारद्वतयोश्च शुक्लम् ।
कर्णस्य पीतं रुचिरं च वस्त्रम् ॥
द्रौणेश्च राज्ञश्च तथैव नीलम् ।
वस्त्रं समादत्स्व नरेन्द्रपुत्र ॥ १३ ॥
भीष्मस्य संज्ञा तु तथैव मन्ये ।
जानाति मेऽस्त्रप्रतिघातमेषः ॥
एतस्य वाहान्कुरु सव्यतस्त्वम् ।
एवं हि यातव्यममूढसंज्ञे ॥ १४ ॥
रश्मीन्समुत्सृज्य ततो महात्मा ।
रथादवप्लुत्य विराटपुत्रः ॥
वस्त्राण्युपादाय महारथानाम् ।
तूर्णं पुनस्तंरथमारुरोह ॥ १५ ॥

13 *a* Edns ACEGH सुशुक्ले K तु शुक्ले L सुरके N तु शुभ्रे for च शुक्लम्। BE °सारद्वतयोश्च सुक।
*b* L स्ववस्त्रम् for च वस्त्रम्।
*c* H द्रोणस्य M द्रोणश्च for द्रौणेश्च। Edns and All MSS नीले।
*d* Edns ABCDEGHKLN वस्त्रे for वस्त्र। Edns ACDFGHKLMN नरप्रवीर for नरेन्द्रपुत्र।
14 *a* Edns CDGHKLMN संज्ञाम्। N। च for तु।
*b* Edn[1] CG सः for मे। K चैव for मेऽस्त्र°। M मेऽस्यपारिधान।
*d* Edns BCDEGN °संज्ञे H °संज्ञा for °संज्ञे।
15 *b* H अवप्लुत्य।
*d* Edns ACFGKL स्व रथ BE तद्रथ।

---

13 *a* SK, SA, SG सुशुक्ले ST सुशुक्लम्।
*b* SA[1] चित्रम् for पीतम्। SG सुवस्त्रम् for च वस्त्रम्।
*c* SG द्रोणस्य for द्रौणेश्च। SK, SG, ST, SA[1] नीले।
*d* S cl. वस्त्रे। ST समाधत्स्व SA[1] समागत्स्व। S cl. नरप्रवीर।
14 *a* SK, SG, SA[2] संज्ञाम् for संज्ञा। ST भीष्म सुसंज्ञाम् for भीष्मस्य संज्ञा।
*b* SA[1] °मेष. for °मेषः।
*c* SA[2] ते नस्य SA[1] एतस्य for एतस्य।
*d* S. cl. यातव्यम्। SK, SA[1] SG अमूढसंज्ञे। ST अनु विसृज्य।
15 *a* SA reads वैशंपायन उवाच before v. 15
*d* S. cl. स्वम् for तम्।

ततोऽन्वशासच्चतुरः सदश्वान् ।
पुत्रो विराटस्य हिरण्यकक्षान् ॥
ते तद्बतीयुर्ध्वजिनीं कुरूणाम् ।
श्वेता वहन्तोऽर्जुनमाजिमध्ये ॥ १६ ॥
तथा प्रयान्तं पुरुषप्रवीरम् ।
भीष्मः शरैरभ्यहनत्तरस्वी ॥
स चापि भीष्मस्य हयान्निहत्य ।
विव्याध पार्थो दशभिः पृषत्कैः ॥ १७ ॥
ततोऽर्जुनो भीष्ममपास्य युद्धे ।
विद्धास्य यन्तारमरिष्टधन्वा ॥
तस्थौ विमुक्तो रथवृन्दमध्यात् ।
राहुं विदार्येव सहस्ररश्मिः ॥ १८ ॥

16 *a* BE अन्वशाद्धै ।
*b* AFL सुवर्णकक्षान् ।
*c* D तेन HM ततः for ते तद् । Edns ABCEFGKLN ध्वजिनां D ध्वजीनां H बलिनम् M ध्वजिनी । Edns ABCDEFGHKLN अनीकं for कुरूणां ।
*d* L अश्वाः M श्वेनान् । Edns BCEGHKLMN आजिमध्यात् ।
17 *a* Edns AFGMN अनुयान्तं CHKL अनुयात for प्रयान्तं ।
*d* HKLMN पार्श्वे for पार्थः । N बहुभिः for दशभिः ।
18 *b* Edn[1] विश्वास्य H विद्धा च for विद्धास्य । N अधिज्यधन्वा ।
*c* M ततः for तस्थौ ।
*d* Edns BCDEGHN मेघं K मेघान् for राहुं । Edns CDM एव for इव

---

16 *a* SK, SG अन्वशात्तान् । ST अभिद्रवान् for अन्वशासद् । SA[2] तुरंगान् for सदश्वान् ।
*b* ST हि तोरतुतोद् for हिरण्यकक्षान् । S. cl. except ST हिरण्यकक्ष्यान् ।
c SG एतद् ST ते स SA[1] एक for ते तद् । SK, SG द्विषताम् ST, SA ध्वाजिनाम् for ध्वजिनीम् । S. cl. अनीकम् for कुरूणां ।
*d* SK, SA मध्यात् ।
17 *a* SK, ST भीष्मम् for पार्थः ।
18 *a* SA[2] सल्ये for युद्धे ।
*b* ST च for अस्य ।

लब्ध्वा तु संज्ञां च कुरुप्रवीरः ।
पार्थं समीक्ष्याथ सुरेन्द्रकल्पम् ॥
रणात्प्रमुक्तं स्थितमेकवीरम् ।
स धार्तराष्ट्रस्त्वरितो बभाषे ॥ १९ ॥
अयं कथंस्विद्भवतां विमुक्तः ।
तं वै प्रमथ्नीत यथा न मुञ्चेत् ॥
तमब्रवीच्छान्तनवः प्रहस्य ।
क्व ते गता बुद्धिरभूत्क्व वीर्यम् ॥ २० ॥

19 *a* Edns AGL हि M च N अथ for तु । BC सज्ञा । Edns CGH तु BDE FKN सः for च । Edns CML कुरुप्रवीराः ।
*b* Edns CGM निरीक्ष्याथ । H समीक्ष्य पार्थं च for पार्थं समीक्ष्याथ । M नरेन्द्रकल्प ।
*c* Edns CG रणे D रथात् K शूर for रणात् । Edns BDEGHMN विमुक्तं for प्रमुक्त । BE स्थिरम् for स्थित । K रणे सास्थितम् for रणात्प्रमुक्त । Edns BCDEGHMN आजौ K ईस्य for °वीरम् ।
*d* BDEN त for सः । K धार्तराष्ट्रान् । Edns CDGM त्वरित ।
20 *a* Edn[2] कथ वे D कदाचित् FHKL कथचित् N कथ वा for कथस्वित् । Edns CG भवतः BDELN भवता for भवताम् । C विमकः DH विमुक्त for विमुक्त ।
*b* Edns CFGN तथा A तदा H यन K गाढ for न वे । ADHL प्रमथीत N प्रमथ्नीहि for प्रमथ्नीत । Edn[2] BCEGHK[1]LMN मुच्येत् D मुच्यते for मुञ्चेत् । K निवर्त्येत् for न मुञ्चेत् ।
*c* N विहस्य for प्रहस्य ।
*d* H तदा for गता । L गत for अभूत् ।

---

19 *a* SK, SG, SA पुरुषप्रवीर. for च कुरुवीर. । ST कुरुवीर. प्रतिलब्धसज्ञः ।
*b* SK निरीक्ष्याथ ST ह्यवेक्षन्त for समीक्ष्याथ । S cl महेन्द्रकल्पम् ।
*c* SG, ST, SA विमुक्तम् for प्रमुक्तम् । SG, ST, SA स्थितमेकमाजौ SK पुरुषप्रवीरम् for स्थितमेकवीरम् ।
*d* ST त्वरितम् for त्वरित ।
20 *a* SK कथचित् for कथस्वित् । SK भवत SG, ST, SA भवता for भवताम् ।
*b* SG तत्रैव for त व । SK, SG, SA प्रमथीत । SK, SG, SA मुच्यते SA[1] न मुच्ये । ST तमाशु गृह्णात रणे प्रसह्य ।
*c* SA ततः for तम् ।
*d* SG गते for क्व ते ।

न त्वेष बीभत्सुरलं नृशंसम् ।
कर्तुं न पापेऽस्य मनो निविष्टम् ॥
त्रैलोक्यहेतोर्न जहेत्स्वधर्मम् ।
सर्वे स्थिताः स्मो न हता रणेऽस्मिन् ॥ २१ ॥

क्षिप्रं कुरून्याहि कुरुप्रवीर ।
निर्जित्य गास्तु प्रतियातु पार्थः ॥
मा तेऽद्य कोपो निपतेत मोहात् ।
तत्संविधातव्यमरिष्टधन्वन् ॥ २२ ॥

21 *a* A नन्वेषः F मत्वेति N तद्वेव BEGHKLM नत्वेव । K भीवत्सुः । F नृशंस्यम् ।
*b* अस्य omitted in C. F यते for मनः । Edns CG विशिष्टम् for निविष्टम् ।
*c* D अपि न स्वधर्मम् । N सधर्मं for स्वधर्मम् ।
*d* Edns C G सवे न तस्मात् BEN तस्मान्न सर्वे H सर्वे ।स्थितास्मिन् M सर्वेष्व तस्मात् । Edns BCEGN निहताः for न हताः । H न जह्याता रणे for न हता रणेस्मिन् । D जह्येत्ततो नैव हताःस्म सर्वे ।

22 *a* D आदाय गाश्च प्रतियातु पार्थः।
*b* Edns BCEGHKMN विजित्य for निर्जित्य । Edns BCEGHK च for तु । M गाः संर्नात यातु N गाः संयाति यातु for गास्तु प्रतियातु । D क्षिप्रं पुं याहि कुरुवीर for निर्जित्य etc.
*c* Edns CGHKLN मा ते स्वकोर्थः BDE मा ते स्वकोपः M मानेपु कोर्थः for मा तेद्य कोपः । A निपतेत्तु N निपतेच्च ।
*d* न संविधातव्यं M तं सविधातस्य । Edns G अरिष्टधन्धम् A अरिष्टान्विनः KL अरिष्टधन्विन् M अरिष्टधन्वान् N अधिज्यधन्वना । N omits तत् । BE complete the adhyāya here.

---

21 *a* SK, SG, ST, SA[2] एव for एषः । SA[1] तत्र for त्वेषः । SA[1] बीभत्सुरणम् ।
*b* SA[1] पापस्य for पापेऽस्य ।
*c* ST जहाति धर्मम् for जहेत्स्वधर्मम् । SK, SG, SA जह्यान्न धर्मं त्रिदिवस्य हेतोः ।
*d* SK, SG, ST सर्वे तु तस्मान्न हता रणेऽस्मिन् SA सर्वे तु तस्मान्निहता रणेऽस्मिन् ।

22 *b* SK, SG, SA विजित्य गाश्च ST आदाय गास्ताः for निर्जित्य गास्त ।
*c*, *d* omitted in S.

वैशंपायन उवाच ।

दुर्योधनस्तस्य तु तन्निशम्य ।
पितामहस्यात्महितं वचोऽथ ॥
अतीतकामो युधि सोऽत्यमर्षी ।
राजा विनिःश्वस्य बभूव तूष्णीम् ॥ २३ ॥

तद्भीष्मवाक्यं हि समीक्ष्य सर्वे ।
धनंजयाग्निं च विवर्धमानम् ॥
निवर्तनायैव मतिं विदध्युः ।
दुर्योधनं ते परिरक्षमाणाः ॥ २४ ॥

23 *a* F दुर्योधनस्य तु । H च for तु ।
*b* M अद्य for अथ ।
*c* HK अतीव कामः LM ऽव्यतीतकामः D चावमर्षी L सोऽप्यमर्षी । BE अमर्षीद् C अमार्षि ।
*d* A विनिश्चित्य for विनिःश्वस्य ।

24 *a* BEM तं for तत् । A सार्यं CG सर्वं for सर्वे । All हितमीक्ष्य for हि समीक्ष्य ।
*b* F परिवर्धमानम् for च विवधमानम् ।
*c* Edns CGHL मनः M मतीन् for मतिं । Edns CGHL निदध्युः for विदध्युः ।
*d* Edns ABCDEFLN परिरक्ष्यमाणाः ।

---

23 *a* वैशंपायन उवाच omitted in SA. SK निशम्य वाक्यं for तु तन्निशम्य ।
*b* SA[1] वचोक्तम् SG वचो यत् SK प्रशम्य for वचोऽथ ।
*c* SA[1] अतीतकामः SA[2] अपेतकामः SG अप्रीतिकामः । ST निर्जितोसौ for सोत्यऽमर्षी ।

24 *a* SA[2], ST हि समीक्ष्य SG परामीक्ष्य SK हि निशम्य ।
*b* SK, SA निदध्युः for विदध्युः ।
*d* S. cl. तं for ते ।

तान्प्रस्थितान्प्रीतमनाः स पार्थः ।
धनंजयः प्रेक्ष्य कुरुप्रवीरान् ॥
आभाषमाणोऽनुययौ मुहूर्तम् ।
संपूजयंस्तत्र गुरून्महात्मा ॥ २५ ॥

पितामहं शान्तनवं च वृद्धम् ।
द्रोणं गुरुं च प्रणिपत्य मूर्ध्ना ॥
द्रौणिं कृपं चैव कुरूंश्च सर्वान् ।
शरैर्विचित्रैरभिवाद्य वीरः ॥ २६ ॥

25 *a* N प्रीतिमनाः । K च पार्थः ।
*c* Edns CDGN अभाषमाणः H आभाष्यमाणः । Edns CG अनुनयं for अनुययौ ।
*d* Edns CG वचोब्रवीत्सपरिह्रत्य भूयः A संपूजयंस्तत्र कुरुप्रवीरान् । BDEFHN कुरून् for गुरून् । K वाचोब्रवीत्संपरिगृह्य भूयः M तान्पूजयन् for संपूजयन् ।

26 *a* BE स for च । F omits वृद्ध ।
*b* BE प्रतिगृह्य D प्रतिवंद्य N प्रतिपूज्य ।
*c* K गुरूंश्च A कुरश्च for कुरूंश्च । Edns BDEGKMN मान्यान् for सर्वान् ।
*d* M अचित्रैः for विचित्रैः । Edns BCDEGHKN चैव M वै च for वीरः ।
L reads for this verse.
पितामहं शान्तनवं च वृद्धम् । द्वाभ्यां शराभ्यामभिवाद्य पार्थः ॥
द्रोणं गुरुं तं प्रणिपत्य मूर्ध्ना । द्रौणिं कृपं चैव कुरूंश्च सर्वान् ॥

---

25 *a* SK समर्थः for स पार्थः ।
*b* SG, ST सर्व for प्रेक्ष्य । SK सर्वकुरुप्रवीरः ।
*c* SK, ST, SA आमंत्र्य वीरः for आभाषमाणः । SA² प्रययौ for अनुययौ । SG आमंत्र्य वीरान्प्रययौ for आभाषमाणोऽनुययौ ।
*d* S. cl. गाण्डीवघोषेण विनद्य लोकम् ( SA विनाद्य ST विनुद्य for विनद्य )

26 *a* S. cl महात्मा for च वृद्धम् ।
*b* S. cl. द्वाभ्यां शराभ्यामभिवाद्य वीरः ।
*c* S. cl द्रोणं for द्रौणिं । SK, ST, SG मान्यान् for सर्वान् ।
*d* SK च सर्वान् for विचित्रैः । SA संख्ये SK, ST संख्ये SG संधे for वीरः ।

दुर्योधनस्योत्तमरत्नचित्रम् ।
चिच्छेद पार्थो मुकुटं शरेण ॥
आमन्त्र्य वीरांश्च तथैव मान्यान् ।
गाण्डीवघोषेण विनाद्य लोकान् ॥ २७ ॥
स देवदत्तं सहसा विनाद्य ।
विदारयित्वा द्विषतां मनांसि ॥
ध्वजेन सर्वानभिभूय शत्रून् ।
स हेमतालेन विराजमानः ॥ २८ ॥
दृष्ट्वा प्रयातांश्च कुरून्किरीटी ।
हृष्टोऽब्रवीत्तत्र स मत्स्यपुत्रम् ॥
निवर्तयाश्वान्पशवो जितास्ते ।
याताः परे याहि पुरं प्रहृष्टः ॥ २९ ॥

27 *c* F तथैवमन्यान् ।
*d* M विनाद्यलोकान् ।
28 *a* C विनद्य ।
*b* Edns BCDEGHKLMN विद्रार्य वीरः for विदारयित्वा ।
*c* H ध्वनेन for ध्वजेन ।
*d* Edn² ACFG हेममालेन Edn¹ DHK¹LMN हेमजालेन । K² स हेमजालेन विराजमानः ।
29 *a* Edns CGH तु D सु for च । K महृष्टः for किरीटी ।
*b* K वाचः for हृष्टः । H तत्र च ।
*c* Edns BCDEGHKLM आवर्तय N मावर्तय for निवर्तय ।
*d* K पुरे for पुरं । CH मविष्टः D महृष्टः ।

---

27 *b* SK, SG, SA शरौघैः । S. cl. मकुट for मुकुटं ।
*c* ST चार्यान् for मान्यान् ।
*d* ST शब्देन for घोषेण । ST विनाद्यमानः for विनाद्य लोकान् । S. cl. except ST omits *d* here but reads *d* after v. 25. *c*.
28 *b* ST संतोषयित्वा सुहृदां मनांसि ।
*c* ST ध्यानेन for ध्वजेन ।
*d* ST हेमजालेन ।
S. cl. except ST omit the whole verse.
29 *a* ST अस्यातान्स for प्रयातांश्च ।
*b* ST विराटपुत्रम् for स मत्स्यपुत्रम् । S. cl. except ST omits *a*, *b*.
*c* SK, SA, SG आवर्तय for निवर्तय । SG जिगाद्दे for जितास्ते ।
*d* SK, SA,² SG नेहि SA¹ नेहि for याहि । SG, SA मविष्टः for महृष्टः । ST यथा पुरे याहि पुरं प्रवेष्टुम् ।

तथार्जुनं नागमिव प्रभिन्नम् ।
उत्सृज्य शत्रून्परिवर्तमानम् ॥
विराटराष्ट्राभिमुखं प्रयान्तम् ।
नाशक्नुवस्ते कुरवोऽभिगन्तुम् ॥ ३० ॥
ततो महामेघमिवातपान्ते ।
विद्राव्य पार्थोऽथ कुरुप्रवीरान् ॥
तं मत्स्यपुत्रं द्विषतां निहन्ता ।
वचोऽब्रवीत्संपरिरभ्य भूयः ॥ ३१ ॥

30 *a* Edns ABCEGKLMN ततः for तथा । F नागइव ।
*b* Edns ACGKLMN विनिवर्त्यमानम् BE विनिवर्तमानम् । KL शत्रुम् ।
*c* N विराटराज्याभिमुखं ।
*d* Edns CGLMN तं for ते । A नाशक्नुवन्तः । Edns ABCEGKLMN अभियातुम् । DH omit this v. This verse appears in Edns ABCE GN as verse 7 of the next Adh. but in FKLM it comes after v. 29. Similarly the following vv. upto 38 appear as vv. 8–15 of the next Adh. in Edns and MSS. except F.

31 *a* Edns GK स तद् L तान् others तम् for महा । AHN सिंहम् D सिंहः for मघम् । Edns ABCEGHKMN आपतन्तम् D प्रभूतं for आतपान्ते ।
*b* Edns CGM कुरुमेघसैन्यम् ABEHN कुरुसैन्यवृन्दम् D कुरुसैन्यमुग्रं K युधि-शत्रुसैन्यम् for अथकुरुप्रवीरान् ।
*c* Edns CGM मत्स्यस्य° for तं मत्स्य° । M च वाचा for निहन्ता ।
*d* M omits वचः । ADHK संपरिगृह्य । BCEG संपरिष्वज्य ।

---

30 *a* S. cl. except SA[1] and ST धनंजयं for तथार्जुनम् ।
*b* SK, SA[2] विजित्य SG, SA[1] विसृज्य for उत्सृज्य । SA[2] परिवर्त्यमानम् । SA[1] धनंजयो नाग इव प्रभिन्नः ॥ विसृज्य शत्रून्परिवर्त्यमानः ।
*c* S. cl. except ST गास्ता विजित्याभिमुखं प्रयान्तम् ।
*d* SK न शक्नुवन्तः कुरवः प्रयातुः SA[2] न शक्नुवन्तः कुरवः प्रयातुम् । SG वै for ते । SG अभिसर्तुम् for अभिगन्तुम् । omitted in SA,[1] ST.

31 *a* SA यातः SK, ST, SG यातः for ततः । SK, SG महामेघः ST यथामेघः SA[1] महामेघम् SA[2] यथामेघम् ।
*b* SK, SG, ST कुरुसैन्यमेकः SA[1] कुरुसैन्यमेकम् SA[2] कुरुसैन्यमेघम् for अथकुरुप्रवीरान् ।
*c* SK, SG, SA मात्स्यपुत्रम् ।
*d* S. cl. संपरिगृह्य राजन् for संपरिरभ्य भूयः ।
S. cl. begins a new adh here.

पितुः सकाशे तव तात सर्वे ।
वसन्ति पार्था विदितं तवेदम् ॥
तान्मा प्रशंसेर्नगरं प्रविश्य ।
भीतः प्रणश्येत स मत्स्यराजः ॥ ३२ ॥
मया जिता सा ध्वजिनी कुरूणाम् ।
मया च गावो विजिता द्विपद्भ्यः ॥
एवं च राज्ञो नगरं प्रविश्य ।
त्वमात्मना कर्म कृतं वदेथाः ॥ ३३ ॥

32 *a* M तव नाम ।
*b* Edn ABDEN विदिताः L नगरे for विदितं । Edns CGH तवैव BDEN तयैव A तयैव ते KM तवैतत् L तत्राभिन् for तवेदम् ।
*c* A तस्मात् BEK न मां D तन्मां F न तान् HL तन्मा for तान्मा । AD न शंसेः ।
*d* Edns CN प्रणश्येद्धि A प्रयास्येत ।

33 *a* H हता for जिता ।
*b* K कुरुभ्यः for द्विपद्भ्यः ।
*c* Edns CG पितुः सकाशं A सनाथनगरम् BDEHKN शीघ्रस्तु काम M एवं स राजा for एवं च राज्ञः ।
*d* Edns CDGK त्वमात्मनः H मयात्मना । Edns ABCDEGKMN मयि for वदेथाः ।

---

32 *b* SA[1] वदन्ति for वसन्ति । SG वीराः for पार्थाः । SG, SA विदिताः for विदितम् । S. cl. त्वयेति for तवेदम् ।
*c* SG, SA तन्मा न शंसीः ST त्वं मां प्रशंसीः SK तान्मा स्म शंसीः for तान्मा प्रशंसेः ।
*d* ST भीतः प्रणश्येत स मत्स्यराजः SG भीतः प्रणश्येत च मत्स्यराजे SK, SA भीतः प्रणश्येत्स च मत्स्यराजः ।

33 *a* SA[1] परेषाम् for कुरूणाम् ।
*b* SK हि for च । SA[1] मया गावो विजिता वै द्विषद्भ्यः ।
*d* ST त्वया for मया । SG त्वन्मना for त्वमात्मना S. cl. मयीति for वदेथाः ।

उत्तर उवाच ।

यत्ते कृतं कर्म न पारणीयम्
तत्कर्म कर्तुं मम नास्ति शक्तिः ।
न त्वां प्रवक्ष्यामि पितुः सकाशे
यावन्न वै वक्ष्यसि सव्यसाचिन् ॥ ३४ ॥

वैशंपायन उवाच ।

स शत्रुसेनामवजित्य जिष्णुः
आच्छिद्य सर्वं च धनं कुरुभ्यः ।
श्मशानमागत्य पुनः शमीं ताम्
अभ्येत्य तस्थौ शरविक्षताङ्गः ॥ ३५ ॥

34 *a* H अपारणीयम् ।
*d* Edns FGHKLN यावन्न मां D यावन्नं स० BE पार्थिवास्येप D मे प्रवीर for सव्यसाचिन् ।

35 *a* BE अभिजित्य DN अविजित्य । H सशत्रुसेनास्तु विजित्य जिष्णुना M पार्थः for जिष्णुः ।
*b* D विजित्य K आक्षिप्य for आच्छिद्य । FH कुरूणां ।
*c* ABEKM आगम्य ।
*d* Edns ABCDEGKMN शरविक्षतांगः HL शरविक्षितांगः ।

---

34 *a* S. cl. वारणीयम् for पारणीयम् ।
*b* SA[1] मनसास्ति for मम नास्ति ।
*c* SA त्वा for त्वाम् ।
*d* S. cl. माम् for वै । SG सव्यसाची ।

35 *a* SG omits वैशंपायन उवाच । SG तं for स. । S. cl. तरसा विजित्य for अवजित्य जिष्णुः ।
*b* SA[2] चाच्छिद्य for आच्छिद्य । SK तु for च । S. cl. कुरूणां ।
*c* SK, ST, SG आगम्य for आगत्य ।
*d* S. cl. शरविक्षताङ्गः ।

ततः स वह्निप्रतिमो महाकपिः।
सहैव भूतैर्दिवमुत्पपात॥
तथैव मायाः सकलाश्च ता वै।
ध्वजं च सिंहं युयुजे रथे च॥ ३६॥

निधाय तच्चायुधमाजिवर्धनम्।
कुरूत्तमानामिषुधीर्ध्वजांश्च॥
प्रायात्स मत्स्यो नगरं प्रहृष्टः।
किरीटिना सारथिना महात्मा॥ ३७॥

36 *a* M महाकपि।

*c* Edns CDGN विहिता A वितता BEH अन्तर्हिताः for सकला। Edns ABCDEGHN तमुव M च भागे for च ता वै।

*d* Edns CGHKN च सिंह M तु सिंह, for च सिंहं। Edns and All MSS except F रथे पुन. for रथे च।

37 *a* Edns ABCEG विधाय। Edn[1] CHL तत्र for तच्च। BEK आजिवर्धनः F आयुवर्धन।

*b* L शस्त्रोत्तम तान् for कुरूत्तमानाम्। KL इषुधीन्। Edns CG शरांस्तथा ABE HN ध्वजांस्तथा for ध्वजांश्च।

*c* K मात्स्य। A प्रविश. for प्रहृष्टः। D प्रायान्म मत्स्य पुनः प्रहृष्टः।

*d* Edns CDGK महामना for महात्मा।

H M omits the whole verse.

---

36 *b* SA[1] दिवा उत्पपात।

*c* SG तथा हि ST तथापि SK तथा च for तथैव। SK, SA[1] माया विहिता बभूव सा SA[2] मायाविहिता बभूव सा SG, ST माया विहिता बभूव for माया सकलाश्च ता वै।

*d* SG सहस्र for सिंह। S. cl. पुनः for च।

37 *a* SA[1] विधाय for निधाय। S cl आजिवर्धनः for आजिवर्धनम्।

*b* SA इषुधी SK इषुधीन् for इषुधीः। SK, SA, SG तथा for च।

*c* S. cl. मात्स्य। S cl. प्रहृष्य for प्रहृष्टः।

*d* S1 महात्मना for महात्मा।

पार्थश्च कृत्वा परमार्यकर्म ।
निहत्य शत्रून्द्विषतां निहन्ता ॥
विधाय वेषं च तथैव वेणीम् ।
जग्राह रश्मीन्पुनरुत्तरस्य ॥ ३८ ॥

देवास्तु दृष्ट्वा महदद्भुतं तत् ।
युद्धं कुरूणां सह फाल्गुनेन ॥
जग्मुर्यथास्वं भवनं प्रतीताः ।
पार्थस्य कर्माणि विचिन्तयन्तः ॥ ३९ ॥

इति विराटपर्वणि गोहरणे कौरवपराजयो नाम
एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

38 *a* Edns CFGL तु for च । ABDEGHKL परमार्थकर्म ।
*b* L विजित्य for निहत्य ।
M omits *a*, *b*.
*c* Edns CG चकार HM निधाय for विधाय । Edns ABCDEHKN वेणीं च G वेणिं च for वेषं च । Edns ABCDEGHKN भूयः for वेणीम् ।
*d* ABE रश्मिम् ।

39 *a* D हृष्टास्तु K देवाश्च । M सदृश्य दृष्टाः for देवास्तु दृष्ट्वा । KL च for तत् ।
*c* BE तथा स्व LM तथा ते for यथास्वं । L भुवनं ।
*d* L विचिन्त्यमानाः । BE कर्म प्रतिचिन्तयन्तः ।
AF omit this verse. After this KLM repeat vv. 29 & 30.

---

38 *a* SA आर्यकर्मा ।
*c* S. cl. भूयश्च for वेषम् । SK वेषम् for वेणाम् ।

39 S. cl. omits this verse.

## ॥ द्विषष्टितमोऽध्यायः ॥

वैशंपायन उवाच ।

ततो विजित्य संग्रामे कुरून्गोवृषभेक्षणः ।
स आनयामास तदा विराटस्य धनं महत् ॥ १ ॥
गतेषु तेषु सर्वेषु धार्तराष्ट्रेषु सर्वशः ।
वनान्निष्क्रम्य गहनाद्बहवः कुरुसैनिकाः ॥ २ ॥
भयात्संत्रस्तमनसः समाजग्मुस्ततस्ततः ।
मुक्तकेशा व्यदृश्यन्त दंशिताः प्रांजलि स्थिताः ॥ ३ ॥
क्षुत्पिपासापरिश्रान्ता विदेशस्था विचेतसः ।
ऊचुः प्रणम्य संभ्रान्ताः पार्थ किं करवामहे ॥ ४ ॥

LXII. 1 *a* DN विजित्य चैव संग्रामे । Edns CDFG सः KN तान् for गो° ।
*b* Edns and MSS except M समानयामास । K महद्धनम् ।
2 *a* A स तेषु for गतेषु । Edns BCEK च प्रभग्नेषु DHMN तेषु भग्नेषु for तेषु सर्वेषु । Edn² CG सर्वतः ।
*b* N निर्गम्य for निष्क्रम्य ।
3 *a* M भयाद् for भयात् । H भयसंत्रस्तमानाश्च । DH इतस्ततः ।
*b* Edns CG व्यदृश्यंत BE अदृश्यंत । N मुक्तकेशावदृश्यंत । Edns BCEGH KM स्थिताः प्रांजलयस्तदा DN स्थिताः प्रांजलयस्तथा ।
4 *a* BE क्षुत्पिपासार्दिताः श्रांताः ।
*b* LM ऊचुः प्रांजलयः सर्वे । Edn¹ BEHMN पार्थ । Edns BCEGMN करवाम ते ।

---

LXII 1 *a* SK कुरुगोवृषभेक्षणः ।
*b* SK, SG, SA समानयामास ST स चानयामास ।
2 *a* SK, SG, ST, SA² गतेषु च प्रभग्नेषु SA¹ भग्नेषु for सर्वेषु ।
3 *a* SA¹ इतस्ततः ।
*b* S. cl. अदृश्यंत । S. cl. स्थिताः प्रांजलयस्तदा ( SG तथा ) for दंशिताः प्रांजलि-स्थिताः ।
4 *b* SK, SG, SA ऊचुः प्रांजलयः सर्वे ST ऊचुः प्रांजलयः पार्थ । SG, ST, SA ब्रूहि for पार्थ ।

अर्जुन उवाच ।

स्वस्ति व्रजत भद्रं वो न भेतव्यं कथंचन ।
नाहमार्ताञ्जिघांसामि भृशमाश्वासयामि वः ॥ ५ ॥

वैशंपायन उवाच ।

तस्य तामभयां वाचं श्रुत्वा योधाः समागताः ।
आयुःकीर्तियशोदाभिरांशीर्भिस्तमनन्दयन् ॥ ६ ॥
ततो निवृत्ताः कुरवः प्रभग्ना बलमास्थिताः ।
पन्थानमुपसंगम्य फाल्गुनो वाक्यमब्रवीत् ॥ ७ ॥
राजपुत्र प्रत्यवेक्ष समानीतानि सर्वशः ।
गोकुलानि महाबाहो वीर गोपालकैः सह ॥ ८ ॥

5 *a* Edns CG स्वस्ति व्रजत मा भद्रं A स्वस्ति व्रजत भवता K भवता व्रजतः स्वस्ति KL स्वस्था व्रजत भद्रं वो । L कदाचन ।
*b* E च for वः ।
6 *a* H ह्यभयां for अभयाम् । M वाचा । K सहसा for समागताः ।
*b* H आयुःकीर्तियशोविद्याः BE आयुःकीर्तियशःश्रीभिः । Edns CGK तमाशीर्भिः । A अनोदयन् K अपूजयन् ( K² आनन्दयन् ) L आशीर्भिरभिनंदयन् M तेजसा मभिनंदयन् N आशीर्भिः समवादयन् ।
7 *a* Edns and MSS. add वैशंपायन उवाच before this K यतो for ततो । Edns CGN वशं A जवं HLM भीन K रथं for बलम् । L आश्रिताः । D प्रभग्नाः समागताः ।
8 *a* D राजपुत्रं प्रत्यवेक्ष्य । ABE प्रत्यवेक्ष्य ।
*b* D गोधनानि M कुलानि च । M गोपालिकैः ।

---

5 *a* ST स्वस्ति व्रजंतु भद्रं वः । ST कदाचन for कथंचन ।
*b* ST जाहस्यामि for जिघांसामि । SK, SG, SA omit the whole v.
6 *a* SK, SG omit वैशंपायन उवाच । SA योधाः ।
*b* SK, SG, SA °यशोभिस्ते for °यशोदाभिः । SA, SG, ST तमाशीर्भिरनंदयन् SK तमाशीर्भिर्वर्धयन् for आशीर्भिस्तमनन्दयन् ।
7 *a* ST interchanges *a* & *b*. S. cl. शम for बलम् । SG ससैन्याः निवृत्ताः कुरवः प्रभग्नाः सिंहार्दिता नाग इवाभवंस्तदा ।
*b* S. cl. फल्गुनः ।
8 *a* S. cl. प्रपश्य for प्रत्यवेक्ष । SK धनानीमानि for समा &c.
*b* ST महांति for महाबाहो ।

ततोऽपराह्ने यास्यावो विराटनगरं प्रति ।
आश्वास्य पाययित्वा च परिप्लाव्य च वाजिनः ॥ ९ ॥
गच्छन्तु त्वरिताश्चैव गोपालाः प्रेरितास्त्वया ।
नगरे प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ १० ॥

वैशंपायन उवाच ।

अथोत्तरस्त्वरमाणस्तु दूतान्
आज्ञापयद्वचनात्फाल्गुनस्य ।
आचक्षध्वं विजयं पार्थिवस्य
भग्नाः परे तेऽविजिताश्च गावः ॥ ११ ॥

---

9 *a* D ह्नः for ततः । All except FN यास्यामः ।
*b* DN आशुः M तु for च । F आश्वासयित्वा च श्रीमान् । D मातृप्लाव्य ।

10 *a* Edns CGH चेमे D तत्र K चैव for चैव । Edns BCDEGHKLMN प्रेषिता A प्रहिता for प्रेरिता ।
*b* BEHKL नगरं Edn आख्यातुं N घोषयेत.

11 *a* Edns ABCDEFGHN ततः K च L अथ for तु ।
*b* ABDEGHKLMN अर्जुनस्य ।
*d* Edns BDEGHKLMN विजिताश्चापि C विजिताश्चैव ।

---

9 *b* SA¹ परिक्राम्य for परिप्लाव्य ।

10 *a* SK त्वरिता दूताः SG, ST, SA त्वरिता दूताः for त्वरिताश्चैव । S. el. प्रेषिताः for प्रेरिताः ।
*b* SA¹ आख्यातु for आख्यातुम् ।

11: S. el. reads for this verse—उत्तरस्त्वरमाणोथ दूतानाज्ञापयत्तदा । वचनाद्दुर्जनस्येव ( SK ह्य ) आचक्षध्वं जयं मम ॥

वैशंपायन उवाच।

इत्येवं तौ भारतमत्स्यवीरौ।
संमन्त्र्य संगम्य ततः शमीं ताम्॥
अभ्येत्य भूयो विजनेन हृष्टौ।
तुविष्ठमारोपयतां च भाण्डम्॥ १२॥

स ताञ्छत्रूनभिभूय सर्वान्।
आच्छिद्य सर्वं च धनं कुरुभ्यः॥
वैराटिरायान्नगरं प्रतीतः।
बृहन्नलासारथिरेकवीरः॥ १३॥

इति विराटपर्वणि गोहरणे उत्तरागमनं नाम
द्विषष्टितमोऽध्यायः॥ ६२॥

---

12 *a* Edns GHK omit वैशंपायन उवाच। D पांडवमत्स्यपुत्रौ N भारतमत्स्यपुत्रौ।
*b* D आमंत्र्य। D पुनः for ततः। BE शमी परेण। H समीयतां for संमंत्र्य &c.
*c* Edns BDEGHN विजयेन। Edns CG वृत्तौ A दृष्टौ N दृत्तौ। K विजने नृसिंहः for विजनेन हृष्टौ।
*d* Edns G उत्सृष्टम् A उत्सिष्टं BE तत्सृष्टं D सत्सृज्य H उच्छिष्टं K उत्सृष्टं for तुविष्ठम्। Edns AFGHK स्वभांडं। N द्रव्यं समारोपयतां सभांडं। CLM omit the whole verse with वैशंपायन उवाच।

13 *a* Edns BCDEGHKN स शत्रुसेनाम्। Edns BCDEGHKN सर्वाम् for सर्वान्।
*b* N आच्छाद्य।
*c* K वैराटिराजात्।
*d* Edns CG °सारथिना प्रवीरः M omits the whole verse.

---

12 *a* ST एव। ST भारतमध्यवीरौ।
*c* ST विजयेन। ST वृत्तौ for हृष्टौ। ST उत्सृष्टम् for तुविष्ठम्। Verse omitted in SK, SG, SA.

13 *a* ST तां शत्रुसेनाम् for सताञ्शत्रून्।
*c* ST आगात् for आयात्।
*d* ST °सारथिना प्रतीतः for °सारथिरेकवीरः। Verse omitted in SK, SG, SA.

## ॥ त्रिषष्टितमोऽध्यायः ॥

वैशंपायन उवाच ।

धनं चापि विजित्याजौ विराटो वाहिनीपतिः ।
प्राविशन्नगरं हृष्टश्चतुर्भिः पाण्डवैः सह ॥ १ ॥
जित्वा त्रिगर्तान्संग्रामे गाः समादाय केवलाः ।
अशोभत महाराज सह पार्थैः श्रिया वृतः ॥ २ ॥
तमासनगतं वीरं सुहृदां प्रीतिवर्धनम् ।
समाजग्मुः प्रकृतयः समन्ताद्ब्राह्मणैः सह ॥ ३ ॥

LXIII.1 *a* BE विजित्वा for विजित्य । Edns CG आशु for आजौ । L विनिर्जित्य for विजित्याजौ ।
*b* Edns CG निवेश H प्रविशन् K आविशत् M प्राविश्य for प्राविशत् ।

2 *a* Edns CGMN चैव for सम् । BE आदायैव for समादाय । Edns CG सर्वशः for केवलाः ।
*b* K महाबाहुः N महाराजः for महाराज । Edns CG सहपार्थः for सहपार्थैः । N समावृतः for श्रिया वृतः । The whole verse is omitted in D.

3 *a* F प्राविशन्नगरं वीरः A प्राविशन्नगरीं वीरम् for तमासनगतं वीरं । Edns CG हर्षवर्धनम् K प्रियवर्धनम् for प्रीतिवर्धनम् । v. omitted in D.
*b* Edns CG उपतस्थुः for समाजग्मुः । Edns ABCDEFGHL समस्ताः for समन्तात् । v. omitted in D.

---

LXIII 1 *a* SK, ST स विजित्य धनं चापि SG, SA[1] अवजित्य धनं चापि SA[2] विजित्य गोधनं चापि ।
*b* SA[1] सह पार्थैः SK, SG, ST, SA[2] सह पाण्डवैः ।

2 *a* S. cl. गाश्चैवानाय्य केवलाः ।
*b* SK, SA महाराजः SG महाराजा । ST पुनः for वृतः ।

3 *a* SK, ST, SA तमासनगतं वीरम् SG सिंहासनगतं वीरम् SG, SA सुहृदामर्थवर्द्धनं ST सुहृदानन्दवर्द्धनम् for सुहृदां प्रीतिवर्द्धनम् ।
*b* S. cl. उपतस्थुः for समाजग्मुः । SG समस्तैः ST समस्ताः for समन्तात् । SG वृतम् for सह ।

सभाजितः ससैन्यस्तु प्रतिनन्द्य च मत्स्यराट्।
विसर्जयामास तदा द्विजांश्च प्रकृतीस्तथा ॥ ४ ॥

ततः स राजा मत्स्यानां विराटो वाहिनीपतिः।
उत्तरं परिपप्रच्छ क्व यात इति चाब्रवीत् ॥ ५ ॥

आचख्युस्तस्य संहृष्टाः स्त्रियः कन्याश्च वेश्मनि।
अन्तःपुरचराश्चैव कुरुभिर्गोधनं हृतम् ॥ ६ ॥

विजेतुमभिसंरब्ध एक एवातिसाहसात्।
बृहन्नलासहायश्च निर्यातः पृथिवींजयः ॥ ७ ॥

4 *a* LM सभाजिनः for सभाजितः। G स्म सैन्यस्तु for स सैन्यस्तु। D अथ for तु। L प्रतिनिंद्य। Edns BCEFGHKLMN अथ D सः for च।
*b* H ब्राह्मणान् for द्विजांश्च। D प्रकृतीन् for प्रकृतीः। L तदा for तथा।

5 *a* Edns CG तथा for ततः।

6 *a* AF आचक्षुः। Edn[2] BE तत्सर्वम् C तत्सर्वां Edn[1] G तत्सर्वे for संहृष्टाः। A श्रियः for स्त्रियः। v. omitted in N. Edn[2] अचख्युः for आ०।
*b* F चैवम् L येन्ये for चैव।

7 *a* H तान्जेतुम् N विजेतुः for विजेतुम्।
*b* F तु for च। Edns G निर्गतः K प्रयातः for निर्यातः। BE पृथिवि।

---

4 *a* SK सभासद्भिः SG, SA[2] सताभिस्तु SA[1] सभाभिस्तु for ससैन्यस्तु। SK, SG, SA सः for च।
*b* SA[2] तदा for तथा।

5 *a* ST च for सः। SK, SA मात्स्यानाम् for मत्स्यानाम्।
*b* SK तत्र नापश्यत् for परिपप्रच्छ।

6 *a* SK तत्र for तस्य।
*b* SA[1] गुरुभिः for कुरुभिः।

7 *a* S. cl. तान् जेतुं for विजेतुम्। SG, ST, SA[2] अति° for अभि°। ST साहसः for साहसात्। SA[1] अभ्यसाध्यान् for अतिसाहसात्।

उपायातो ह्यतिरथान्द्रोणं शान्तनवं कृपम् ।
कर्णं दुर्योधनं चैव द्रोणपुत्रं च संगतान् ॥ ८ ॥

वैशंपायन उवाच ।

राजा विराटोऽथ भृशाभितप्तः ।
श्रुत्वा सुतं ह्येकरथेन यातम् ॥
बृहन्नडासारथिनाजिमध्ये ।
प्रोवाच सर्वानथ मन्त्रिमुख्यान् ॥ ९ ॥

8 *a* Edns ABFGN उपयातान् CDEL उपायातान् HKM उपयातः for उपायातः। Edns ABCDEFGN omit हि । K नरव्याघ्रान् L अतिरथः for अतिरथान् । Edns BCEG भाष्मम् for द्रोणम् ।
*b* Edns BCG द्रोणम् for चैव । C पुत्र तस्य for द्रोणपुत्रम् । Edns BCDEG HKLMN षड्थान् for संगतान् ।

9 *a* N तु for अथ । C भृशमभितप्त. for अथभृशाभितप्त ।
*c* Edns BCDEGKN बृहन्नलासारथिम् for बृहन्नडासारथिना । Edns BCDE GKLN आजिवर्धनम् H अरिमध्ये for आजिमध्ये । M omits the whole verse.

---

8 *a* S. cl. उपायातान् for उपायातो हि ।
*b* S. cl. षड्थान् for संगतान् ।
S. cl. omits वैश॰ उ॰ । after v. 8.

9 *a* S. cl. ततो विराट॰ परमाभितप्त for राजा विराट etc.
*b* S cl. पुत्र निशम्य for श्रुत्वा सुत हि । SA¹ एकरथेऽपयातं ।
*c* S cl. सारथिं for सारथिना । SK, ST अजिमर्दनम् SG आजिवर्द्धनम् for आजिमध्ये ।
*d* SA¹ अभिमन्त्र मुख्यान् ।
SG, ST, SA add कक उवाच before v. 10.

सर्वथा कुरवस्ते हि ये चान्ये वसुधाधिपाः ।
त्रिगर्तान्विजितान्श्रुत्वा न स्थास्यन्ति कदाचन ॥ १० ॥

तस्माद्गच्छन्तु मे योधा बलेन महता वृताः ।
उत्तरस्य परीप्सार्थं ये त्रिगर्तैरविक्षताः ॥ ११ ॥

हयांश्च नागांश्च रथांश्च शीघ्रम् ।
पदातिसंघांश्च युधि प्रवीरान् ॥

प्रस्थापयामास सुतस्य हेतोः ।
विचित्रशस्त्राभरणोपपन्नान् ॥ १२ ॥

10 *a* H वा for च। HKL read विराट उवाच before this.
*b* Edns CG निःसृतान् BDEHKLN निर्जितान् for विजितान्। H यास्यंति for स्थास्यंति। M omits the whole verse.

11 *a* BE ते for म। BE ये त्रिगर्तैरविक्षिताः for बलेन महतावृताः।
*b* G परीक्षार्थम् for परीप्सार्थम्। C यत् for ये। A अवेक्षिताः BE अनिर्जिताः DL अविक्षिताः for अविक्षताः M omits this whole verse.

12 *a* C reads रथ before नागान्। N सर्वान् for शीघ्रम्।
*b* Edns BCEGHK ततः L रणे for युधि।
*d* ABEH °वस्त्र° L °सर्व° for °शस्त्र°। M omits the whole verse.

---

10 *a* S. cl. चापि for ते हि।
*b* S. cl. निर्जितान् for विजितान्। SK, SG, ST, SA[1] कथंचन SA[2] इति मे मतिः for कदाचन।
SK reads this v. before v. 13. SG, ST, SA add राजोवाच before v. 11

11 *a* SA[2] इमे for मे।
*b* SA[1] परिप्सार्थं।
SK adds वैश० उ० before v. 12.

12 S. cl. पादित्रसंघांश्च ततः प्रभूतान् for पदातिसंघांश्च युधि प्रवीरान्।
SK, SA चित्र° SG, ST वस्त्र° for शस्त्र°।

वैशंपायन उवाच ।
अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः ।
विराटनगरं प्राप्य जयमावेदयंस्तयोः ॥ १३ ॥
राज्ञस्तत्सर्वमाचख्यौ मन्त्री विजयमुत्तमम् ।
पराजयं कुरूणां च उपायान्तं तथोत्तरम् ॥ १४ ॥
सर्वा विनिर्जिता गावः कुरवश्च पराजिताः ।
उत्तरः सह सूतेन कुशली ते परंतप ॥ १५ ॥
युधिष्ठिर उवाच ।
दिष्ट्या ते विजिता गावः कुरवश्च पराजिताः ।
दिष्ट्या ते जीवति सुतः श्रूयते पार्थिवर्षभ ॥ १६ ॥

13 *a* A omits वैशंपायन उवाच । Γ महता for प्रहिता ।
*b* N वैराट° for विराट° । M प्रे । for प्राप्य । Ldns CG] विजय समवेदयन् for जयमावेदयंस्तयो । K जयम् K² जयत् ।

14 *a* HKLM तत समाचख्यौ for तत्सर्वमाचख्यौ । Γ उत्तरम् for उत्तमम् ।
*b* N cl reads अपि after च । BE उपयान्तम् D उपायात H उपयातम् L व्यपय त M उपायातम् for उपायान्तम् । Γ रथ for तथा ।

15 *a* K सर्वास्ता विजिता for सर्वा विनिर्जिता ।
*b* BEΓ कुशलीति for कुशली ते । Ldns CGKM च for ते । Ldns BCLF GM परतप । omitted in L

16 *a* H कङ्क for युधिष्ठिर । L omits युधिष्ठिर उवाच । CDGM विनिर्जिता BE KN ते निर्जिता for ते विजिताः । Ldns CG पलायिता BE तथा जिताः for पराजिता । L दिष्ट्या ते विजय पुत्र श्रूयते च नराधिप । omitted in H
*b* BDEHKMN जीवित पुत्रः for जीवति सुतः । M श्रूयत म । AΓH पार्थिवपभ M नरपुगव for पार्थिवर्षभ ।

---

SG omits वैश० उ० ।

13 *b* S. cl प्रावेदयन् for आवेदयन् । SK, SG, SA तदा ST तथा for तयो ।

14 *a* S cl राजा for राज्ञस्तत् । SK समाचख्युः SG, ST SA तत आचख्यु for सर्वमाचख्यौ । SA मन्त्रान् for मन्त्री । SK, SG, ST मंत्रिभिर्जयमुत्तमम् ।
*b* SG ST, SA² अभ्युपायातम SA¹ श्वयायातम् for उपायान्तं । SG adds दूता ऊचुः before 15 1

15 *b* SK, SG, ST च SA² स for ते । SK, SA² परतप for परंतप । SA¹ omits this line
SK SG ST, SA² कङ्क for युधिष्ठिर । SA¹ omits युधि० उ० ।

16 *a* S cl निर्जिताः for विजिता ।
*b* SK स विजयी पुत्रः ST, SA जयति श्रूयते for ते जीवति सुत ।

नाद्भुतं त्विह मन्येऽहं यत्ते पुत्रोऽजयत्कुरून् ।
ध्रुव एव जयस्तस्य यस्य यन्ता बृहन्नला ॥ १७ ॥
वैशंपायन उवाच ।
ततो विराटो नृपतिः संप्रहृष्टतनूरुहः ।
पूजयामास दूतांस्तान्मन्त्रिणश्चाथ नोदयत् ॥ १८ ॥
राजमार्गाः क्रियन्तां मे पताकाभिरलंकृताः ।
पुष्पोपहारैरर्घ्यन्तां देवताश्चापि सर्वशः ॥ १९ ॥
कुमारयोधमुख्याश्च गणिकाश्च स्वलंकृताः ।
वादित्राणि च सर्वाणि प्रत्युद्यान्तु सुतं मम ॥ २० ॥

17 *a* Edns ABCDEGKLN एव for इह । H तव L चैव for त्विह । BE यः for यत् । BE जयेत् for अजयत् ।
*b* HKLM ध्रुवम् for ध्रुवः । M जयस्तु तस्य स्यात् for एव जयस्तस्य । DL यत्र for यस्य । HKLM बृहन्नडा ।

18 *a* F विराटनृपतिः । BE समाहृष्टतनूरुहः M स प्रहृष्टतनूरुहः N संहृष्टतनूरुहः ।
*b* Edns ABCEGHKLM आच्छादयित्वा D आश्वासयित्वा N प्रच्छादयित्वा for पूजयामास । N तान्सर्वान् for दूतांस्तान् । Edns मन्त्रिणम् । Edns ABCDEFGN सौम्यचोदयत् HK सौम्यभाषत L चाभ्यनोदयत् for चाथ नोदयत् ।

19 *a* D राजमार्गाश्च क्रियन्ताम् ।
*b* N पुष्पोपचारैः । Edns ABCDEGHN अर्च्यन्ताम् KLM पूज्यन्ताम् for अर्घ्यन्ताम् ।

20 *a* BCEFGHKLMN कुमाराः for कुमार । N गायकाः for गणिकाः । L चापि सर्वशः for च स्वलंकृताः ।

---

17 *a* ST तदहं मन्ये for त्विह मन्येऽहम् ।
*b* ST तत्र यत्र for तस्य यस्य ।

18 *a* SG omits वैशंपायन उवाच । ST विराटनृपतिः ।
*b* SK संतोषयित्वा SA, SG, ST आच्छादयित्वा for पूजयामास । SK, SA, ST धनरत्नैश्च सर्वशः SG धनै रत्नैश्च सर्वशः for मन्त्रिणश्चाथ नोदयत् ।

19 *a* SA, ST add विराट उवाच before this. SK, SA, ST वै for मे ।
*b* SA[2] पुष्पोपचारैः । S. cl. अर्च्यन्ताम् for अर्घ्यन्ताम् ।

20 *a* S. cl. कुमाराः for कुमार° ।
*b* ST तु for च । SA[1] प्रत्युद्गन्तुम् for प्रत्युद्यान्तु ।

घण्टामाणवकः शीघ्रं मत्तमारुह्य वारणम् ।
शृङ्गाटकेषु सर्वेषु आख्यातु विजयं मम ॥ २१ ॥
उत्तरा च कुमारीभिर्बह्वीभिरभिसंवृता ।
शृङ्गारवेषाभरणा प्रत्युद्यातु बृहन्नलाम् ॥ २२ ॥
श्रुत्वा वै तद्वचनं पार्थिवस्य ।
पुरःसराः स्वस्तिकपाणयश्च ॥
भेर्यश्च तूर्याणि च वारिजाश्च ।
वेषैः परार्घ्यैः प्रमदाः शुभाश्च ॥ २३ ॥

21 *a* Edns ABCEFGHK²N घण्टावान् मानव L घण्टामाणवका K घण्टापाण्वक for घंटामाणवक । LM मत्तानारुह्य वारणान् । DI वारुणम् for वारणम् ।
*b* BE धनुष्पथेषु for शृगाटकेषु । C आख्यातु L आख्यात for आख्यातु । Edn¹ समाख्यातु जय मम D समाख्यातु जय मम K घोषयतु जय मम for आख्यातु विजय मम ।
22 *a* N सर्वाभि for बह्वीभि । Edns CGHKL परिवारिता F अभिमश्रिता for अभिसंवृता ।
*b* Edn¹ वेश for वेष । B प्रत्युयातु DI प्रत्युयातु E प्रयुयात for प्रत्युयातु । Edns CGHKLM सुत मम ।
23 *a* Edns ACG read वैशंपायन उवाच before this Edns CG वेदम् BDE एतत् A चैतत् H एव ते K तु तत् L एतत्ते N तद्वेतत् for वै तत् । N नृपस्य ।
*b* Edns ACDGK सर्वे पुर F सव पुर LMN सर्व पुर H सर्व पौर for पुर सराः । Edns CG स्वस्तिकपाणिभूतम् । CH वारिजाश्च for वारिजाश्च ।
*d* Edn¹ वेशे F वने for वषे । C परार्घ्ये H परार्ध्ये M शराढ्यो N परार्द्धे Edn¹ परार्द्धे । M प्रमुदा for प्रमदा ।

---

21 *a* SG पणवकम् ST, SA पणवक SK पणवका for माणवकः । SK कुजरम् for वारणम् ।
*b* SA, ST समाख्यातु जय मम SG समाख्यातु जयं मम SK समाख्यान्तु जय मम
22 *a* S cl बह्वाभरणभूषिता for बह्वीभिरभिसंवृता ।
*b* SK, SA, ST सर्वा विनितसयामाम् SG सर्वा विदिनसपामाम् for शृगारवे षाभरणा ।
23 *a b* SK, SG, ST read श्रुत्वा तु वचन तस्य ( SA राज्ञः ) पार्थिवस्य महात्मनः । तथैव चक्रुः सहृष्टा पौराः स्वस्तिकपाणयः । for s. 23 *a b* but SG, ST, SA omit पार्थिवस्य महात्मन & तथैव चक्रुः संहृष्टा । ST adds वैशंपायन उवाच before this
*d* SA² वेणवाश्च for वारिजाश्च । SA¹ परार्घ्यः for परार्घ्यै । S cl. प्रमदाजनाश्च for प्रमदाः शुभाश्च ।

तस्मान्नारीं न निध्यायेत् तथा युक्तो विचक्षणः ।
after this comes our 31 *b*.
न नर्मसु हसेज्जातु गूढवृत्तिर्हि सा स्मृता ।
after this come our 33 *b*, 31 *a*.
न च तिर्यगवेक्षेत चतुर्भ्यां सम्यगाचरेत् ।
भ्रुकुटीं न च कुर्वीत न चांगुष्ठैर्लिखेन्महीम् ॥
न च गाढं विजृंभेत जातु राज्ञः समीपतः ।
न प्रशंसेन्न चासूयेत् प्रियेषु च हितेषु च ॥
स्तूयमानेषु वा तत्र दूष्यमाणेषु वा पुनः ।
अथ संदृश्यमानेषु प्रियेषु च हितेषु च ।
स्तूयमाणेषु वान्येषु वर्णयेन्नानृतं यथा ।
after this come our 23 *a*, v. 29, 30.
अप्रमत्तो हि राजानं रंजयेच्छीलवत्तया ।
उत्थानेन च मेधावी शौचेन विविधेन च ।
स्नानं च वस्त्रशुद्धिश्च शारीरं शौचमुच्यते ॥
आशंका च कृतार्थेषु द्वितीयं शौचमुच्यते ।
राजा स्वामी विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ॥
एतैर्यः स्तूयते शब्दैः कस्तं नावेत्तुमर्हति ।
तस्मात् दक्षो यतामित्रः सत्यवादी जितेंद्रियः ॥
मेधावी स्मृतिमान्प्राज्ञः संश्रयीत नराधिपम् ।
कृतज्ञं प्रशमश्रुद्धं दृढभक्तिजितेन्द्रियम् ॥
बहुमानस्थितं स्थाने संश्रयीत नराधिपम् ।
एष वः समुदाचारः समादिष्टो यथाविधि ॥
यथार्थाः संप्रतप्यन्ते पार्थ राजोपजीविनाम् ॥
after this come our vv 47, 48, 49, 50.

वैशंपायन उवाच ।

ते तथेत्यब्रुवन्पार्थाः पितृकल्पं यशस्विनम् ।
प्रहृष्टाश्चाभिवाद्यैनमुदतिष्ठन्परंतपाः ॥
after this comes our v. 51
जुव्हन्प्रोवाच सो विप्र आशीर्वादं प्रयुज्य च ।
क्षेमाय राष्ट्रलाभाय पृथिव्या विजयाय च ॥
स्वद्रव्यप्रतिलाभाय शत्रूणां मर्दनाय च ।
स्वस्ति चास्तु दिवः पथा द्रक्ष्यामि पुनरागतान् ॥
इत्युक्ता ह्यभ्यनुज्ञो गुरुराजेन धीमता ।
after this come vv 52, 53, 54 in order

[ *SOUTHERN RECENSION.* ]

**After V. 4**

ST adds :—

गत्वा द्वारवतीं चैव कांपिल्यं च पुरोत्तमम् ।

**After V. 5a**

SK, ST add:—

अर्धरात्रे महात्मानो भिक्षादान्ब्राह्मणानपि ।

**After V. 5**

SK adds:—

वैशंपायन उवाच ।

एवं तेऽन्योन्यमामंत्र्य कर्माण्युक्त्वा पृथक् पृथक् ।
धौम्यमामंत्रयामासुः स च तान्मंत्रमब्रवीत् ॥

SK continues & SA, ST, SG add.—

तानन्वशात्स धर्मात्मा सर्वधर्मविशेषवित् ।
धौम्यः पुरोहितो राजन्पाण्डवान्पुरुषर्षभान् ॥

*b*. omitted in SL. ST reads instead--

यथावृत्तं रुपादेया राजास्विति पुरोहितः ।

**After V. 17**

S. cl. adds :—

पाण्डवाग्निरयं लोके सर्वशस्त्रमयो महान् ।
भर्ता गोप्ता च भूतानां राजा पुरुषविग्रहः ॥ १ ॥

सर्वात्मना वर्तमानं यथा दोषो न संस्पृशेत् ।
राजानमुपतिष्ठन्तं तस्य वृत्तं निबोधत ॥ २ ॥

क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत मेधावी कृशानपि कदाचन ॥ ३ ॥

एतत्त्रयं च पुरुषं निर्दहेदवमानितम् ।
राजा तस्माद्बुधैर्नित्यं पूजनीयः प्रयत्नतः ॥ ४ ॥

नातिवर्तेत मर्यादां पुरुषो राजसंमतः ।
व्यवहारं पुनर्लोके मर्यादां पण्डिता विदुः ॥ ५ ॥

न हि पुत्रं न नप्तारं न भ्रातरमरिन्दम ।
समतिक्रान्तमर्यादं पूजयन्ति नराधिपाः ॥ ६ ॥

गच्छन्नपि परां भूमिं भूमिपालनियोजितः ।
जात्यंध इव मन्येत मर्यादामनुचिंतयन् ॥ ७ ॥

भृत्यो द्वारं सदा पश्यन्न च राजसु विश्वसेत्।
after this comes our v. 11 *b*.
यत्रोपविष्टः संकल्पं नोपहन्याद्बलीयसः ॥ ८ ॥

नदासनं राजकुले ईप्सेत पुरुषो वसन्।
after this comes our v 13.
स्वभूमौ काममासीत तिष्ठेद्वा राजसन्निधौ ॥ ९ ॥

नत्वेवासनमन्यस्य प्रार्थयेत कदाचन।
परासनगतं ह्येनं परस्य परिचारकाः ॥ १० ॥

परिपद्यपकर्षेयुः परिहास्येत शत्रुभिः।
after this comes our v. 25 *a*.
अर्थार्थं हि यदा भृत्यो राजानमुपतिष्ठते ॥ ११ ॥

after this comes our v. 24 *a*.
तिष्ठेद्विनीतवद्राजन् न पुरस्तान्न पृष्ठतः।
after this comes our v. 24 *b*.
मातृगोत्रे स्वगोत्रे वा नाम्ना शीलेन वा पुनः ॥ १२ ॥

संग्रहार्थं मनुष्याणां नित्यमामाषिता भवेत्।
पूज्यमानोऽपि यो राज्ञा नरो न प्रतिपूजयेत् ॥ १३ ॥

नैनमाराधयेज्जातु शास्ता शिष्यानिवालसान्।
after this comes our v. 12 & then 42 *a*
उत्थाने नित्यसंकल्पो निस्तन्द्रीः संयतात्मवान् ॥ १४ ॥

परीतः क्षुत्पिपासाभ्यां विहाय परिदेवनम्।
after this come our v. 42 *b* & then v 40
उष्णे वा यदि वा शीते रात्रौ वा यदि वा दिवा ॥ १५ ॥

आदिष्टो न विकल्पेत यः स राजसु सिध्यति।
नैव प्राप्तोऽवमन्येत सदाऽमात्यो विशारदः ॥ १६ ॥

मानं प्राप्तो न हृष्येत न व्यथेच्च विमानितः।
after this comes our 39 *b* & then v. 33, and 39
दक्षः प्रदक्षिणो धीरः स राजवसतिं वसेत् ॥ १७ ॥

इतिहासपुराणज्ञः कुशलः सत्कथासु च।
वदान्यः सत्यवाक्योपि यो राजवसतिं वसेत् ॥ १८ ॥

after this comes our 26 *b*.
यं चासूयन्ति राजानः पुरुषं नो वदेच्च तम्।
after this comes our v. 41.
तुल्योपस्थितयोः पश्य मम चान्यस्य चोभयोः ॥ १९ ॥

अन्यं पुष्णाति मद्धीनमिति धीरो न मुह्यति ।
श्रेयांसं हि परित्यज्य वैद्यं कर्मणि कर्मणि ॥ २० ॥

पापीयांसं प्रकुर्वीरन् शीलमेषां तथाविधम् ।
after this comes our v. 16 *a*.
रक्षणं तु न सेवेत यो राजवसतिं वसेत् ॥ २१ ॥

यदा ह्यभिसमीक्षेत प्रेष्यं स्त्रीभिः समागतम् ।
बुद्धिः परिभवेत्तस्य राजा शंकेत वा पुनः ॥ २२ ॥

शङ्कितस्य पुनः स्त्रीषु कस्य भृत्यस्य भूमिपः ।
जीवितं साधु मन्येत प्रकृतिस्थो बलात्कृतः ॥ २३ ॥

after this comes our v. 31.

हर्षाद्धि मन्दः पुरुषः स्वैरं कुर्वीत वैकृतम् ।
तदस्यान्तःपुरे वृत्तमीक्षां कुर्वीत भूमिपः ॥ २४ ॥

अन्तःपुरगतं ह्येनं स्त्रियः क्लीबाश्च सर्वतः ।
वर्तमानं यथावच्च कुत्सयेयुरसंशयम् ॥ २५ ॥

तस्माद्गंभीरमात्मानं कृत्वा हर्षं नियम्य च ।
नित्यमन्तःपुरे राज्ञो न वृत्तं कीर्तयेद्बहिः ॥ २६ ॥

यथा हि सुमहामन्त्रो भिद्यमानो हरेत्सुखम् ।
एवमन्तःपुरे वृत्तं श्रूयमाणं बहिर्भवेत् ।
यातु वृत्तिरबाह्यानां बाह्यानामपि केवलम् ॥ २७ ॥

उभयेषां समस्तानां शृणु राजोपजीविनाम् ।
न स्त्रियो जातु मन्येत बाह्ये वाऽभ्यन्तरेऽपि वा ॥ २८ ॥

अनुजीविनां नरेन्द्रस्तु सृजेद्धि सुमहद्भयम् ।
मत्वास्य प्रियमात्मानं राजरत्नानि राजवत् ॥ २९ ॥

अराजा राजयोग्यानि नोपयुञ्जीत पण्डितः ।
अराजानं हि रत्नानि राजकान्तानि राजवत् ॥ ३० ॥

भुञ्जानं तं नरं राजा न तितिक्षेत जीवितम् ।
तस्मादव्यक्तभोगेन भोक्तव्यं भूतिमिच्छता ॥ ३१ ॥

तुल्यभोगं हि राजा तु भृत्यं कोपेन योजयेत् ।
न चापरयेन संप्रीतिं राज्ञः कुर्वीत केनचित् ॥ ३२ ॥

अधिक्षिप्तमनर्थं च द्वेष्यं च परिवर्जयेत् ।
एतां हि सेवमानस्य नरसीमां चतुर्विधाम् ॥ ३३ ॥

द्विधा विच्छिद्यते मूलं राजमूलोपसेविनः ।
एतांस्तु विपरीता या नरसीमा नराधमैः ॥ ३४ ॥

तथा कुर्वीत संसर्गं न विरोधं कथञ्चन ।
बन्धुभिश्च नरेन्द्रस्य बलवद्भिश्च मानवैः ।
साधु मन्येत संसर्गं न विरोधं कथञ्चन ॥ ३५ ॥

ताभ्यां तु नरसीमाभ्यां विरुद्धस्याल्पतेजसः ।
प्रथमं छिद्यते मूलं द्वितीयं जायते भयम् ॥ ३६ ॥

उद्धतानां च यो वेषः कुहकानां च यो भवेत् ।
राजवेषं च विस्पष्टं सेवमानो न वर्धते ।
इतराभ्यां तु वेषाभ्यां परिहास्येत बान्धवैः ॥ ३७ ॥

अपुंभिश्चैव पुंभिश्च स्त्रीभिः स्त्रीदर्शिभिर्नरैः ।
शक्ये सति न संभाषां जातु कुर्वीत कर्हिचित् ॥ ३८ ॥

प्रतिसंभाष्यमाणो हि त्रिभिरेतैरचेतनः ।
श्येनः पेशीमिवादत्ते पुरुषो भूतिमात्मनः ॥ ३९ ॥

ये च राज्ञाभिसत्कारं लभेरन्कारणादिव ।
तैश्च सामन्तदूतैश्च न संसज्येत कर्हिचित् ॥ ४० ॥

न चाभ्याचरितां भूमिमसंदिष्टो महीपतेः ।
उपसेवेत मेधावी यो राजवसतिं वसेत् ॥ ४१ ॥
after this come our v. 25*b*, 26*a*.
अर्थकामा च या नारी राजानं स्यादुपस्थिता ।
अनुजीवी तथायुक्तां निध्यायन् दुष्यते च सः ॥ ४२ ॥

तस्मान्नारीं न निध्यायेत् तथायुक्तां विचक्षणः ।
after this comes our v 30*b*.
न नर्मसु हसेज्जातु मूढवृत्तिर्हि सा स्मृता ॥ ४३ ॥

after this comes our v. 32*b*, 30*a*.
न च तिर्यगवेक्षेत चक्षुर्भ्यां सम्यगाचरेत् ।
भ्रुकुटिं न च कुर्वीत न चांगुष्ठैर्लिखेन्महीम् ॥ ४४ ॥

न च गाढं विजृम्भेत जातु राज्ञः समीपतः ।
न प्रशंसेन्नचासूयेत् प्रियेषु च हितेषु च ॥ ४५ ॥

स्तूयमानेषु वा तत्र दृष्यमानेषु वा पुनः ।
अथ संदृश्यमानेषु प्रियेषु च हितेषु च ॥ ४६ ॥

श्रूयमाणेषु वाक्येषु वर्णयेदमृतं यथा ।
after this comes our v 23*a*.
पुत्रो वा यदि वा भ्राता यद्यप्यात्मसमो भवेत् ॥ ४७ ॥

अप्रमत्तो हि राजानं रञ्जयेच्छीलसंपदा ।
उत्थानेन तु मेधावी शौचेन विविधेन च ॥ ४८ ॥
स्नानं हि वस्त्रशुद्धिश्च शारीरं शौचमुच्यते ।
असक्तिः प्राकृतार्थेषु द्वितीयं शौचमुच्यते ॥ ४९ ॥
राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एतैः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ ५० ॥
तस्माद्भक्त्या च युक्तः सन्सत्यवादी जितेन्द्रियः ।
मेधावी धृतिमान्प्राज्ञः संश्रयीत महीपतिम् ॥ ५१ ॥
कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम् ।
वर्धमानं स्थितं स्थाने संश्रयीत महीपतिम् ॥ ५२ ॥
एष वः समुदाचारः समुद्दिष्टो यथाविधि ।
यथार्थान्संप्रपत्स्यन्ते पार्थ राजोपजीविनः ॥ ५३ ॥

after this comes our v. 46.

**After V. 26**

SK adds —

असूयन्ति हि राजानो जनाननृतवादिनः ।
तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ॥

**After V. 46**

S cl adds :—

वैशंपायन उवाच ।

तं तथेत्यब्रुवन्पार्थाः पितृकल्पं यशस्विनम् ।
प्रहृष्टाश्चाभिवाद्यैनमुपातिष्ठन्परंतपाः ॥ १ ॥
तेषां प्रतिष्ठमानानां मन्त्रांश्च ब्राह्मणोऽजपत् ।
भवाय राज्यलाभाय वीर्याय विजयाय च ॥ २ ॥
ततोऽब्रवीदसौ विप्रो वाचमाशीः प्रयुज्य च ।
स्वद्रव्यप्रतिलाभाय शत्रूणां मर्दनाय च ॥ ३ ॥
स्वस्ति वोऽस्तु शिवः पन्था द्रक्ष्यामि पुनरागतान् ।
इत्युक्ता हृष्टमनसो गुरुणा तेन धीमता ॥ ४ ॥
युधिष्ठिरमुखाः सर्वे गन्तुं समुपचक्रमुः ।

S. cl. ends Adh. here & begins a new one as:—

वैशंपायन उवाच ।

here comes our 51 *a*

अभिवाद्य ततः सर्वे प्रस्थातुमुपचक्रमुः ॥

after this come our vv 47 48, 49, 50

ST adds ततः स विप्रः प्रोवाच आशीर्वादं प्रयुज्य च ।

## ADHYĀYA 5

### [ NORTHERN RECENSION

#### After V. 11

Edns BCEGN add —

गांडीवं च महद्गाढ लोके च विदितं नृणाम् ।
तच्चेदायुधमादाय गच्छामो नगरं वयम् ॥
क्षिप्रमस्मान् विजानीयुर्मनुष्या नात्र संशय. ॥

#### After V. 27

Edns CDGH add:—

वैशंपायन उवाच ।

अथान्वशासन्नकुलं कुन्तीपुत्रो युधिष्ठिरः ।
आरुहेमां शमीं वीर धनूंष्येतानि निक्षिप ॥

#### Before V 32

E adds:—

जया जातास्म वृद्धास्म इति वै व्याहरन्ति ते ।

#### After V 32a

A[2] adds —

माता विजन्मभूमिः स्यात् माता चास्त्रकला स्तुता ।
माता मातेति तदनु क्षत्रियाणां त्रिधा स्मृता ॥

### [ SOUTHERN RECENSION ]

#### After V. 2a

S cl adds —

ततः प्रत्यक्प्रयातास्ते संक्रामन्तो वनाद्वनम् ॥

#### Before V. 3b

S cl adds —

पल्वलेषु च रम्येषु नदीनां संगमेषु च ।
द्रुमान्नानाविधाकारान्नानाविधलताकुलान् ॥ [illegible] ॥

कुसुमाढ्यान्मनःकान्ताञ्शुभगन्धान्मनोरमान् ।
पार्था निरीक्षमाणाश्च तान्द्रुमान्पुष्पशालिनः ॥ २ ॥
जिघ्रन्तः पुष्पगन्धांश्च फलगन्धान्मनोरमान् ॥ ३ ॥

### After V. 3b

S. cl. adds:—

उषित्वा द्वादशसमा वने परपुरंजयाः ॥

### After V. 5a

S. cl. adds:—

तत्र धौम्यं महेष्वासाः पांडवेया व्यसर्जयन् ।
अग्निहोत्रं परिचरन् सोऽवुद्धोऽवसदाश्रमे ।
ततस्तेषु प्रयातेषु पांडवेषु महात्मसु ॥ १ ॥

SG, SA omit line 3.

### After V. 6

S. cl. adds:—

वृक्षांश्चोपवनोपेतान् ग्रामाणां नगरस्य च ।

### After V. 7

S. cl. adds:—

युधिष्ठिर उवाच ।

इमां कमलपत्राक्षीं द्रौपदीं माद्रिनंदन ।
मुहूर्तं परिगृह्यैनां बाहुभ्यां नकुल व्रज ॥ १ ॥
ततोऽदूरे विराटस्य नगरं भरतर्षभ ।
राजधान्यां निवत्स्यामः प्रमुक्तमिव नो वनम् ॥ २ ॥

नकुल उवाच ।

पूर्वाण्हे मृगयां कृत्वा मया विद्धा मृगा वने ।
अटवी च मया दूरं धृता मृगवधेप्सुना ॥ ३ ॥
विषमा ह्यतिदुर्गा च वेगवत्परिधावता ।
सोहं घर्माभितप्तो वै नैनामादातुमुत्सहे ॥ ४ ॥

युधिष्ठिर उवाच ।

सहदेव त्वमादाय मुहूर्तं द्रौपदीं नय ।
राजधान्यां निवत्स्यामः सुमुक्तमिव नो वनम् ॥ ५ ॥

सहदेव उवाच ।

अहमप्यस्मि तृषितः क्षुधया परिपीडितः ।
परिश्रांतश्च भद्रं ते नैनामादातुमुत्सहे ॥ ६ ॥

युधिष्ठिर उवाच ।
एहि वीर विशालाक्ष वीर सिंह इवार्जुन ।
इमां कमलपत्राक्षीं द्रौपदीं द्रुपदात्मजाम् ।
परिगृह्य मुहूर्तं त्वं बाहुभ्यां कुशलं व्रज ॥ ७ ॥
SL adds एहि वीर विशालाक्ष वीरसिंह महानल । before ।

### After V. 9

... ...s :—

वैशंपायन उवाच ।
गुरोर्वचनमाज्ञाय संप्रहृष्टो जितेंद्रियः ।
बाहुभ्यां परिगृह्याथ राजपुत्रीमनिंदिताम् ॥ १ ॥
प्रवव्राज महाबाहुरर्जुनः प्रियदर्शनाम् ।
जटिलो वल्कलधरः शरतूणीधनुर्धरः ॥ २ ॥
स्कन्धे कृत्वा वरारोहां बालामायतलोचनाम् ॥ ३ ॥
1 *b*. omitted in ST, SA[1], SL.

ST adds after 2 *b* :—

आक्षिप्य सहसा गच्छ शार्दूलः वृषलीमिव ।

### After V. 11

S. cl. adds:—

गाण्डीवं हि नरव्याघ्र त्रिषु लोकेषु विश्रुतम् ।
कथं नाविष्कृताः स्यामो धार्तराष्ट्रस्य मारिष ॥ १ ॥
यदीदं धनुरादाय चरेम सजने पुरे ।
क्षिप्रं नः प्रतिजानीयुर्मनुष्या नात्र संशयः ॥ २ ॥
SA[2] नाविष्करिष्यामो धार्तराष्ट्रस्य मार्गतः ।

### After V. 12

S. cl. adds :—

तस्मात्सर्वाणि शस्त्राणि प्रच्छाद्यान्यत्र यत्र वा ।
प्रविशेम पुरश्रेष्ठं तथा सम्यक्कृतं भवेत् ॥ १ ॥
वैशंपायन उवाच ।
अजातशत्रोर्वचनं श्रुत्वा चैव महायशाः ।
उवाच धर्मपुत्रं तमर्जुनः परवीरहा ॥ २ ॥

### After V. 15a

SK adds :—

विपुलाकीर्णशाखा च वायसैरुपसेविता ।
स्नेहानुबद्धां पश्यामि दुरारोहामिमां शमीम् ॥
ST reads *b* after °पापमंगुन below.

After V. 14a

S. cl. adds :—

धनुर्भिः पुरुषं कृत्वा चर्मकेशास्थिसंवृतम् ।
उद्बन्धमिव कृत्वा च धनुर्ज्यापाशसंवृतम् ॥ १ ॥
अस्यामायुधमासज्य गच्छाम नगरं वयम् ।
एवं परिहरिष्यन्ति मनुष्या वनचारिणः ।
अत्रैवं नावबुध्यन्ते मनुष्याः केचिदायुधम् ॥ २ ॥

After V. 17

S. cl. adds :—

तानि सर्वाणि संनह्य पंच पंचाचलोपमाः ।
आयुधानि कलापांश्च निस्त्रिंशानतुलप्रभान् ॥ १ ॥

SK, SG only continue :—

ततो युधिष्ठिरो राजा सहदेवमुवाच ह ।
आरुह्येमां शमीं वीर निधत्स्वेहायुधानि नः ॥ २ ॥
इति संदिश्य तं पार्थः पुनरेव धनंजयम् ।
अब्रवीदायुधानीह निधातुं भरतर्षभः ॥ ३ ॥

After V. 18

ST, SA[2] add:—

तत्स्रंसयित्वा ज्यापाशं विधातुं धनुराहरत् ।

After V. 20a

S. cl. adds :—

जृंभिते च धनुःश्रेष्ठे न्यासार्थं नृपसत्तमः ।
धर्मपुत्रो महातेजाःसर्वलोकवशंकरम् ॥ १ ॥
भुजंगभोगसदृशं मणिकांचनभूषितम् ।
वित्रासनं दानवानां राक्षसानां च नित्यशः ॥ २ ॥

After V. 23a

S. cl. adds:—

येन क्रोधवशाञ्जघ्ने पर्वते गंधमादने ।
दिव्यं सौगंधिकं पुष्पं येनार्जयत्स पांडवः ॥ १ ॥
त्रिगर्तान्येन संग्रामे जित्वा त्रैगर्तमानयत् ।
इंद्राशनिसमस्पर्शं वज्रहाटकभूषितम् ॥ २ ॥

ST adds after 1*a*:–

यक्षान् क्रोधामितान्राक्षान् राक्षसांश्चातिपूरुषान् ।

**After 23**

S. cl. adds :—

नकुलं पुनराहूय धर्मराजो युधिष्ठिरः ।
उवाच येन संग्रामे सर्वे शत्रून् जिघांससि ॥ १ ॥
सुराष्ट्रान् जितवान्येन शार्ङ्गगांडीवसन्निभम् ।
सुवर्णविकृतं सारमिंद्रायुधनिभं वरम् । ॥ २ ॥
तवानुरूपं सुकृतं चापमेतदलंकृतम् ॥
तद्विसंसयित्वा ज्यापाशं निधातुं धनुराहर ॥ ३ ॥

SA[1] reads these lines after those about सहदेव below.

SA[2] omits v. 2 *a* and 3 *a* and reads 2 *b* after our 24 *a*

**After V. 24a**

SA[2] adds:—

सुवर्ण विकृत &c ( 2 *b*, above ) and then—
तत्स्रंसयित्वा ज्यापाशं निधातुं धनुराहरत् ।

**After V. 25**

S. cl. adds:—

सहदेवं च संप्रेक्ष्य पुनर्धर्मसुतो ब्रवीत् ॥
कलिंगान्दाक्षिणात्यांश्च मागधांश्चाजिशोभनः ॥ १ ॥
येनैव शत्रून्समरे अथाक्षीररिमर्दन ॥
तत्स्रंसयित्वा ज्यापाशं निधातुं धनुराहर ॥ २ ॥

After the above vv. SA[1] adds:—

अजयद्दक्षिणामाशां धनुषा येन पाण्डवः ।
तदसज्यं धनुश्चक्रे नकुलो धनुरात्मनः ॥

**After V. 27**

SG, ST, SL. SA add.—

तानि सर्वाणि संनह्य वासोभिः परिवेष्ट्य च ।
आरोह यावदेतानि निधातुं विहगैर्वृताम् ॥
शमीमारुह्य महतीं निक्षिपायायुधानि नः ॥ १ ॥

वैशंपायन उवाच ।

स हि धर्मेण धर्मात्मा तदा घोरतरे वने ॥
अरणीपर्वणः काले वरो दत्तः परंतप ॥ २ ॥
तान्यायुधान्युपादाय कुंतीपुत्रो युधिष्ठिरः ॥
स वचः पुरुषव्याघ्रः प्रोवाच मधुराक्षरम् ॥ ३ ॥

SK. adds:—

अथाब्रवीद्धर्मराजः सहदेवं परंतपः ॥
आरुह्येमां शमीं वीर निधस्त्वेहायुधानि नः ॥ ४ ॥
इदं गोमृगमभ्याशे गतसत्वमचेतनं ।
एतदुत्कृत्य वै वीर धनूंषि परिवेष्टय ॥ ५ ॥
एवमुक्तो महाबाहुः सहदेवो यथोक्तवत् ।
शमीमारुह्य त्वरितो धनूंषि पर्यवेष्टयत् ॥ ६ ॥
शीतवातातपभयाद्दर्पत्राणाय दुर्जयः ।
तानि वीरो यथाजानन्निराबाधानि सर्वशः ॥ ७ ॥
पुनः पुनः सुसंवेष्ट्य कृत्वा सुकृतमावरं ।
( After this comes our v. 29 ).
ततः परमदूरस्थमुच्छवृत्तिकलेवरम् ॥ ८ ॥
प्रायोपवेशनाच्छुष्कं स्नायुचर्मास्थिसंयुतम् ॥
तच्चानीय धनुर्मध्ये निबबंधुश्च पांडवाः ॥ ९ ॥
उपायकुशलाः सर्वे प्रणदंतः समब्रुवन् ।
अस्य वद्धस्य दौर्गंध्यान्मनुष्या वनचारिणः ॥ १० ॥

After this comes our v. 30 *b*.

**After V. 30**

S. cl. adds:—

अथाब्रवीन्महाराजो धर्मात्मा स युधिष्ठिरः ।
रज्जुभिः सुकृतं प्राज्ञ विनिर्वध्नीहि पांडव ॥ १ ॥
यानि चात्र विशालानि रूढमूलानि मन्यसे ।
तेषामुपरि बध्नीहि इदं विप्रकलेवरम् ॥ २ ॥

वैशंपायन उवाच ।

तच्छ्रुत्वासहदेवस्तु पर्यबध्नत तच्छवम् ।
युधिष्ठिरः शुचिर्भूत्वा मनसाभिप्रणम्य च ॥ ३ ॥

युधिष्ठिर उवाच ।

ब्रह्माणमिंद्रं वरदं कुवेरं वरुणानिलौ ।
रुद्रं यमं च विष्णुं च सोमार्कौ धर्ममेव च ॥ ४ ॥
पृथिवीमंतरिक्षं च दिशश्चोपदिशस्तथा ।
वसूंश्च मरुतश्चैव ज्वलनं चातितेजसं ॥ ५ ॥
दिवाचरा रात्रिचराणि चापि यानीह भूतान्यनुकीर्तितानि ।
तेभ्यो नमस्कृत्य च सुव्रतेभ्यः प्रणम्य तेषां शरणं गतोऽहम् ॥ ६ ॥
सर्वायुधानीह महाबलानि न्यासं महादेवसमीपतो वै ।
न्यस्याम्यहं वायुसमीपतश्च वनस्पतीनां च सपर्वतानाम् ॥ ७ ॥

एष न्यासो मया दत्तः सोमसूर्यानिलाग्निके ।
मम पार्थस्य वा देयं पूर्णे वर्षे त्रयोदशे ॥ ८ ॥
नेदं भीमे प्रदातव्यमयं क्रुद्धो वृकोदरः ।
आमर्षान्नित्यसंक्रुद्धो धृतराष्ट्रसुतान्प्रति ।
अपूर्णकाले प्रहरेत् क्रोधसंजातमत्सरः ॥ ९ ॥
पुनः प्रवेशो नः स्यात्तु वनवासाय सर्वदा ।
समये परिपूर्णे तु धार्तराष्ट्रान्निहन्महे ॥ १० ॥
एष चार्थश्च धर्मश्च कामः कीर्तिरलं यशः ।
मदायत्तमिदं सर्वं जीवितं च न संशयः ॥ ११ ॥

वैशंपायन उवाच ।

सोवनीर्य महाप्राज्ञः पांडवः सत्यविक्रमः ।
भीमं कंठे परिष्वज्य चाब्रुवीय नराधिपः ॥ १२ ॥ ( not in SK. )
दैवतेभ्यो नमस्कृत्य शर्मी कृत्वा प्रदक्षिणम् ।
नगरं गन्तुमायाताः सर्वे ते भ्रातरः सह ॥ १३ ॥
After this come our v v. 33 & 31 *b*.

### After V. 31

S. cl adds:—

बहुकालपरीणामा मृत्योस्तु वशमीयुषी ।
न चाग्निसंस्कारमियं प्रापिता कुलधर्मतः ॥ १ ॥
यः समासाद्यते कश्चित्तस्मिन्देशे यदृच्छया ।
तमेवमूचुर्धर्मज्ञाः कुलधर्मो न ईदृशः ॥ २ ॥
विश्वासयंतस्ते दृष्ट्वा दिशः सर्वा व्यनादयन् ।
स्वर्गतेयमिहास्माकं जननी शोकविह्वला ।
वने विचरमाणानां लुब्धानां वनचारिणाम् ॥ ३ ॥

### After V. 32a

S. cl. adds:—

एवं ते सुकृतं कृत्वा समंतादवघुष्य च ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रावुभावपि ।
युधिष्ठिरश्च कृष्णा च राजपत्नी सुमध्यमा ॥ १ ॥
SA[2] interchanges *b* & *c*.

### After V. 35a

S. cl. adds:—

मत्स्यराज्ञो विराटस्य समीपं यन्तुमंजसा ।

**Before V. 35**

SA[1], SG, SK add:—

आपत्सु नामभिस्त्वेतैः समाव्हामः परस्परम् ।

* * * * *

After the end of the fifth Adhyāya in the present text, Edns and MSS as under, had a new ( their sixth ) Adhyāya containing the दुर्गास्तुति or स्तोत्र. The text of this Adhyāya–an interpolated one–( for which see Notes, p. 22 f. ) is given below.

( I )

Text according to Edns BCEGHKM, SK, ST.

वैशंपायन उवाच ।

विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।
अस्तुवन्मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ॥ १ ॥

यशोदागर्भसंभूतां नारायणवरप्रियाम् ।
नंदगोपकुले जातां मंगल्यां कुलवर्धिनीम् ॥ २ ॥

कंसविद्रावणकरीमसुराणां क्षयंकरीम् ।
शिलातटविनिक्षिप्तामाकाशं प्रति गामिनीम् ॥ ३ ॥

वासुदेवस्य भगिनीं दिव्यमाल्यविभूषिताम् ।
दिव्याम्बरधरां देवीं खड्गखेटकधारिणीम् ॥ ४ ॥

भारावतरणे पुण्ये ये स्मरंति सदा शिवाम् ।
तान्वै तारयते पापात्पङ्के गामिव दुर्बलाम् ॥ ५ ॥

स्तोतुं प्रचक्रमे भूयो विविधैः स्तोत्रसम्भवैः ।
आमन्त्र्य दर्शनाकांक्षी राजा देवीं सहानुजः ॥ ६ ॥

[ BEHM read a different text from here; vide II below; and Edns CGK, SK, ST continue ]:—

नमोऽस्तु वरदे कृष्णे कुमारि ब्रह्मचारिणि ।
बालार्कसदृशाकारे पूर्णचन्द्रनिभानने ॥ ७ ॥

चतुर्भुजे चतुर्वक्त्रे पीनश्रोणिपयोधरे ।
मयूरपिच्छवलये केयूरांगदधारिणि ।
भासि देवि यथा पद्मा नारायणपरिग्रहः ॥ ८ ॥

स्वरूपं ब्रह्मचर्यं च विशदं तव खेचरि ।
कृष्णच्छविसमा कृष्णा संकर्षणसमानना ॥ ९ ॥

बिभ्रती विपुलौ बाहू शक्रध्वजसमुच्छ्रयौ ।
पात्री च पंकजी घंटी स्त्री विशुद्धा च या भुवि ॥ १० ॥

पाशं धनुर्महाचक्रं विविधान्यायुधानि च ।
कुंडलाभ्यां सुपूर्णाभ्यां कर्णाभ्यां च विभूषिता ॥ ११ ॥
चंद्रविस्पर्धिना देवि मुखेन त्वं विराजसे ।
मुकुटेन विचित्रेण केशबंधेन शोभिना ॥ १२ ॥
भुजंगाभोगवासेन श्रोणिसूत्रेण राजता ।
विभ्राजसे चाबद्धेन भोगेनेवेह मंदरः ॥ १३ ॥
ध्वजेन शिखिपिच्छानामुच्छ्रितेन विराजसे ।
कौमारं व्रतमास्थाय त्रिदिवं पावितं त्वया ॥ १४ ॥
तेन त्वं स्तूयसे देवि त्रिदशैः पूज्यसेऽपि च ।
त्रैलोक्यरक्षणार्थाय महिषासुरनाशिनि ।
प्रसन्ना मे सुरश्रेष्ठे दयां कुरु शिवा भव ॥ १५ ॥
जया त्वं विजया चैव संग्रामे च जयप्रदा ।
ममापि विजयं देहि वरदा त्वं च सांप्रतम् ॥ १६ ॥
विंध्ये चैव नगश्रेष्ठे तव स्थानं हि शाश्वतम् ।
कालि कालि महाकालि सीधुमांसपशुप्रिये ॥ १७ ॥
कृतानुयात्रा भूतैस्त्वं वरदा कामचारिणि ।
भारावतारे ये च त्वां संस्मरिष्यन्ति मानवाः ॥ १८ ॥
प्रणमंति च ये त्वां हि प्रभाते तु नरा भुवि ।
न तेषां दुर्लभं किंचित् पुत्रतो धनतोऽपि वा ॥ १९ ॥
दुर्गात्तारयसे दुर्गे तत्त्वं दुर्गा स्मृता जनैः ।
कान्तारेष्ववसन्नानां मग्नानां च महार्णवे ॥ २० ॥
दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणाम् ।
जलप्रतरणे चैव कान्तारेष्वटवीषु च ॥ २१ ॥
ये स्मरन्ति महादेवि न च सीदन्ति ते नराः ।
त्वं कीर्तिः श्रीर्धृतिः सिद्धिर्ह्रीर्विद्या संततिर्मतिः ॥ २२ ॥
संध्या रात्रिः प्रभा निद्रा ज्योत्स्ना कांतिः क्षमा दया ।
नृणां च बंधनं मोहं पुत्रनाशं धनक्षयम् ॥ २३ ॥
व्याधिं मृत्युं भयं चैव पूजिता नाशयिष्यसि ।
[ ST reads text of II after this. ]
सोऽहं राज्यात्परिभ्रष्टः शरणं त्वां प्रपन्नवान् ॥ २४ ॥
प्रणतश्च यथा मूर्ध्ना तव देवि सुरेश्वरि ।
त्राहि मां पद्मपत्राक्षि सत्ये सत्या भवस्व नः ॥ २५ ॥
शरणं भव मे दुर्गे शरण्ये भक्तवत्सले ।
एवं स्तुता हि सा देवी दर्शयामास पाण्डवम् ॥ २६ ॥
उपगम्य तु राजानमिदं वचनमब्रवीत् ।

देव्युवाच ।

शृणु राजन्महाबाहो मदीयं वचनं प्रभो ॥ २७ ॥

भविष्यत्यचिरादेव संग्रामे विजयस्तव ।
मम प्रसादान्निर्जित्य हत्वा कौरववाहिनीम् ॥ २८ ॥

राज्यं निष्कंटकं कृत्वा भोक्ष्यसे मेदिनीं पुनः ।
[ Text from 24 *b* to 29 *a* is found in H also. ]
भ्रातृभिः सहितो राजन् प्रीतिं प्राप्स्यसि पुष्कलाम् ॥ २९ ॥

मत्प्रसादाच्च ते सौख्यमारोग्यं च भविष्यति ।
ये च संकीर्तयिष्यंति लोके विगतकल्मषाः ।
तेषां तुष्टा प्रदास्यामि राज्यमायुर्वपुः सुतम् ॥ ३० ॥

प्रवासे नगरे चापि संग्रामे शत्रुसंकटे ।
अटव्यां दुर्गकांतारे सागरे गहने गिरौ ॥ ३१ ॥

ये स्मरिष्यंति मां राजन् यथाहं भवता स्मृता ।
न तेषां दुर्लभं किंचित् अस्मिँल्लोके भविष्यति ॥ ३२ ॥

इदं स्तोत्रवरं भक्त्या शृणुयाद्वा पठेत वा ।
तस्य सर्वाणि कार्याणि सिद्धिं यास्यंति पाण्डवाः ॥ ३३ ॥

मत्प्रसादाच्च वः सर्वान् विराटनगरे स्थितान् ।
न प्रज्ञास्यंति कुरवो नरा वा तन्निवासिनः ॥ ३४ ॥

इत्युक्त्वा वरदा देवी युधिष्ठिरमरिंदमम् ।
रक्षां कृत्वा च पांडूनां तत्रैवान्तरधीयत ॥ ३५ ॥

1 *a*–omitted in BE. 1 *b*–omitted in ST, BEHM. V. 5 omitted in C, GK V. 6 omitted in BEH.

24 *a*–ST adds verses after this, agreeing with the text of BEHM (H).

26, and 27 *a* omitted in BEHM. BE read दर्शनं तु गता देवी दुर्गा त्रिभुवनेश्वरी। and H reads–दर्शनं च तदा दत्वा देवी वचनमब्रवीत् । for these lines.

27 ST omits भविष्यत्य° &c. from the following line, and along with H (BEHM) reads this line as:—शृणु वत्स महाबाहो संग्रामे विजयस्तव ।

28 *a*–omitted in BEHM.

*b*–GK क्षोभयिष्यसि समरे मयैनां कुरुवाहिनीम् for this line.

29 *a* H, ST निष्कंटकं कृतं राज्यं भोक्ष्यसे भ्रातृभिः सह ।
*b*–ST as in H omits this and reads instead different vv. of फलश्रुति (vide H)

## ( II )

Text of दुर्गास्तोत्र as in BEHM, after v. 6 in I above. ST reads this text after 24 *a*; and the vv. of फलश्रुति come after 29 *a*, so that 24 *a*–29 *b* is common to both I and II.

ॐ नमोस्तु वरदे देवि कुमारि प्रियदर्शने ।
बालभावा सुरेन्द्राणि घण्टालि विकटोत्कटे ॥ १ ॥

चतुर्भुजे चतुर्वक्त्रे चतुर्दंष्ट्रे महासुरि ।
महादेवि महेष्वासे जयन्ति विजयप्रदे ।
भूतरात्रि महारौद्रे चाष्टमीनवमीप्रिये ॥ २ ॥

कपिले पिंगले ज्वाले हिरण्यकनकप्रदे ।
शशिसूर्यमहाभागे विद्युज्ज्वलितकुंडले ॥ ३ ॥

मेरुविंध्यांतरगते अप्सरोगणसेविते ।
कालि कालि महाकालि खड्गखट्वांगधारिणि ॥ ४ ॥

त्रिशूलवरदे देवि त्रिनेत्रे भुवनेश्वरि ।
देवि देवाश्च पूजंति पूर्णमासीं चतुर्दशीं ॥ ५ ॥

[ II and ST have, after this vv. मोह राज्यपरिभ्रष्टः &c. 24 *b*, to निष्कटकं हतं राज्यं &c. v. 29 *a* agreeing with the text in I. Then follow vv. of फलश्रुति which read ]:—

इति गुह्यतमं स्तोत्रं पवित्रं पापनाशनं ।
कीर्तयिष्यन्ति ये लोका न तेषां विद्यते भयं ॥ १ ॥

संग्रामे शत्रुसंबाधे विवादे चौरसंकटे ।
प्रस्थाने वा प्रवेशे वा यःकश्चिन्मां स्मरिष्यति ॥ २ ॥

तस्याहं सर्वकार्याणि साधयिष्यामि पांडव ।
इत्युक्त्वा पांडवं देवी तत्रैवांतरधीयत ॥ ३ ॥

## ( III )

A has some vv. relating to this स्तोत्र, noted on the margin which read:—

तत्र ते वै महात्मानो दुर्गां भक्तिपुरस्कृतां ।
स्मरंतः पूजयांचक्रुः देवीं दुर्गविनाशिनीं ।
सा पूजिता तदा सर्वैः पांडवैश्च समाहिता ॥

प्रसन्ना याशृ ( यु ) धान्याथ स्मयंती वियति स्थिता ।
न भेतव्यं महाभागा दुर्गमेतत्तरिष्यत ।
कृत्वैष्णा ... आयुधान्युपलक्ष्यथ ।

तीर्णप्रतिज्ञा सुधिय (:) शत्रूनपि विज (जे) ष्यथ ।
इत्युक्त्वांतर्हृता सद्य पांडवा विस्मयं ययुः ॥

( IV )

Text of दुर्गास्तोत्र as in D

विराटनगरे रम्ये प्रविशन्नेव भूपतिः ।
स्तुनोति मनसा देवीं कुंतीपुत्रो युधिष्ठिर· ॥
भ्रातृभिः सहितो राजन् तथैव प्रपितामह· ।
दु·खशोकेन संतप्तो द्रौपद्या सह भारत ॥
कृतांजलिपुटो भूत्वा वनवासाद्विनि·सृत· ।
भक्त्या परमया युक्तो दुर्गां त्रिभुवनेश्वरीं ॥
महिषासुरदर्पघ्नीं सर्वलोकनमस्कृतां ।
शैलराजसुतां देवीं वरदामभयप्रदा ॥
शत्रुभिः परिभूतात्मा गद्गदाक्षरमानस· ।
स्तोत्रं प्रचक्रमे पुण्य स्वश्रेयोर्थं नराधिपः ॥
अजातशत्रुः प्रणिपत्य चादौ । पादाब्जयुग्मं त्रिदशार्चितायाः ॥
वाक्पुष्पस्रग्दाममनोहरैः स । अभ्यर्चयामास पितामहस्ते ॥

युधिष्ठिर उवाच ।

नमस्तेंवुजपत्राक्षी नमस्ते त्रिदशार्चिते ।
सुरारणि नमस्तुभ्य नमः पशुपतिप्रिये ॥
दैत्यदानवदर्पघ्नी दैत्यदानवपूजिते ।
शैलराजसुते देवि नमस्ते विंध्यवासिनि ॥
सर्वप्रहरणोपेते सर्वज्ञे सर्वगे ध्रुवे ।
अजिते विजये भद्रे भद्रकालि रणप्रिये ॥
कृष्णे देवि नमस्तुभ्यं नमस्ते कैटभेश्वरि ।
नमो गायत्रि सावित्रि नमस्ते जातवेदसे ॥
योगीश्वरि नमस्तुभ्य मेनकायाः सुते नमः ।
शंकरार्धशरीरस्थे नमस्ते विष्णुपूजिते ॥
नमो ब्रह्माणि रुद्राणि नमो नारायणात्मजे ।
नमस्त्रैलोकविख्याते नमस्तेऽमरपूजिते ॥
पद्मकिंजल्कवर्णाभे चारुपद्मवरानने ।
महासिंहसमारूढे महाशार्दूलवाहिनि ॥
कांतारेष्वथ दुर्गेषु त्व यासि शरणागतान् ।
त्व गतिर्नो महादेवि दुर्गे दुर्गभयापहे ॥

महेंद्राणि नमस्तुभ्यं नमस्ते भक्तवत्सले ।
महिषासुरदेहघ्नि कंसासुरभयंकरि ॥

कालरात्रि महारात्रि यशस्करि शुभानने ।
दुःखदे सुखदे सौम्ये प्रचंडे चंडिके शिवे ॥

पूज्यासि त्वं महाभागे पातालतलवासिभिः ।
अनंतप्रमुखैर्नागैर्वासुकिस्तक्षकादिभिः ॥

मर्त्येपीह नृपैः सर्वैश्चंद्रादित्यकुलोद्भवैः ।
मानवैर्विविधैर्नित्यं चतुर्वर्णाश्रमस्थितैः ॥

स्वर्गेप्यमरनाथैंद्रैर्यक्षगंधर्वकिंनरैः ।
विद्याधरगणैर्दिव्यैर्दिव्यैश्चाप्सरसां गणैः ॥

आदित्यैर्वसुभिः साध्यैरश्विभ्यां विश्वनायकैः ।
मुनिभिर्वालखिल्याद्यैः पुराणऋषिसत्तमैः ॥

भृग्वंगिरोवसिष्ठाद्यैः काश्यपात्रिप्रजेश्वरैः ।
पुलस्त्यागस्त्यपुलहैर्मनुष्यपितृभिस्तथा ॥

मुनिभिः क्रतुदक्षाद्यैः सनक्षत्रैर्ग्रहैरपि ।
सिद्धैर्नानाविधाकारैरनेकसुरचारणैः ॥

दिक्पालैर्लोकपालैश्च शक्राद्यैर्विबुधेश्वरैः ।
स्तूयसे हूयसे भक्त्या नित्यं त्रैलोक्यवासिभिः ॥

त्वयेदं धार्यते सर्वं त्रैलोक्यं सचराचरं ।
विश्वं विश्वसृजा सार्धं लोकालोकमशेषतः ॥
तन्नास्ति त्रिषु लोकेषु यत्त्वया तु विना क्वचित् ।
किंचित्प्रवर्तते देवि ब्रह्मांडाभ्यांतरं च यत् ।
पाहि मां त्वं महाभागे महादेवार्धकायिनि ॥

कात्यायनि महाभागे मायाख्ये पापनाशिनि ।
भ्रातृभिः सहितो देवि द्रौपद्या चानया सह ॥

आपन्महार्णवे मग्नो घोरेस्मिन्नृपनिर्गमे ।
दुस्तरे त्राहि मां भद्रे परकायनिवेशने ॥

पतमानं निरानंदमनाथं दुःखभागिनः ।
दायादैः परिभूतोस्मि दुःखशोकपरिप्लुतः ॥

राज्यभ्रष्टो धनैर्हीनो बंधुभिः परिवर्जितः ।
वर्षाणि द्वादशेमानि पूरितानि महावने ॥

तव प्रसादान्महेंद्राणि भ्रातृभिः सहितेन च ।
द्वादशाब्दादिकं वर्षं प्राप्तं कष्टतरं मया ॥

प्रेरणीयं सुदुःप्रेर्यं प्रेरितव्यं सुदुर्गमं ।
तथा कुरु दयां मेद्यविषमामापदं इमां ॥

तराम्यहं महादेवि विराटनगरे यथा ।
सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके ॥
शरण्ये त्र्यंबके गौरि नारायणि नमोस्तु ते ।

यथा न जानाति नरोत्र कश्चित् । स्वकः परो वा वसतां च नोत्र ॥
तथा कुरु स्वप्रसतां वरिष्ठे । त्वच्चारुपादाब्जपुरस्थितोऽहं ॥
दुःखान्वितः संप्रलपामि दुर्गे । उन्मत्तवद्दीनमना निराशः ॥
प्रसीद दुर्गे मम सानुजस्य । समीहितं यत् त्वपादिश्यतां मे ॥

वैशंपायन उवाच ।

एवं संस्तवमानस्य पांडवस्य महात्मनः ।
ततः सुमधुरा रम्या मनःप्रह्लादकारिणी ॥

दिव्या श्रुतिसुखा पुण्या स्पष्टाक्षरसमन्विता ।
प्रश्वासयंती राजानं वागुवाचाशरीरिणी ॥

देव्युवाच– भो भोस्त्वं पांडवश्रेष्ठ कौंतेयारिविमर्दन ।
मा भैषीर्नरशार्दूल त्यज शोकं विशांपते ॥

सद्वाकुसुममालाभिरर्चिताहं त्वयानघ ।
तुष्टाहं परया भक्त्या प्रश्रयेण दमेन च ॥

सर्वदा मत्प्रसादात्त्वं विराटनगरे शुभे ।
अनुजैः सहितो राजन्भार्यया चानया सह ॥

मंदिरं मत्स्यराजस्य निवसस्व यथासुखं ।
न च त्वां चेत्स्यते कश्चिन्मानवो मनुजाधिप ॥

स्वकीयो वान्यकीयो वा मत्प्रसादाज्जगत्पते ।
इमं संवत्सरं तात प्रेरयित्वा प्रयत्नतः ॥

पितृपैत्तामहायातं राज्यं निहतकंटकं ।
अचिरादेव भूयस्त्वं प्राप्स्यसे राजसत्तम ॥

रक्ष्याम्यहं त्वां नरदेव नित्यं ।
दुर्गेषु संग्राममहाभयेषु ॥

दिवा च रात्रौ च सुतं यथेति ।
प्राश्वास्य तं सा विरराम वाणी ॥

इमं पुण्यतमं स्तोत्रं ये पठिष्यंति मानवाः ।
न तेषां विद्यते पापं नाप्यर्तिर्न च दुर्गतिः ॥

धनार्थी लभते वित्तं प्रजार्थी लभते प्रजाम् ।
कन्यार्थी लभते कन्यां वियोगी प्रियदर्शनम् ॥
लाभार्थी लभते लाभं यशोर्थी लभते यशः ।
श्रेयोर्थी लभते श्रेयो जयार्थी विजयी भवेत् ॥
श्री महाभारते विराटपर्वणि दुर्गास्तुतिर्नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## ADHYĀYA 6

### [ *NORTHERN RECENSION.* ]

#### Before V. 1

D adds:—

रामाभिरम्यसुरपादपतुल्यगंधैः ।
पुष्पैरलंकृतभुवं सुनिविष्टवप्रम् ॥
प्राकारतोरणगृहैरिवमंदराद्रेः ।
कूटं सकूटमथ ते ददृशुःपुरं तत् ॥

#### After V. 8

K adds:—

विद्धि प्रभो मत्स्यपते कुलोत्तमं सेवार्थिनं सेवकमानवर्द्धनम्

#### Before V. 10

Edns A²BCDEGHKLMN add:—

तं राजसिंहं प्रतिगृह्य राजा प्रीत्यात्मना चैवमिदं बभाषे ।

### [ *SOUTHERN RECENSION.* ]

#### Before V. 1

S. cl. adds:—

ततस्तु ते पुण्यजलां शिवां शुभाम् ।
महर्षिगंधर्वनिषेवितोदकाम ॥
त्रिलोककान्तामवतीर्य जान्हवीम् ।
ऋषींश्च देवांश्च पितॄननर्पयन् ॥ १ ॥
वरप्रदानं त्वनुचिन्त्य पार्थिवः ।
हुत्वाग्निहोत्रं कृतजप्यमङ्गलः ॥
दिशं तथैन्द्रीमभितः प्रपेदिवान् ।
कृताञ्जलिर्धर्ममुपाह्वयच्छ्र्नैः ॥ २ ॥
युधिष्ठिर उवाच ।
वरप्रदानं मम दत्तवान्पिता ।
प्रसन्नचेता वरदः प्रजापतिः ॥

जलार्थिनो मे तृषितस्य सोदराः ।
मया प्रयुक्ता विविशुर्जलाशयम् ॥ ३ ॥
निपातिता यक्षवरेण ते वने ।
महाहवे वज्रभृतेव दानवाः ॥
मया च गत्वा वरदो हितो पितः ।
विवक्षता प्रश्नसमुच्चयं गुरुः ॥ ४ ॥
स मे प्रसन्नो भगवान्वरं ददौ ।
परिष्वजंश्चाह तथैव सौहृदात् ॥
वृणीष्व यद्वाञ्छसि पाण्डुनन्दन ।
स्थितोऽन्तरिक्षे वरदोऽस्मि पश्य माम् ॥ ५ ॥
स वै मयोक्तो वरदः पिता प्रभुः ।
सदैव मे धर्मरता मतिर्भवेत् ॥
इमे च जीवन्तु ममानुजाः प्रभो ।
वय स्वरूपं च जयं तथाऽऽप्नुमः ॥ ६ ॥
क्षमा च कीर्तिश्च यथेप्सितं भवेत् ।
व्रतं तु सत्यं च समाप्तिरेव च ॥
वरो ममैषोस्तु यथाऽनुकीर्तितो ।
न तन्मृषा देववृषो यथाऽब्रवीत् ॥ ७ ॥
वैशंपायन उवाच ।
इत्येवमुक्त्वा धर्मात्मा धर्ममेवानुचिन्तयन् ।
तदैव तत्प्रसादेन रूपमेवाभवत्स्वयम् ॥ ८ ॥
स वै द्विजातिस्तरुणस्त्रिदण्डभृत् ।
कमण्डलूर्णापधरो व्यजायत ॥
सुरक्तमाञ्जिष्ठवराम्बरः शिखी ।
पवित्रपाणिर्ददृशे तदाऽद्भुतम् ॥ ९ ॥
तथैव तेषामपि धर्मचारिणाम् ।
यथोचिताहाभरणाम्बरस्रजः ॥
क्षणेन राजन्नभवन्महात्मनाम् ।
प्रशस्तधर्माग्र्यफलाभिकाङ्क्षिणाम् ॥ १० ॥
नवेन रूपेण विशांपतिर्युतः ।
स्वधर्वरूपेण बभौ प्रतापवान् ॥ ११ ॥

**Before V. 2d**

S. cl. adds :—

अनंततेजोज्वलितं हुताशनं ।

### Before V. 4

S. cl. adds :—

सभासदं प्राञ्जलिभिर्जनैर्वृतम् ।
विचित्रनानाविधशस्त्रपाणिभिः ॥
उपायनैर्वैः प्रविशद्भिरार्चितं ।
द्विजैश्च शिक्षाक्षरमन्त्रधारिभिः ॥ १ ॥
गजैरुदीर्णं तुरगैश्च संकुलम् ।
मृगद्विपैः कुब्जगणैः समावृतम् ॥
सितोच्छ्रितोष्णीषनिरुद्धमूर्धजं ।
विचित्रवैडूर्यविकारकुण्डलम् ॥
विराटमायाच्च युधिष्ठिरस्तदा ।
बृहस्पतिः शक्रमिव त्रिविष्टपे ॥ २ ॥

### After V. 4a

S. cl. adds :—

विराटराजो मुदितेन चक्षुषा ।
पप्रच्छ चैनं स नराधिपो मुहुः ।
द्विजाश्च ये चास्य समासदस्तदा ॥ १ ॥

विराट उवाच ।

को वा विजानाति पुरास्य दर्शनम् ।
युवा सभां योऽयमुपैति मामिकाम् ॥
रूपेण सारेण विराजयन्महीम् ।
श्रिया ह्ययं वैश्रवणो द्विजो यथा ॥ २ ॥
मृगेन्द्रराड्वारणयूथपोपमः ।
प्रभात्ययं काञ्चनपर्वतो यथा ॥
विराजते पावकसूर्यसन्निभम् ।
स चन्द्रनक्षत्र इवांशुमान्ग्रहः ॥ ३ ॥
न दृश्यतेऽस्यानुचरो न कुञ्जरः ।
न चोष्णरश्म्यावरणं समुच्छ्रितम् ॥
न कुण्डलं नाङ्गदमस्य न स्रजः ।
विचित्रिताङ्गश्च रथश्चतुर्युजः ॥ ४ ॥
क्षात्रं च रूपं हि बिभर्त्ययं भृशम् ।
गजेन्द्रशार्दूलमहर्षभोपमः ॥
अभ्यागतोऽस्माननलंकृतोऽपि सन् ।
विरोचते भानुरिवाचिरोदितः ॥ ५ ॥

विभात्ययं क्षत्रिय एव सर्वथा ।
विराट इत्येवमुवाच तं प्रति ॥
ससागरान्तामयमद्य मेदिनीम् ।
प्रशासितुं चार्हति वासवोपमः ॥ ६ ॥

नाक्षत्रियो नूनमयं भविष्यति ।
मूर्धाभिषिक्तः प्रतिभाति मां प्रति ॥
तुल्यं हि रूपं प्रतिदृश्यतेऽस्य ।
गजस्य सिंहस्य तथर्षभस्य ॥ ७ ॥

यमेष कामं परिमार्गते द्विजः ।
स चास्य सर्वः क्रियतामसंशयम् ॥
प्रियं च मे दर्शनमीदृशे जने ।
द्विजेषु मुख्येषु तथाऽतिथिष्वपि ॥ ८ ॥

धनेषु रत्नेष्वथ गोषु वेश्मसु ।
प्रकामतो मे विचरत्ववारितः ॥ ९ ॥

वैशंपायन उवाच ।

एवं ब्रुवाणस्तमनन्ततेजसम् ।
विराजमानं सहसोत्थितो नृपः ॥
अन्येन रूपेण समीपमागतम् ।
त्रिदण्डकुण्डयङ्कुशशिक्यपाणिनम् ॥ १० ॥

समुत्थिता सा हि सभा सपार्थिवा ।
स विप्रराजन्यविशा सशूद्रका ॥
सभागतं प्रेक्ष्य तपन्तमर्चिषाम् ।
विनिःसृतं राहुमुखाद्यथा रविम् ॥ ११ ॥

स तेन पूर्वं जयतां भवानिह ।
द्विजातिनोक्तोऽभिमुखः कृतांजलिः ॥
जयं जयार्हेण समेत्य वर्धितः ।
विराटराजो ह्यभिवादयच्च तम् ॥ १२ ॥

तमब्रवीत्प्रांजलिरेष पार्थिवो ।
विराटराजो मधुराक्षरं वचः ॥
प्राप्तः कुतस्त्वं भगवन् किमिच्छसि ।
क यास्यसे किं करवाणि ते द्विज ॥ १३ ॥

श्रुतं च शीलं च कुलंच शंस मे ।
गोत्रं तथा नाम च देश मेव च ॥

सत्यप्रतिज्ञा हि भवंति साधवः ।
विशेषतः प्रव्रजिता द्विजातयः ॥ १४ ॥
यथानुरूपं प्रचरामि ते त्वहम् ।
न चावमंता न तवाभिभाषितम् ॥
अपूजिता ह्यग्निसमा द्विजातयः ।
कुलं दहेयुः सविषा इवोरगाः ॥ १५ ॥
सर्वां च भूमिं तव दातुमुत्सहे ।
सदंडकोशां विसृजामि ते पुरम् ।
... ... ... ... ...
किं कर्म चाप्याचरसि द्विजोत्तम ॥ १६ ॥
वैशंपायन उवाच ।
एवं ब्रुवाणं तमुवाच पार्थिवम् ।
युधिष्ठिरो धर्ममवेक्ष्य चासकृत् ॥
सत्यं वचः कोन्विह वक्तुमुत्सहेत् ।
यथाप्रतिज्ञं तु शृणुष्व पार्थिव ॥ १७ ॥
श्रुतं च शीलं च कुलं च कर्म च ।
शृणुष्व मे जन्म च देशमेव च ॥
गुरूपदेशान्नियमाच्च मे व्रतं ।
कुलक्रमार्थं पितृभिर्नियोजितम् ॥ १८ ॥
द्विजो व्रतेनास्मि न च स्वतः प्रभो ।
संमुण्डितः प्रव्रजितस्त्रिदण्डभृत् ॥
इदं शरीरं मम पश्य मानुषम् ।
समावृतं पञ्चभिरेव धातुभिः ॥ १९ ॥
ममेह पञ्चेन्द्रियगात्रदर्शिनः ।
वदन्ति पञ्चैव पितॄन्यथा श्रुतिः ॥
मनुष्यजातित्वमचिन्तयन्नहम् ।
न चास्मि तुल्यः पितृभिः स्वभावतः ॥ २० ॥
कङ्को हि नाम्ना विषयं तवागतः ।
व्रती द्विजातिः स्वकृतेन कर्मणा ॥
द्यूतप्रसङ्गादधनोऽस्मि राजन् ।
सत्यप्रतिज्ञा मतिनश्वरामः ॥ २१ ॥
... ... ... ... ... ...
गृहप्रवेशां च शरीरमेव च ।
गृहे च तस्योषितवानहं सुखम् ॥
राजाऽस्मि तस्य सपुरेऽभयं पुरा ॥ २२ ॥
ममाज्ञया तत्र विचेरुरङ्गनाः ।
मम निवार्य दमयन्ति वाजिनः ॥

मया कृतं तस्य पुरे तु यत्पुरा ।
न तत्कदाचित्कृतवाञ्जनोऽन्यथा ॥ २३ ॥
सोहं पुरा तस्य वयस्समः सखा ।
चरामि सर्वां वसुधां सुदुःखितः ॥
न तु प्रशान्तिं क्वचिदाप्तवानहम् ।
व्रतापदेशान्नियमेन भारिकः ॥ २४ ॥

... ... ... ... ...

तदेव सौख्यं मृगयामहे वयम् ।
कृतज्ञभावेन मयानुकीर्तितम् ॥
युधिष्ठिरस्यात्मसमस्य चेष्टितम् ॥ २५ ॥
इमं हि मोक्षाश्रममास्थितस्य मे ।
युधिष्ठिरस्तुल्यगुणो भवानपि ॥
न मेऽस्ति माता न पिता न बांधवाः ।
न मेऽस्ति रूपं न रतिर्न संततिः ॥ २६ ॥
सुखं च दुःखं च हि तुल्यमद्य मे ।
प्रियाप्रिये तुल्यगते गतागते ॥
मुक्तोस्मि कामाच्च धनाच्च सांप्रतम् ।
त्वदाश्रये वस्तुमिहाभ्युपागतः ॥ २७ ॥
संवत्सरेणेह समाप्यते त्विदम् ।
मम व्रतं दुष्करकर्मकारिणः ॥
ततो भवन्तं परितोष्य कर्मभिः ।
पुनर्व्रजिष्ये च कुतूहलं यतः ॥ २८ ॥

... ... ... ... ...

पराजितः शकुनिरुतानि चिन्तयन् ।
मृगद्विजानां च रुतानि चिन्तयन् ॥
निराश्रयः प्रव्रजितोस्मि भिक्षुक ॥ २९ ॥

वैशंपायन उवाच ।

तेनैवमुक्ते वचने नराधिपः ।
कृताञ्जलिः प्रव्रजितं विलोक्य च ॥
अथाब्रवीद्धृष्टमनाः शुभाक्षरम् ।
मनोनुगं सर्वसभागतं वचः ॥ ३० ॥

**After V. 12**

S. d. adds :—

समानयानासनवस्त्रभोजनम् ।
प्रभूतमाल्याभरणानुलेपनम् ॥

स सार्वभौमोपम सर्वदाऽर्हसि ।
प्रियं हि मन्ये तव नित्यदर्शनम् ॥ १ ॥
ये त्वाऽभिधावेयुरनर्थपीडिताः ।
द्विजातिमुख्या यदि वेतरे जनाः ॥
सर्वाणि कार्याण्यहमर्थितस्त्वया ।
तेषां करिष्यामि न मेऽत्र संशयः ॥ २ ॥
... ... ... ... ...
यद्यपि किंचिद्वसु विद्यते मम ।
प्रभुर्भवांस्तस्य वशी वसेह च ॥ ३ ॥
युधिष्ठिर उवाच ।
अतोऽभिलापः परमो न विद्यते ।
( Here comes our v. 13c ).
न भोजनं किंचन संस्पृशेयम् ।
हविष्यभोजी निशि च क्षितिशयः ॥ ४ ॥
व्रतोपदेशात्समयो हि नैष्ठिकः ।
न क्रोधितव्यं नरदेव कस्यचित् ॥
एवंप्रतिज्ञस्य ममेह भूपते ।
निवासबुद्धिर्भविता तु नान्यथा ॥ ५ ॥
एवं वरं मात्स्य वृणे प्रदापितम् ।
कृतो भविष्यामि वरेण तेऽनघ ॥
वैशंपायन उवाच ।
एवं तु राज्ञः प्रथमः समागमः ।
बभूव मात्स्यस्य युधिष्ठिरस्य च ॥
विराटराजस्य हि तेन सङ्गमः ।
बभूव विष्णोरिव वज्रपाणिना ॥ ६ ॥
तमासनस्थं प्रियरूपदर्शनम् ।
निरीक्षमाणो न ततर्प भूमिपः ॥
सभां च तां प्रज्वलयन् युधिष्ठिरः ।
श्रिया यथा चन्द्र इव त्रिविष्टपम् ॥ ७ ॥

---

## ADHYĀYA 7

### [*NORTHERN RECENSION.*]

**After 5b.**

D adds:—

विज्ञायतामस्य विहाय चेष्टितं
गोत्रं च नामापि च शल्ययोधनं ।

### [ *SOUTHERN RECENSION.* ]

#### After V. 2

SK, ST, SG, SL add:—

त्वचं च गोचर्ममयीं सुमर्दितां ।
समुक्षितां पानकरागपाडवैः ॥
किलासमालम्ब्य करेण चायसम् ।
सगृह्णिवेराद्रेकभूस्तृणाङ्कुरम् ॥ १ ॥

S. cl. adds:—

सभागतो वारणयूथपोपमः ।
तमिस्रहा रात्रिमिवावभासयन् ॥
सहस्रनेत्रावरजान्तकोपमः ।
त्रिलोकपालाधिपतिर्यथा हरिः ॥ १ ॥
तमाव्रजन्तं गजयूथपोपमम् ।
निरीक्षमाणो नवसूर्यवर्चसम् ॥
भयात्समुद्विग्नविपण्णचेतनः ।
दिशश्च सर्वाः प्रसमीक्ष्य चासकृत् ॥ २ ॥
तमेकवस्त्रं परसैन्यवारणम् ।
सभाऽविदूरान्नृपतिर्नृपात्मजम् ॥
समीक्ष्य वैक्लव्यमुपेयिवाञ्शनैः ।
जनाश्च भीताः परिसर्पिरे भृशम् ॥ ३ ॥

#### After V. 3

S. cl. adds:—

को वा विजानाति पुराऽस्य दर्शनम् ।
मृगेन्द्रशार्दूलगतिं हि मामकः ।
व्यूढान्तरांसो मृगराडिवोत्कटः ।
य एष दिव्यः पुरुषः प्रकाशते ॥ १ ॥
राजश्रिया ह्येष विभाति राजवत् ।
विरोचते रुक्मगिरिप्रभोपमः ॥
नाक्षत्रियो नूनमयं भविष्यति ।
सहस्रनेत्रप्रतिमस्तथा ह्यसौ ॥ २ ॥
रूपेण यश्चाप्रतिमो ह्ययं महान् ।
महीमिमां शक्र इवाभिपालयेत् ॥
नाभूमिपोऽयं हि मतिर्ममेति च ।
च्युतः समृद्ध्या नभसीव नाहुषः ॥ ३ ॥

वैशंपायन उवाच ।

वितर्कमाणस्य च तस्य पाण्डवः ।
सभामतिक्रम्य वृकोदरोऽब्रवीत् ॥
जयेति राजानमभिप्रभोदयन् ।
सुखेन सभ्यं च सभागतं जनम् ॥ ४ ॥
ततो नृपं वाक्यमुवाच पाण्डवः ।
यथाऽनुपूर्व्यात्कृपयान्वितोत्तरम् ॥
त्वां जीवितुं शत्रुहन्नागतोऽहम् ।
त्वमेव लोके परमो हि संश्रयः ॥ ५ ॥
नरेन्द्र शूद्रोऽस्मि चतुर्थवर्णभाक् ।
गुरूपदेशात्परिचारकर्मकृत् ॥
जानामि सूपांश्च रसांश्च संस्कृतान् ।
मांसान्यपूपांश्च पचामि शोभनान् ॥ ६ ॥
रागप्रकारांश्च बहून्फलाश्रयान् ।
महानसे मे न समोऽस्ति सूपकृत् ॥ ७ ॥

वैशंपायन उवाच ।

तमब्रवीन्मत्स्यपतिः प्रहृष्टवत् ।
प्रियं प्रगल्भं मधुरं विनीतवत् ॥
न शूद्रतां कांचन लक्षयामि ते ।
कुबेरचन्द्रेन्द्रदिवाकरप्रभ ॥ ८ ॥
हुताशनाशीविषतुल्यतेजसः ।
न कर्म ते योग्यमिदं महानसे ॥
न सूपकारो भवितुं त्वमर्हसि ।
सुपर्णगन्धर्वमहोरगोपम ॥ ९ ॥
अनीककर्णाग्रधरो ध्वजी रथी ।
भवाद्य मे वारणवाहिनीपतिः ॥
न नीचकर्मा भवितुं त्वमर्हसि ।
प्रशासितुं भूमिमिमां त्वमर्हसि ॥ १० ॥

भीमसेन उवाच ।

चतुर्थवर्णोऽस्म्यहमुग्रशासन ।
न वै वृणे त्वामहमीदृशं पदम् ॥
जात्याऽस्मि शूद्रो बल्लवेति नाम्ना ।
जिजीविषुस्त्वद्विषयं समागतः ॥ ११ ॥
युधिष्ठिरस्यास्मि महानसे पुरा ।
बभूव सर्वप्रभुरन्नपानदः ॥
तथापि मामुत्सृजसे महीपते ।
व्रजाम्यहं यावदितो यथागतम् ॥ १२ ॥

त्वमग्रसंस्कारविधौ प्रशाधि मां
भवामि तेऽहं नरदेव सूपकृत् ॥ १३ ॥

After V. 10

S. cl. adds:—

न नीचकर्मा तव मादृशः प्रभो ।
बलस्य नेताऽन्यबलो भवेदिति ॥
स्वकर्मतुष्टाश्च वयं नराधिप ।
प्रशाधि मां सूदपदे यदीच्छसि ॥ १ ॥
ये सन्ति मल्ला बलवीर्यसंभृताः ।
तानेव योत्स्यामि तवाभिहर्षयन् ।
वैशंपायन उवाच ।
तमेवमुक्ते वचने नराधिपः ।
प्रत्यब्रवीन्मत्स्यपतिः प्रहृष्टवत् ॥ २ ॥

After V. 11

S. cl. adds :—

त्रिलोकपालो हि यथा विराजसे ।
तथाऽद्य मे विष्णुरिवातिरोचसे ॥

---

## ADHYĀYA 8.

### [ *NORTHERN RECENSION.* ]

After V. 1

Edns CGKMN add:—

कृष्णान् सूक्ष्मान् मृदून् दीर्घान् समुद्ग्रथ्य शुचि

After V. 3a

H adds :—

राजधान्यां विराटस्य राजमार्गेण गच्छति ।

After V. 3

D adds:—

नरा नार्यश्च संप्रेक्ष्य परं विस्मयमागताः ॥

Before V. 13

Edns BCEGKN add: —

शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया ।
शारदोत्पलसेविन्या रूपेण सदृशी श्रिया ॥

Before V 14

BCEGN add —

देवकन्या भुजगी वा नगरस्याथ देवता ।
विद्याधरी किंनरी वा यदि वा रोहिणी स्वयम् ॥

After V 14

Edns & all MSS. add as third line —

देव्यो देवेषु विख्यातास्तासां त्व कतमा शुभे।

Before V. 17

Edns BCENG add :—

मल्लिकोत्पलपद्मानां चपकानां तथा शुभे ।

Before V 24

Edns BCEKN add —

अध्यारोहेद्यथा वृक्षान् वधायैवात्मनो नरः ।
राजवेश्मनि ते सुभ्रु गृहे तु स्यात्तथामम ॥

Before V 31

Edns BCEKN add —

प्रच्छन्नाश्चापि रक्षन्ति ते मां नित्य शुचिस्मिते।

After V 33a

Edns BCEGLKN add —

उवास नगरे तस्मिन् पतिधर्मवती सती ।

[ *SOUTHERN RECENSION* ]

Before V. 1

S cl. adds —

ततः कृष्णा सुकेशी सा दर्शनीया शुचिस्मिता ।

After V 2

S cl. adds —

प्रविष्टा नगरं भीरुः सैरन्ध्रीवेषसंयुता । ( l. om in SA[2] )

After V 7a

S cl adds —

स्त्रीभिश्च पुरुषैश्चापि सर्वतः परिवारिताम् ॥ १ ॥
विराटभार्या तां देवीं कारुण्याज्जातसंभ्रमा ।
अप्रेषयत्समीपस्थाः स्त्रियो वृद्धाश्च तत्पराः ॥ २ ॥
अपनीय ततः सर्वा आनयध्वमिहैव ताम् ।
यदा दृष्टा मया साध्वी कम्पते मे मनस्तदा ।
तस्माच्छीघ्रमिहानाय्य दर्शयध्वं यदीच्छथ ॥ ३ ॥

तास्तथोक्ता उपागम्य द्रौपदीं परिसंगताः ।
आनीय सर्वथा त्वेनामब्रुवन्मधुराक्षरम् ॥ ४ ॥
भद्रे त्वां द्रष्टुमिच्छन्ती सुदेष्णा हर्म्यभूतले ।
त्वदर्थं प्रेषयच्चास्मान्द्रष्टुं तां त्वं यदीच्छसि ।
आयाह्यस्माभिरेवाद्य रक्ष्यमाणा यथेष्टतः ॥ ५ ॥

( after v. 5 *b* above SG, SL, ST, add:—
प्रीतास्त्वदर्थं हि वयं त्वत्समीपमुपागताः । )

तच्छ्रुत्वा द्रौपदी तासां वचनं वाक्यकोविदा ।
ईप्सितार्थातिलाभेन हृष्टायाता गृहोत्तमम् ॥ ६ ॥
राजवेश्म ह्यथाक्रम्य यत्राग्र्यमहिषी स्थिता ।
सुदेष्णामगमत्कृष्णा राजभार्यां यशस्विनीम् ॥ ७ ॥
कृष्णान् केशान्मृदून्दीर्घान्समुद्ग्रथ्यासितेक्षणा ।
कुंचिताग्रांस्तु सूक्ष्माग्रान्दर्शनीयान्निबध्य च ।
जुगूहे दक्षिणे पार्श्वे मृदूनायतलोचना ॥ ८ ॥
सा प्रविश्य विराटस्य द्रौपद्यन्तःपुरं शुभा ।
ह्रीनिषेवान्विता बाला कम्पमाना लतेव सा ॥ ९ ॥
अभिगम्य च सुश्रोणी सर्वलक्षणसंयुता ।
ददर्शावस्थितां हैमे पीठे रत्नपरिच्छदे ॥ १० ॥
रक्तसूक्ष्माम्बरधरां मेघे सौदामिनीमिव ।
नानावर्णविचित्रां च सर्वाभरणभूषिताम् ॥ ११ ॥
सुभ्रूं सुकेशीं सुश्रोणीं कुब्जवामनमध्यगाम् ।
बहुपुष्पोपकीर्णायां भूयां वेदिमिवाध्वरे ॥ १२ ॥
सुदेष्णां राजमहिषीं सर्वालंकारभूषिताम् ।
श्रीमतीं राजपुत्रीणां शतेन परिवारिताम् ॥ १३ ॥
ताःसर्वा द्रौपदीं दृष्ट्वा संतप्ताः परमांगनाः ।
पतिलोभप्रसक्ताः सहसोत्थाय चासनात् ॥ १४ ॥
निरीक्षमाणाः सर्वास्ताः शचीं देवीमिवागताम् ।
गूढगुल्फां वरारोहां कृष्णां ताम्रायतेक्षणाम् ।
अतिसर्वानवद्यांगीं नतगात्रीं सुमध्यमाम् ॥ १५ ॥
न ह्रस्वां नातिमहतीं जातां बहुतृणे वने ।
ऋश्यरोहीमिवानिन्द्यां सुकेशीं मृगलोचनाम् ॥ १६ ॥

( ST adds after महती :—
न गौरीं न च कालिकां । नीलोत्पलदलश्यामां । )

तां मृगीमिव वित्रस्तां यूथभ्रष्टामिव द्विपाम् ।
लक्ष्मीमिव विशालाक्षीं विद्यामिव यशस्विनीम् ॥
रोहिणीमिव ताराणां दीप्तामग्निशिखामिव ।
पार्वतीमिव रुद्राणीं वेलामिव महोदधेः ॥ १७ ॥

सुलभामिव नागीनां मृगीणामिव किन्नरीम् ॥ १८ ॥
गङ्गामिव विशुद्धाङ्गीं शारदीमिव शर्वरीम् ॥
तामचिन्त्यतमां लोके इलामिव यशस्विनीम्।
सावित्रीमिव दुर्धर्षां ब्राह्मया लक्ष्म्या समन्वितां ॥ १९ ॥
सीतामिव सतीं शुद्धामरुंधतीमिव प्रियाम् ॥ २० ॥
SL, SA, ST omit the last line.

**After V. 7 b**

ST, SG, SA add :—
अथ संच्छिन्नपट्टाभ्यां वल्कलाजिनसंवृताम् ।

**Before V. 14**

S. cl. adds :—
देवकन्या भुजंगी वा नगरस्याथ देवता ।
विद्याधरी किन्नरी वा यदि वा रोहिणी स्वयम् ॥

**After V. 14**

S. cl. adds :—
तव ह्यनुपमं रूपं भूषणैरपि वर्जितम् ॥ १ ॥
त्वां सृष्ट्वोपरतं मन्ये लोककर्तारमीश्वरम् ॥
न तृप्यन्ति स्त्रियो दृष्ट्वा का न पुंसां रतिर्भवेत् ॥ २ ॥
SK, SA only continue :—
प्रवालपुष्पस्तवकैराचिता वनदेवताः ॥
त्वामेव हि निरीक्षन्ते विस्मिता रूपसंपदा ॥ ३ ॥
अन्तःपुरगता नार्यो मृगाः पक्षिगणा नराः ॥
सर्वे त्वामेव कल्याणि निरीक्षन्ते सुविस्मिताः ॥ ४ ॥
न त्वादृशी काचन मे त्रिषु लोकेषु सुन्दरी ॥
दृष्टपूर्वा श्रुता वापि चक्षुषा विद्यते शुभा ॥ ५ ॥

**After V. 15**

S. cl. adds:—
पतीनां प्रेक्षमाणानां कस्मिंश्चित्कारणान्तरे ।
केशपाशे परामृष्टा साऽहं त्रस्ता वनं गता ॥ १ ॥
तत्र द्वादशवर्षाणि वन्यमूलफलाशना ।
चराम्बनिलया सुभ्रूः सा तवान्तिकमागता ॥ २ ॥

**After V 17a**

ST adds:—
महिष्यो वासुदेवस्य ताश्च मां प्रत्यपूजयन् ।

**After V. 17**

S. cl. adds:—
तथाऽस्मि सुभ्रु याचाहमिष्टलाभेन तोषिता ।

कथं ते दातुमुच्छिष्टं पुमानर्हति भामिनि ।
प्रसारयेच्च कः पादौ लक्ष्मीं दृष्ट्वैव बुद्धिमान् ॥ ३ ॥
एवमाचारसंपन्ना एवं देवपरायणा ।
रक्ष्या त्वमसि भूतानां सावित्रीव द्विजन्मनाम् ॥ ४ ॥
देवता इव कल्याणि पूजिता वरवर्णिनी ।
वस भद्रे मयि प्रीता प्रीतिर्हि मयि वर्तते ।
सर्वकामैः प्रमुदिता निरुद्विग्नमनाः सुखम् ॥ ५ ॥

वैशंपायन उवाच ।

सुदेष्णयैवमुक्ता सा संप्रीता चारुहासिनी ।
निर्विशङ्का विराटस्य विवेशान्तःपुरं सुखम् ॥ ६ ॥
याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती विशांपते ।
अवसत्परिचारार्हा सुदुःखं जनमेजय ॥ ७ ॥
एवं विराटेष्ववसंस्तु पाण्डवाः ।
कृष्णा तथाऽन्तःपुरमेत्य शोभना ॥
अज्ञातचर्यां प्रतिरुद्धमानसा ।
यथाऽग्नयो भस्मनिगूढतेजसः ॥ ८ ॥
ST adds after this श्रीमते रामानुजाय नमः ।

---

## ADHYĀYA 9.

[ *NORTHERN RECENSION.* ]

**Before V. 15**

H adds:—

अथ त्विदानीं तव रोचते विभो
यतस्ततो गव्यमवेक्ष्य मामकम् ।
त्वदर्पणा मे पशवो भवन्ति
शतं सहस्राणि गवां मितानि ॥ पाठ. ॥

[ *SOUTHERN RECENSION.* ]

S cl. omits vv. 1–5 *b.* in the text and reads instead :—
अथापरोऽदृश्यत वै शशी यथा ।
हुतो हविर्भिर्हि यथाध्वरे शिखी ॥
तथा समालक्ष्यत चारुदर्शनः ।
प्रकाशयन्सूर्य इवाचिरोदितः ॥ १ ॥
तमाव्रजंतं सहदेवमग्रणीः ।
नृपो विराटो न चिरात्समैक्षत ॥

प्रक्षंत तं तत्र पृथक्समागताः ।
समागताः सर्व मनोहरप्रभम् ॥ २ ॥
युवानमायांतमभिप्रदर्शनम् ।
प्रमुक्तमभ्रादिव चन्द्रमण्डलम् ॥
यष्ट्या प्रमाणान्वितया सुदर्शनम् ।
दामानि पाशं च निबध्य पृष्ठतः ॥ ३ ॥
मौर्वीं च तंत्रीं महतीं सुसंहितां ।
वालैश्च तार्यंतुभिः समावृताम् ॥
स चापि राजानमुवाच धैर्यवान् ।
कुरुष्व मा पार्थिव गोप्यवस्थितम् ॥ ४ ॥
मया हि गुप्ताः पशवो भवन्तु ते ।
प्रसन्ननिद्राः प्रमत्तोस्मि वल्लवः ॥
न श्वापदेभ्यो न च रोगतो भयम् ।
न चापि दावाग्न च तस्कराद्भयम् ॥ ५ ॥
पयःप्रभूता बहुला निरामयाः ।
भवंति गावः सुभृता नराधिप ॥
निशम्य राजा सहदेवभाषितं ।
निरीक्ष्य माद्रीसुतमभ्यनंदत् ॥ ६ ॥
उवाच हृष्टो मुदितेन चेतसा ।
न वल्लवत्वं त्वयि वीर लक्षये ॥
धैर्याद्वपुः क्षात्रमिवेह ते दृढम् ।
प्रकाशते कौरववंशजस्य वा ॥ ७ ॥
नार्यंडितेयं तव दृश्यते तनुः ।
भवेह राज्यं मम मंत्रधर्मभृत् ॥
प्रशाधि मत्स्यान्सह राजकानिमान् ।
बृहस्पतिः शक्रमिवानियामयन् ॥ ८ ॥
बलं च मे रक्ष सुयंत्र मर्यदां ।
गृहाण खड्गं प्रतिरूपमात्मनः ॥
सर्नीकपर्णामधरो बलस्य मे ।
प्रभुर्भवानस्तु गृहाण कार्मुकम् ॥ ९ ॥

वैशंपायन उवाच ।

विराटराजाभिहितः पुरूरवाः ।
प्रणम्य राजानमभिप्रणम्य च ॥
उवाच मत्स्याधिपतिं महामतिः ।
शृणुष्व राजन्मम वाक्यमुत्तमम् ॥ १० ॥

**After V. 19a**

S. cl. adds:—

कृष्णा कमलपत्राक्षी सा मे प्राणसमा सखी ।
न चाहं चिरमिच्छामि क्वचिद्वस्तुं शुभानने ॥ १ ॥
व्रतं किलैतदस्माकं कुलधर्मोऽयमीदृशः ।
योऽस्माकं तु हरेद् द्रव्यं देशं वसनमेव वा ॥ २ ॥
न क्रोद्धव्यं किलास्माभिरस्मद्गुरुसमर्पणः ।
साऽहं वनानि दुर्गाणि तीर्थानि च सरांसि च ॥ ३ ॥
शैलांश्च विविधान्रम्यान्सरितश्च समुद्रगाः ।
भर्तृशोकपरीताङ्गी भर्तृसब्रह्मचारिणी ॥ ४ ॥
विचरामि महीं दुर्गां यत्र सायंनिवेशना ।
वीरपत्नी यदा देवी चरमाणेषु भर्तृषु ॥ ५ ॥
साऽहं विवत्सा विधिना गन्धमादनपर्वतात् ।
शृणोमि तव सौशील्यं भर्तुर्मधुरभाषिणि ॥ ६ ॥
माहात्म्यं च ततः श्रुत्वा ब्राह्मणानां समीपतः ।

**After V. 19**

S. cl. adds :—

गुरवो मम धर्मश्च वायुः शक्रस्तथाऽश्विनौ ।
तेषां प्रसादाच्च न मां कश्चिद्धर्षयते पुमान् ॥

SK alone continues —

वैशंपायन उवाच ।
एवमुक्त्वा सुदेष्णां तां कृताञ्जलिपुटा स्थिता ।
साऽब्रवीद्विस्मयाविष्टा द्रौपदीं योषितां वराम् ॥

**After V. 20**

SK adds:—

साऽहं त्वां न क्षमां मन्ये वसन्तीमिह वेश्मनि ।
एष दोषोऽस्ति सुश्रोणि कथं वा भीरु मन्यसे ॥

**After V. 22**

SK, ST add:—

बिभर्षि परमं रूपमतिमानुषमद्भुतम् ।
तिर्यग्योनिगताश्चापि निरीक्षन्ते सविस्मयाः ।
तवरूपमनिन्द्याङ्गि किं पुनर्मानवा भुवि ॥

**After V. 24**

S. cl. adds :—

सुस्नाताऽलंकृता हि त्वं यमीक्षेथा हि मानुषम् ।
ग्लानिर्न तस्य दुःखं वा न तन्द्रिर्न पराजयः ॥ १ ॥

न शोको न च संतापो न क्रोधो नानृतं वदे ।
यं त्वं सर्वानवद्याङ्गि भजेथाः समलंकृता ॥ २ ॥
न व्याधिर्न जरा तस्य न तृष्णा न क्षुधा भवेत् ।
यस्य त्वं वशगा सुभ्रु भवेरङ्कगता सती ॥ ३ ॥
पञ्चत्वमपि संप्राप्तं यं च त्वं परिषस्वजेः ।
बाहुभ्यामनुरूपाभ्यां स जीवेदिति मे मतिः ॥ ४ ॥
यस्य हि त्वं भवेर्भार्या यं च दृष्ट्वा परिष्वजेः ।
अतिजीवेत्स सर्वेषु देवेष्विव पुरंदरः ॥ ५ ॥
अध्यारोहेद्यथा वृक्षं यथा वाऽऽरुह्य तक्षति ।
राजवेश्मनि वामोरु ननु स्यास्त्वं तथा मम ॥ ६ ॥

### After V. 26

S. cl. adds:—

अनुमानये त्वां सैरन्ध्रि नावमन्ये कथंचन ।
भर्तृशीलभयाद्भद्रे तव वासं न रोचये ॥

### After V. 27a

S. cl. adds:—

देवगन्धर्वयक्षैर्वा द्रष्टुं दुष्टेन चेतसा ।

### After V. 27

S. cl. adds:—

पुत्रा देवादिदेवानां सूर्यपावकवर्चसः ।
यश्च दुःशीलवान्मर्त्यो मां स्पृशेद्दुष्टचेतसा ॥ १ ॥
स तामेव निशां शीघ्रं शयीत मुसलैर्हतः ।
यस्यापि हि शतं पूर्णं बान्धवानां भवेदपि ॥ २ ॥
सहस्रं वा विशालाक्षि कोटिर्वापि सहस्रिका ।
दुष्टचित्तश्च मां ब्रूयान्न स जीवेत्तवाग्रतः ॥ ३ ॥
न तस्य त्रिदशा देवा नासुरा न च पन्नगाः ।
तेभ्यो गन्धर्वराजेभ्यस्त्राणं कुर्युरसंशयम् ॥ ४ ॥
सुदेष्णे विश्वस त्वं मां स्वजने बान्धवेऽपि वा ।
नाहं शक्या नरैर्द्रष्टुं न च मे वृत्तमीदृशम् ॥ ५ ॥

### After V. 31

S. cl. adds:—

एवं नियसमानायां मयि मा ते भयं हि भूत् ॥ १ ॥
वैशंपायन उवाच ।
एवमुक्ता तु सैरन्ध्र्या सुदेष्णा वाक्यमब्रवीत् ।
वसेह मयि कल्याणि यदि ते वृत्तमीदृशम् ॥ २ ॥

वालो ह्यहं जातिविशेषदूषितः ।
कुतोद्य मे नीतिषु युक्तमंत्रता ॥
स्वकर्मतुष्टाश्च वयं नराधिप ।
प्रशाधि मां गोपरिरक्षणेऽनघ ॥ ११ ॥

### After V. 11

ST adds:—

प्रदाय गा महाराज कुरुराजो युधिष्ठिरः ।
प्रतीक्षे नात्मकर्माणि दृष्ट्वा दृष्ट्वा च गोगतम् । १ ॥

### After V. 12

S. cl adds:—

अनेन गणिता गावो दुर्विज्ञेया महत्तराः ।
बहुक्षीरतरास्ता वै वन्ध्याः सत्यः सपुत्रिकाः ॥ १ ॥

### After V 14

S. cl adds:—

वैशंपायन उवाच ।
मत्स्याधिपो हर्षकलेन चेतसा माद्रीसुतं पाण्डवमभ्यभाषत ॥
नैवानुमन्ये तव कर्म कुत्सितं महीं समग्रामभिपातुमर्हसि ॥ १ ॥
अथ त्विदानीं तव रोचते विभो यथेष्टतो गव्यमवेक्ष मामकं ॥
त्वदर्पणा मे पशवो भवंतु वै पशून्सपालान् भवते ददाम्यहम् ॥ २ ॥

### After V. 15

S. cl adds:—

एवं विराटेन समेत्य पांडवो लब्ध्वां च गोवल्लवतां यथेष्टतः ।
अज्ञातचर्यामवसन्महात्मा यथा रविश्चास्तगिरिं प्रविष्टः ॥ १ ॥

S. class reads after this:—एवं विराटे न्यवसंश्च पांडवाः &c which comes at the end of adh. 11 in our text.

---

## ADHYĀYA 10.

[ *NORTHERN RECENSION.* ]

### After V. 3 b

M adds:—

स दीर्घकेशः प्रविकीर्णमूर्धजा ।
दीर्घां च वेणीं विदधे महाबलः ॥

### After V. 11b

EdnsCG add:—

संमंत्र्य राजा विविधैः स्वमंत्रिभिः
परीक्ष्य चैनं प्रमदाभिराशु वै ॥

[ *SOUTHERN RECENSION.* ]

**After V. 1**

SK, ST, SG, SL, add:—

कृष्णे च रक्ते च निबध्य वाससी ।
शरीरवान्शुक्रबृहस्पतिप्रभः ॥१ ॥

**After V. 2b**

SK, ST, SL, ( SG after 3b ) add:—

क्लैब्येन वेषेण न भाति भाति च ।
ग्रहाभिपन्नो नभसीव चंद्रमाः ॥ १ ॥

**Before V. 5**

S. cl. adds:—

विराट उवाच ।

गजेन्द्रलीलो मृगराजगामी ।
वृषेक्षणो देवसुतोग्रतेजाः ॥
पीनांसबाहुः कनकावदातः ।
कोयं नरो मे नगरं प्रविष्टः ॥ १ ॥
किमेष देवेंद्रसुतः किमेष ।
ब्रह्मात्मजो वा किमयं स्वयंभूः ॥
उमासुतो वैश्रवणात्मजो वा ।
प्रेक्ष्यैनमासीदिति मे वितर्कः ॥ २ ॥

वैशंपायन उवाच ।

सभामतिक्रम्य स वासवोपमः ।
निरीक्षमाणो बहुभिः सभागतैः ॥
स तत्र राजानमभिप्रहाब्रवीत् ।
बृहन्नलाहं नरदेव नर्तकी ॥ ३ ॥
वेणीं प्रकुर्यां रुचिरे च कुण्डले ग्रथे स्रजः प्रावरणानि संहरे ॥
स्नानं चरेयं विमृजे च दर्पणं विशेषकेष्वेव च कौशलं मम ॥ ४ ॥
स्त्रीषु बालेषु जनेषु नर्तने शिक्षाप्रदानेषु च योग्यता मम ॥
करोमि वेणीषु च पुष्पपूरकं न मे स्त्रियः कर्मणि कौशलाधिकाः ॥ ५ ॥
इत्यर्जुनस्तं नरदेवमोजसा विज्ञाप्य तस्थौ विधिनात्मनः क्रियाम् ॥
तमब्रवीत्पांशुमुदीक्ष्य विस्मितो विराटराजोपसृतं महायशाः ॥ ६ ॥
नार्हस्तु वेषोयमनूर्जितस्ते नायंस्त्वमर्हो नरदेवसिंह ॥
तथैव वेषः शुभवेषपूर्ण [illegible] तपनेरिव प्रभो ॥ ७ ॥
विभाति भानोरिव रश्मि[illegible]लेनो घनावरुद्धे गगने घनैरिव ॥
धनुर्हि मन्ये तव शोभयेन्दुर्जा नयाहि पीनायतिमात्रमायतौ ॥ ८ ॥

प्रगृह्य चापं त्वनुरूमात्मनो रक्षस्व देशं पुरमद्य सुस्थिरः ॥
पुत्रेण तुल्यो भव मे बृहन्नले वृद्धोस्मि वित्तं प्रतिपादयामि ते ॥ ९ ॥
त्वं रक्ष मे सर्वमिदं पुरं प्रभो न षण्डतां कांचन लक्षयामि ते ॥
प्रशाधि मत्स्यांस्तरसा विवर्धयन् ददामि राज्यं तव सत्यवागहम् ॥ १० ॥

वैशंपायन उवाच ।

तस्याग्रतः स्वानि धनूंषि पार्थिवो बहूनि दीर्घाणि च वर्णवंति च ॥
ददौ स सज्यानि बलान्वितानि जिज्ञासमानः किमयं करिष्यति ॥ ११ ॥
ततोर्जुनः क्लीवतरं वचोब्रवीत् न मे धनुर्धारितमीदृशं विभो ॥
न चापि दृष्टं धनुरीदृशं क्वचित् न मादृशाः संति धनुर्धरा भुवि ॥ १२ ॥
6 *a.* omitted in SA, SG, SL.

### After V. 6 b

ST adds:—

एवं हि चेद्युक्तमतो हि मत्स्ये वस्तुं यथा कर्तुमयुक्तमन्यथा ॥
एवं वितर्कस्य सविस्मयस्य विराटराजस्य मदान्वितस्य ॥

### Before V. 8

ST adds :—

किं मत्स्यनाम्ना सुविचार्यमर्थिनो यदीप्सितं कार्यमतो भरस्व माम् ॥
एतावदुक्त्वा वचनं बृहन्नला तूर्ष्णीं बभूवाथ विराटसन्निधौ ॥ १ ॥
ततः स राजा तमुदारदर्शनः प्रहृष्टरूपः प्रथितः प्रतापवान् ॥
उवाच वाक्यं परमार्थसत्तमं विनीतवेषश्च हसन्मनस्ययम् ॥ २ ॥

### After V. 10

S. cl. adds:—

ततो विराटः स्वयमाह्वयत्सुतां नराधिपस्तां च सुमध्यसुन्दरीम् ॥
उवाच चैनां मुदितेन चेतसा बृहन्नला नाम सखी भवात्वियम् ॥ १ ॥
सुगात्रि संप्रीतिसुबद्धसौहृदा तवाङ्गने प्राणसमा च नित्यदा ॥
प्रकामभक्ष्याभरणावरा शुभा चरत्वियं सर्वजनेष्ववारिता ॥
न दुष्कुलानामियमाकृतिर्भवेच्च वृत्तभेदी भवतीदृशोजनः ॥ २ ॥

### Before V. 12

SG, SA, ST, SL add —

तथा समादिश्य सुतां नराधिपः प्रवेश्य तां साधुगृहं तथैव च ॥

SA² only continues —

इतीदमुक्त्वा पुरुषैर्यथाश्रमं परीक्ष्य राजन्प्रमदाभिरागतं ।
सुतां च तां नर्तयितुं शशास वै बृहन्नलां क्लीबमवेक्ष्य वेश्मनि ॥

## ADHYĀYA 11.

### [ *NORTHERN RECENSION.* ]

#### After V. 1

HK add:—

सर्वोपपन्नः पुरुषोमरोपमः श्यामो युवा वारणमत्तगामी ।

#### After V. 4b

Edns ABCDGHKLN add:—

हयेषु युक्तो नृप संमतः सदा तवाश्वसूतो निपुणो भवाम्यहम् ।
विराट उवाच ।

#### After V. 4

Ends ABCDGHKLN add:—

ददामि यानानि धनं निवेशनं ममाश्वसूतो भवितुं त्वमर्हसि ।

### [ *SOUTHERN RECENSION.* ]

#### After V. 2

S. cl adds:—

प्रियो हि मे दर्शनतोपि संमतो ब्रवीतु कश्चिद्यदि दृष्टवानिमम् ।

#### After V. 3

S. cl adds:—

वितर्कयत्येव हि मत्स्यराजनि त्वरन्कुरूणामृषभः सभामगात् ।
ततः प्रणम्योपनतः कुरूत्तमो विराटराजानमुवाच पार्थिवम् ॥ १ ॥
तवागतोहं पुरमद्य भूपते जिजीविषुर्वेतनभोजनार्थिकः ।
तवाश्वबंधः सुभृतो भवाम्यहं कुरुष्व मामश्वपतिं यदीच्छसि ॥ २ ॥

#### Before V. 5

S. cl adds:—

विराट उवाच ।
ददानि यानानि धनानि वेतनं न चाश्वसूतो भवितुं त्वमर्हसि ।

#### After V 7

S. cl adds:—

मातलिरिव देवपतेर्दशरथनृपतेः सुमंत्र इव यंता ॥
सुमह इव जामदग्नेस्तथैव तव शिक्षयाम्यश्वान् ॥ १ ॥
युधिष्ठिरस्य राजेंद्र नरराजस्य शासनात् ॥
शतसाहस्रकोटीनामश्वानामस्मि रक्षिता ॥ २ ॥

ST adds after the above verses:—

गते च तस्मिन्नृपतौ महावनं ममागतं भर्तुमिह त्वमर्हसि ।

वैशंपायन उवाच ।

तमब्रवीन्मत्स्यपतिः प्रहृष्टवान् त्वमश्ववंधुर्भवितुं न चार्हसि ।
भोगान्स्वतंत्रान्विपुलांस्त्वमर्हसि कुरुष्व राज्यं यदि चेच्छसि प्रभो ॥
प्रियो हि मे तात गतिर्हि मे भवान्प्रशाधि मत्स्यान्सततोद्यतः स्वयं ।
क्रियाश्रयस्तिष्ठति वीर्यवांस्त्वया गृहाण वस्त्रं प्रतिरूपमात्मनः ॥
चापं सतूणं सशरं प्रगृह्य वै बलस्य नेता भव नो नरर्षभ।

वैशंपायनः।

विराटराजं हि हितः कुरूत्तमः प्रहस्य राजानमभिप्रणम्य च ।
उवाच धीरो नकुलः स निःश्वसन्मत्स्याधिपं प्रांजलिरग्रतः स्थितः ॥
न नीचकर्मा भवमीदृशो जनो बलस्य नेताल्पबलो भवेदिति।
स्वकर्मतुष्टाश्च वयं नराधिप प्रशाधि मामश्वपतिं यदीच्छसि ॥
तथैवमुक्तस्तु नरेंद्रसूनुना विराटराजो हि समीक्ष्य हृष्टवान्।
माद्रीसुतं मत्स्यपतिर्विनीतवत् प्रहस्य चोवाच पुनः कुरूत्तमम् ॥
ददामि यानानि धनं निवेशनं न मेऽश्ववंधुर्भवितुं त्वमर्हसि ।
भोगाननंतान्विपुलांस्त्वमर्हसि कुरुष्व कामं हयपालनं प्रभो ॥

---

## ADHYĀYA 12.

[ *NORTHERN RECENSION.* ]

**After V. 12a**

EdnsA²BCDEGHKLN add:—

विराटनगरे चेरुः पुनर्गर्भधृता इव ।
साशंका धार्तराष्ट्रस्य भयात्पांडुसुतास्तदा ॥

[ *SOUTHERN RECENSION.* ]

**After V. 8**

SG, ST add:—

बीभत्सुरपि गीतेन सुनृत्तेन च पाण्डवः ।
विराटं तोषयामास सर्वाश्चान्तःपुरे स्त्रियः ॥ १ ॥
अश्वैर्विनीतैर्जवनैस्तत्र तत्र समागतैः ।
तोषयामास नकुलो राजानं राजसत्तमः ॥ २ ॥

**After V. 9**

ST, SG, add —

विनीतान्वृषभान्दृष्ट्वा सहदेवेन भावितान् ।
स तु हृष्टश्च संप्रादात्तदा राजा धनं बहु ॥ १ ॥

After V. 10 a

SG, ST SA add:—

अध्यक्षत्वाच्च यल्लब्धं राज्ञः कल्याणकार्यवान् ।

After V. 12a

SK adds:—

विराटनगरे चेरुः पुनर्गर्भधृता इव ।
साशंका धार्तराष्ट्रस्य भयात्पांडुसुतास्तदा ॥ १ ॥

---

ADHYĀYA 13.

[ *NORTHERN RECENSION.* ]

After V. 2a

Edns and all MSS add:—

समाजो ब्राह्मणो राजन्यथा पशुपतेरपि ।

After V. 2

Edns and all MSS add:—

वीर्योन्नद्धा बलोदग्रा राज्ञा समभिपूजिता ।

After V. 5

AFM add:—

नोद्यमानस्ततः सूतो दुःखेनैवाकरोन्मतिं ।
न हि शक्नोति निर्वृत्तः प्रत्याख्यातुं नराधिपं ॥ १ ॥
ततः स पुरुषव्याघ्र शार्दूलशिथिलं चरन् ।
प्रविवेश महारंगं विराटमभिपूजयन् ॥ २ ॥
बबंध कक्षा सूतोपि ततः संहर्षयन् जनं ।
ततस्तं वृत्रसंकाशं सूतो मल्लमथाह्वयत् ॥ ३ ॥
जीमूतं नामतं तत्र मल्लं प्रख्यातविक्रमं ।
तावुभौ सुमहोत्साहावुभौ तीव्रपराक्रमौ ॥ ४ ॥
मत्ताविव महाकायौ वारणौ संनिपेततुः ।
ततस्तौ नरशार्दूलौ बाहुयुद्धं समीयतुः ॥ ५ ॥
वीरौ परमसंहृष्टौ बलिनातिबलावुभौ ।
अन्योन्यस्यांतरप्रेप्सू परस्परजयैषिणौ ॥ ६ ॥
उभौ परमसंहृष्टौ मत्ताविव महागजौ ।
उभाभ्यामवघर्षोभूद्यथाशैलमयस्तथा ॥ ७ ॥
कृतप्रतिकृतैश्चित्रैर्बाहुभिः परिघोपमैः ।
संनिपातावधूतैश्च प्रमाथोन्मथितैस्तथा ॥ ८ ॥
क्षेपणैर्मुष्टिभिश्चैव श्येडितोत्कृष्टनिःस्वनैः ।
तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च ॥ ९ ॥

शलाकानखघातैश्च पादोद्धूतैश्च दारुणैः ।
जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टितैः ॥ १० ॥
तद्युद्धमभवद्घोरं सुमहद्द्वाहुतेजसां ।
बलप्राणविनित्साद्यं समाजोत्सवसंनिधौ ॥ ११ ॥
संलक्षते जनः सर्वो निनदोत्कृष्ट उत्थितः ॥ १२ ॥

M adds after :— 'समाजोत्सवसन्निधौ'

तेषामेको महानासीत् सर्वान् मल्लांस्तथाह्वयन् ।
आगच्छमानं तं रंगे नोपतिष्ठति कश्चन ॥

( the verses corresponding to these in our text being then omitted from their respective places. )

**After V. 9**

All except D add :—

जीमूतं नाम तं तत्र मल्लं प्रख्यातविक्रमम् ।

**After V. 18 a**

Edns and all MSS add :—

व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।
This line is wanting in S. MSS.

**After V. 29a**

L adds :—

आरोगा बहुलक्ष्मीरा दृष्ट्वा गास्ता नराधिपः ।
प्रीतः प्रादान्महावित्तं मत्स्यराजो बली महान् ॥

**After V. 29**

K adds:—

गावः प्रसूता वत्सैश्च विराटो विस्मितो भवत् ।

CGH add :—

धनं ददौ बहुविधं विराटः पुरुषर्षभः ।

DLM add :—

धनं प्रादात्सुबहुलं तस्य तुष्टो हि पार्थिवः ।

Edns ABCEGHKLN continue :—

द्रौपदी प्रेक्ष्य तान्सर्वान्क्लिश्यमानान्महारथान् ।
नातिप्रीतमना राजन्निःश्वासपरमाभवत् ॥ १ ॥

[ *SOUTHERN RECENSION.* ]

**After V. 5a**

S. cl. adds :—

अवाङ्मुखांश्च भीतांश्च मल्लांश्चान्ये विचेतसः ।
व्यसुत्वमपरे चैव वाञ्छन्ति प्रतिविह्वलाः ॥ १ ॥

गां प्रवेष्टुमथेच्छन्ति खं गन्तुमिव चोत्थिताः ।
त्रस्ता शान्ता विषण्णाङ्गा निःशब्दं विद्रुलेक्षणाः ॥ २ ॥
विराटराजमल्लास्ते भग्नदर्पा हतप्रभाः ।
मल्लेन्द्रनिहताः सर्वे न किंचित्प्रवदन्ति ते ॥ ३ ॥
मल्ल उद्वीक्ष्य तान्मल्लांस्त्रस्तान्वाक्यमुवाच ह ।
आगतं मल्लराजं मां कृत्स्ने पृथिविमण्डले ॥ ४ ॥
सिंहव्याघ्रगणैः सार्धं क्रीडन्तं विद्धि भूपते ।
मल्लेन्द्रस्य वचः श्रुत्वा बलदर्पसमन्वितम् ॥ ५ ॥
विराटो वीक्ष्यतान्मल्लांस्त्रस्तान्वाक्यमुवाच ह ।
अनेन सह मल्लेन को योद्धुं शक्तिमान्नरः ॥ ६ ॥
इत्युक्तास्ते विराटेन सर्वे मल्ला विशांपते ।
तूष्णीमासंस्ततो राजा क्रोधाविष्ट उवाच ह ॥ ७ ॥
ग्रामांश्च वेतनान्येषां मल्लानां हारयाम्यहम् ।
ततो युधिष्ठिरोऽवादीच्छ्रुत्वा मात्स्यपतेर्वचः ॥ ८ ॥
अस्ति मल्लो महाराज मया दृष्टो युधिष्ठिरे ।
अनेन सह मल्लेन योद्धुं शक्नोति भूपते ॥ ९ ॥
कोऽसौ मल्लो मया दृष्टः पूर्वं यौधिष्ठिरे पुरे ।
सोऽयं मल्लो वसत्येष राजंस्तव महानसे ॥ १० ॥

वैशंपायन उवाच । (omitted in ST & SA )

युधिष्ठिरवचः श्रुत्वा व्यक्तमाहेति पार्थिवः ।
सोप्यथाहूयतां क्षिप्रं योद्धुं मल्लेन संप्रति ॥ ११ ॥
भीमसेनो विराटेन आहूतश्चोदितस्तथा ।
योद्धुं ततोऽब्रवीद्वाक्यं योद्धुं शक्नोमि भूपते ॥ १२ ॥
नरेन्द्र ते प्रभावेन श्रिया शक्त्याच शासनात् ।
अनेन सह मल्लेन योद्धुं राजेन्द्र शक्नुयाम् ॥ १३ ॥
युधिष्ठिरक्षतं ज्ञात्वा श्रिया तव विशांपते ।
महादेवस्य भक्त्या च तं मल्लं पातयाम्यहम् ॥ १४ ॥

वैशंपायन उवाच ।

चोदितो भीमसेनस्तु मल्लमाहूय मण्डले ।
योद्धुं व्यवस्थितो वीरो रेणुं संमृज्य हस्तयोः ॥
मत्तो गज इवान्यं तु योद्धुं समुपचक्रमे ॥ १५ ॥

v. 7 and v.8*a* omitted in SG, ST, SA.
v 15*b* & *c* om. in SA, SG, ST.

**After V. 9**

SK adds:—

जीमूतं नाम तं तत्र मल्लं प्रख्यातविक्रमम् ।

SK continues, SG & SA add:—

कक्षे मल्लं गृहीत्वाऽथ ननाद बहु सिंहवत् ॥

**After V. 11**

SG, ST, SA add:—

वृषतुल्यबलौ वीरौ सिंहतुल्यपराक्रमौ ।
गजाविव मदोन्मत्तौ भीममल्लौ निपेततुः ॥

ST continues:—

बाहुयुद्धं प्रचक्राते दर्शिनां च सुखावहम् ।
उत्क्षेपणे क्षेपणे च पार्श्वपेषणमेव च ॥
किलैर्वज्रनिपातैश्च रागोद्योतैश्च कर्कशैः ।
बाहुबन्धैस्तथाक्षेपैः पादबन्धैस्तथैव च ॥

**After V. 19**

S. cl. adds:—

उत्पपाताथ वेगेन मल्लं कक्षे गृहीतवान् ।

**After V. 23a**

ST adds:—

नह्येतयुद्धधर्मोऽयं इति सर्वे ब्रुवन्ति ते ।
मल्लानामिति तच्छ्रुत्वा भीमस्तं बल्लवोस्म्यहम् ॥
न मल्लो मल्लधर्मज्ञो राज्ञः प्रीतिकरोऽब्रवीत् ।
तच्छ्रुत्वा वचनं तथ्यमिति सर्वे ब्रुवन्ति ते ॥

**After V. 25**

S. cl. adds:—

विराटेन प्रदत्तानि चित्राणि विविधानि च ।
स्थितेभ्यः पुरुषेभ्यश्च दत्वा द्रव्याणि जग्मिवान्

**After V. 26**

ST adds:—

स तु तत्र विराटश्च प्रीतिदानं च दत्तवान् ।

**After V. 29**

SG, ST, SA add:—

तस्मिन्काले ह्यदात्तत्र धनं प्रीतो नृपो बहु ।

SK adds :—

धनं ददौ बहुविधं विराटः पुरुषर्षभः ।
द्रौपदी प्रेक्ष्य तान्सर्वान्क्लिश्यमानान्महारथान् ।
नातिप्रीतमना राजन्निःश्वासपरमाऽभवत् ॥ १ ॥

ST reads for the above two lines.

याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती विशांपते ।
अवसत्परिचारार्हा सुदुःखं जनमेजय ॥

( Compare text, next adh. v. 2 ).

---

## ADHYĀYA 14.

### [ *NORTHERN RECENSION.* ]

### After V. 2

Edns BCEGMN add:—

तां देवीं तोषयामास तथाचान्तःपुरस्त्रियः ।
तस्मिन्वर्षे गतप्राये कीचकस्तु महाबलः ॥

### After V. 10

Edns BCDEGKMN add —

का त्वं कस्यासि कल्याणि कुतो वा त्वं वरानने ।
प्राप्ता विराटनगरं तत्त्वमाचक्ष्व शोभने ॥ १ ॥
रूपमग्र्यं तथा कान्तिः सौकुमार्यमनुत्तमम् ।
कान्त्या विभाति वक्त्रं ते शशांक इव निर्मलम् ॥ २ ॥
नेत्रे सुविपुले सुभ्रु पद्मपत्रनिभे शुभे ।
वाक्यं ते चारुसर्वांगि परपुष्टरुतोपमम् ॥ ३ ॥
एवं रूपमया नारी काचिदन्या महीतले ।
न दृष्टपूर्वा सुश्रोणि यादृशी त्वमनिंदिते ॥ ४ ॥
लक्ष्मीः पद्मालया का त्वमथ भूतिः सुमध्यमे ।
ह्रीः श्रीः कीर्तिरथो कान्तिरासां का त्वं वरानने ॥ ५ ॥
अतीव रूपिणी किं त्वमनंगांगविहारिणी ।
अतीव भ्राजसे सुभ्रु प्रभेवेन्दोरनुत्तमा ॥ ६ ॥
अपि चेक्षणपक्ष्माणां स्मितज्योत्स्नोपमं शुभम् ।
दिव्यांशुरश्मिभिर्वृत्तं दिव्यकान्तिमनोरमं ॥ ७ ॥
निरीक्ष्य वक्त्रचन्द्रं ते लक्ष्म्यानुपमया युतम् ।
कृत्स्ने जगति को नेह कामस्य वशगो भवेत् ॥ ८ ॥

हारालङ्कारयोग्यौ तु स्तनौ चोभौ सुशोभनौ ।
सुजातौ सहितौ लक्ष्म्या पीनौ वृत्तौ निरन्तरौ ॥ ९ ॥
कुड्मलाम्बुरुहाकारौ तव सुभ्रु पयोधरौ ।
कामप्रतोदाविव मां तुदतश्चारुहासिनि ॥ १० ॥
वलीविभंगचतुरं स्तनभारविनामितम् ।
कराग्रसंमितं मध्यं तवेदं तनुमध्यमे ॥ ११ ॥
दृष्ट्वैव चारुजघनं सरित्पुलिनसंनिभम् ।
कामव्याधिरसाध्यो मामप्याक्रामति भामिनि ॥ १२ ॥
जज्वाल चाग्निमदनो दावाग्निरिव निर्दयः ।
त्वत्संगमाभिसंकल्पविवृद्धो मां दहत्ययम् ॥ १३ ॥
आत्मदानप्रवर्षेण संगमांभोधरेण च ।
शमयस्व वरारोहे ज्वलंतं मन्मथानलं ॥ १४ ॥
मच्चित्तोन्मादनकरा मन्मथस्यशरोत्कराः ।
त्वत्संगमाशानिशितास्तीव्राः शशिनिभानने ॥ १५ ॥
मह्यं विदार्य हृदयमिदं निर्दयवेगिताः ।
प्रविष्टा ह्यसितापांगि प्रचंडाश्चंडदारुणाः ॥ १६ ॥
अत्युन्मादसमारंभाः प्रीत्युन्मादकरा मम ।
आत्मप्रदानसंभोगैर्मामुद्धर्तुमिहार्हसि ॥ १७ ॥
चित्रमाल्यांबरधरा सर्वाभरणभूषिता ।
कामं प्रकामं सेव त्वं मया सह विलासिनि ॥ १८ ॥
नार्हसीहासुखं वस्तुं सुखार्हा सुखवर्जिता ।
प्राप्नुह्यनुत्तमं सौख्यं मत्तस्त्वं मत्तगामिनि ॥ १९ ॥
स्वादून्यमृतकल्पानि पेयानि विविधानि च ।
पिबमाना मनोज्ञानि रममाणा यथासुखम् ॥ २० ॥
भोगोपचारान्विविधान्सौभाग्यं चाप्यनुत्तमम् ।
पानं पिब महाभागे भोगैश्चानुत्तमैः शुभैः ॥ २१ ॥

*After V. 11*

Edns and all MSS add:—

त्यजामि दारान्मम ये पुरातनाः ।
भवन्तु दास्यस्तव चारुहासिनि ॥

A² adds on the margin:—

त्यक्ष्यामि दारान् समयस्तवान्तिके ।
भवन्तु दास्यः सततं भजस्व माम् ॥

Edns A²BCEGHKLN continue:—

अहं च ते सुन्दरि दासवस्थितः ।
सदा भविष्ये वशगो वरानने ॥

M reads this as:—

अहं तवादेशकरो हि किङ्करः ।
स्थाने भव त्वं मम मण्डनं गृहे ॥

**After V. 15**

Edns BCDEGKMN add :—

वैशंपायन उवाच ।
एवमुक्तस्तु सैरन्ध्र्या कीचकः काममोहितः ।
जानन्नपि सुदुर्बुद्धिः परदाराभिमर्शने ॥ १ ॥
दोषान्बहून् प्राणहरान् सर्वलोकविगर्हितान् ।
प्रोवाचेदं सुदुर्बुद्धिर्द्रौपदीमजितेन्द्रियः ॥ २ ॥
नार्हस्येवं वरारोहे प्रत्याख्यातुं वरानने ।
मां मन्मथसमाविष्टं त्वत्कृते चारुहासिनि ॥ ३ ।
प्रत्याख्याय च मां भीरु वशगं प्रियवादिनम् ।
नूनं त्वमसितापांगि पश्चात्तापं करिष्यसि ॥ ४ ॥
अहं हि सुभ्रु राज्यस्य कृत्स्नस्यास्य सुमध्यमे ।
प्रभुर्वासयिता चैव वीर्ये चाप्रतिमः क्षितौ ॥ ५ ॥
पृथिव्यां मत्समो नास्ति कश्चिदन्यः पुमानिह ।
रूपयौवनसौभाग्यैर्भोगैश्चानुत्तमैः शुभैः ॥ ६ ॥
सर्वकामसमृद्धेषु भोगेष्वनुपमेष्विह ।
भोक्तव्येषु च कल्याणि कस्माद्दास्ये रता ह्यसि ॥ ७ ॥
मया दत्तमिदं राज्यं स्वामिन्यसि शुभानने ।
भजस्व मां वरारोहे भुंक्ष्व भोगाननुत्तमान् ॥ ८ ॥
एवमुक्ता तु सा साध्वी कीचकेनाशुभं वचः ।
कीचकं प्रत्युवाचेदं गर्हयन्त्यस्य तद्वचः ॥ ९ ॥

C omits from °बुद्धिः in 1*b* to °बुद्धिः in 2*b*. BE omit v 5. DK omit 7a, BE omit 8*b*; DK omit 9*b* and add:—

उवाच परमक्रुद्धा सैरन्ध्री कीचकं वचः ।

**After V. 18b[1]**

Edns& MSS & S. cl. add :—

कुलस्थः कूलमुत्तरं तर्तुमिच्छति मन्दात्मा ।

**After V. 20**

Edns A²CG add :—

तेषां प्रियां प्रार्थयतो न ते भुवि गत्वा दिवं वा शरणं भविष्यति ।
न वर्तते कीचक ते दृशा शुभं या तेन संजीवनमर्थयेत सा ॥ १ ॥

A[2] reads:—

निवर्ततां...चक चे दशा...भात् त्यज...ष्यति जीवितमद्य सुप्रियम्। for $b$, and adds:-
पाप नवेत्सि प्रभव दुरात्मन् दुर्वृत्तबुद्धे किल कीचकाधम ॥

## [SOUTHERN RECENSION.]

### After V. 2

ST adds:—

पश्चात्तु व्यादशे मासे वीर्योन्मत्तो महाबलः ।
तस्मिन्वर्षे गतप्राये प्रवासादागतस्तथा ॥
कीचको नाम मात्स्यस्य श्यालो नित्यं भृशं प्रियः ।

### After V. 3a

SK adds:—

तां देवीं तोषयामास तथा चान्तःपुरस्त्रियः ।
तस्मिन्वर्षे गतप्राये कीचकस्तु महाबलः ॥

### After V. 3

SG adds:—

सारमेयो मन्त्रपूतं होमपार्श्वगतं हविः ।

### After V. 4

ST adds:—

स तां सैरन्ध्रिवेषेण वसन्तीं राजवेश्मनि ।
उपगम्यानवद्याङ्गीं पाञ्चालीमिदमब्रवीत् ॥ १ ॥
कासि त्वं चारुसर्वाङ्गि श्यामावेदि कृशोदरि ।
तवै ह्यरूपं रूपं च भूषणैरपिवर्जितम् ॥ २ ॥
मन्ये त्वां देवलोकाच्च च्युतां तारां यदृच्छ
अभूषितापि ज्वलने का त्वं सौदामिनी यथा
रूपेण च वरारोहे नारीष्वप्रतिमा भुवि ॥ ३ ।

### After V. 6

SG, ST, SA read Kīcaka's speech as follows:—

दासस्तवाहं पृथुताम्रलोचने ।
वशानुगो वारणखेलगामिनि ॥
कन्दर्पबाणाभिहतोस्म्यनिन्दिते ।
खगो वसन्तेष्विव पुष्पमूर्छितः ॥ १ ॥
त्वमेवमाचारवती सुदर्शना ।
नान्याः स्त्रियः संपरिचर्तुमर्हसि ॥

किं राजवेश्मन्यसितायतेक्षणे ।
करोषि केशान्स्वयमेव भामिनि ॥ २ ॥
अन्या हि नार्यस्तव कर्म कुर्युः ।
प्रतीतरूपा तव चारुनेत्रे ॥
अधार्यमाणा विजनेव मंजरी ।
सुगात्रि किं जीर्यसि चारुहासिनि ॥ ३ ॥
त्यजामि दारान्मम ये पुरातनाः ।
भवामि दासश्च वशानुगश्च ते ॥
सुगात्रि मह्यं सुकृतेन ते शपे ।
यथा मम त्वं हृदये प्रतिष्ठिता ॥ ४ ॥
ममानुरूपा त्वमनिंद्यलोचने ।
स्वयं तदात्मानमिहानुचिन्तय ॥
प्रत्यक्षमेतत्तव चारुदर्शने ।
तथा वयस्तुल्यवपुर्हि चावयोः ॥ ५ ॥
प्रभूतरत्नावसथं सुभाजनम् ।
परैर्हि चाद्यैव ममोत्तमं गृहम् ॥
प्रासादमालाप्रविशालतोरणम् ।
कुबेरपर्जन्यनिवेशनोपमम् ॥ ६ ॥
प्रभूतशय्यासनपानभोजनम् ।
प्रविश्य तत्रैव सुखी चिरं वस ॥
यदस्ति तत्रावसथे मदर्पणम् ।
वसुप्रभावोपगतं ममान्तिके ॥ ७ ॥
ददामि तत्सर्वमधीरलोचने ।
त्वमस्य सर्वस्य सुगात्रि भाजनम् ॥
देवं प्रपद्ये शरणं वृषध्वजम् ।
त्रिलोचनं दक्षमखप्रणाशनम् ॥ ८ ॥
हरं भवं स्थाणुमुमापतिं शिवम् ।
त्वयाद्य मे सुभ्रु ददातु संगमम् ॥
त्वया समागम्य तु चारुलोचने ।
षडाननं द्वादशदीप्तलोचनम् ॥ ९ ॥
वरं वरार्हं वरदं वरेश्वरम् ।
वरेण तुष्टो वरगात्रि तोषये ॥
अयं तु राजा परसैन्यवारणः ।
श्यालः प्रियत्वान्मम चाद्य मेदिनीम् ॥ १० ॥
करिष्यते काममयं यथेप्सितो ।
रानीकफणीमधरौ स्मितस्य ते ॥

अप्राप्य तु त्वामहमद्य शोभने ।
श्रियं समृद्धामिव पापमाचरन् ॥ ११ ॥
व्रजेयमिन्द्रस्य निवेशनं शुभे ।
त्वया विसृष्टो ह्यपुनर्भवां गतिम् ॥
प्रियाणि दाराणि सुतान्कुलं धनम् ।
यशश्च कीर्तिर्ह्यथवापि जीवितम् ॥ १२ ॥
त्यजामि सर्वं सुकृतं च यत्कृतम् ।
प्रिये त्वदर्थं च जिजीविषाम्यहम् ॥ १३ ॥
अवारयन्तं बत शोकमुद्गतम् ॥
समुद्रवेगोपममातुरं भृशम् ॥ १४ ॥
भजस्व मामद्य शुभेन चेतसा ।
यथा न शुष्ये न पताम्यचेतनः ॥
यथा न गच्छेयमहं यमक्षयम् ।
तथा कुरुष्वाद्य विशाललोचने ॥ १५ ॥
अहं हि कान्ते त्वदधीनजीवितः ।
त्वया वियुक्तो न चिरं जिजीविषे ॥

**After V. 10**

SK adds:—

का त्वं कस्यासि कल्याणि कुतो वा त्वं वरानने ।
प्राप्ता विराटनगरं तत्वमाचक्ष्व शोभने ॥ १ ॥
रूपमग्र्यं तथा कान्तिः सौकुमार्यमनुत्तमम् ।
कान्त्या विभाति वक्त्रं ते शशाङ्क इव निर्मलम् ॥ २
नेत्रे सुविपुले सुभ्रु पद्मपत्रनिभे शुभे ।
धाक्यं ते चारुसर्वाङ्गि परपुष्टरुतोपमम् ॥ ३ ॥
एवंरूपा मया नारी काचिदन्या महीतले ।
न दृष्टपूर्वा सुश्रोणि यादृशी त्वमनिन्दिते ॥ ४ ॥
लक्ष्मीः पद्मालया का त्वमथभूतिः सुमध्यमे ।
ह्रीः श्रीः कीर्तिरथो कान्तिरासां का त्वं वरानने ॥ ५
अतीवरूपिणी किं त्वमनङ्गाङ्गविहारिणी ।
अतीव भ्राजसे सुभ्रु प्रभेवेन्दोरनुत्तमा ॥ ६ ॥
अपि चेक्षणपक्ष्माणां स्मितज्योत्स्नोपमं शुभम् ।
दिव्यांशुरश्मिभिर्वृत्तं दिव्यकान्तिमनोरमम् ॥ ७ ॥
निरीक्ष्य वक्त्रचन्द्रं ते लक्ष्म्याऽनुपमया युतम् ।
कृत्स्ने जगति को नेह कामस्य वशगो भवेत् ॥ ८ ॥

हारालङ्कारयोग्यौ तु स्तनौ चोभौ सुशोभनौ ।
सुजातौ सहितौ लक्ष्म्या पीनौ वृत्तौ निरन्तरौ ॥ ९ ॥
कुड्मलाम्बुरुहाकारौ तव सुभ्रु पयोधरौ ।
कामप्रतोदाविव मां तुदतश्चारुहासिनि ॥ १० ॥
वलीविभङ्गचतुरं स्तनभारविनामितम् ।
कराग्रसम्मितं मध्यं तवेदं तनुमध्यमे ॥ ११ ॥
दृष्ट्वैव चारु जघनं सरित्पुलिनसन्निभम् ।
कामव्याधिरसाध्यो मामप्याक्रामति भामिनि ॥ १२ ॥
जज्वाल चाग्निमदनो दावाग्निरिव निर्दयः ।
त्वसङ्गमाभिसङ्कल्पविवृद्धो मां दहत्ययम् ॥ १३ ॥
आत्मदानप्रवर्षेण संगमाम्भोधरेण च ।
शमयस्व वरारोहे ज्वलन्तं मन्मथानलम् ॥ १४ ॥
मच्चित्तोन्मादनकरा मन्मथस्य शरोत्कराः ।
त्वत्सङ्गमाशानिशितास्तीव्राः शशिनिभानने ॥
मह्यं विदार्य हृदयमिदं निर्दयवेगिताः ॥ १५ ॥
प्रविष्टा ह्यसितापाङ्गि प्रचण्डाश्चण्डदारुणाः ।
अत्युन्मादसमारम्भाः प्रीत्युन्मादकरा मम ॥
आत्मप्रदानसंभोगैर्मामुद्धर्तुमिहार्हसि ॥ १६ ॥
चित्रमाल्याम्बरधरा सर्वाभरणभूषिता ।
कामं प्रकामं सेव त्वं मया सह विलासिनि ॥ १७ ॥
नार्हसीहासुखं वस्तुं सुखार्हा सुखवर्जिता ।
प्राप्नुह्यनुत्तमं सौख्यं मत्तस्त्वं मत्तगामिनि ॥ १८ ॥
स्वादून्यमृतकल्पानि पेयानि विविधानि च ।
पिबमाना मनोज्ञानि रममाणा यथा सुखम् ॥ १९ ॥
भोगोपचारान् विविधान् सौभाग्यं चाप्यनुत्तमम् ।
पानं पिब महाभागे भोगैश्चानुत्तमैः शुभैः ॥ २० ॥

### After V. 11

S. cl. adds :—

त्यजामि दारान्मम ये पुरातनाः ।
भवन्तु दास्यस्तव चारुहासिनि ॥

SK alone adds to this :—

अहं च ते सुंदरि दासवत्स्थितः ।
सदा भविष्ये वशगो वरानने ॥

SK, SG, SA add :—

एवमुक्तानवद्यांगी कीचकेन दुरात्मना ।
द्रौपदी तमुवाचेदं सैरंध्रीवेषधारिणी ॥ १ ॥

### After V 12

SG, ST, SA add :—

एतेनैव च यत्नेन वित्तेन च मनोरमा ।
स्वेष्टदारेषु मेधावी कुरुते यत्नमुत्तमम् ।
स्वदारनिरतो ह्याशु नरो भद्राणि पश्यति ॥ २ ॥
न चाधर्मेण लिप्येत न चाकीर्तिमवाप्नुयात् ।
स्वदारेऽभिरतिर्धर्मो मृतस्यापि न संशयः ॥ ३ ॥
स्वदारा एव मर्त्यस्य इहलोके परत्र च ।
प्रेतकार्याणि कुर्वन्ति निवापैस्तर्पयन्ति हि ॥ ४ ॥
तदक्षय्यं च धर्म्यं च स्वर्ग्यमाहुर्मनीषिणः ।
स्वजातिदारे ये पुत्रा जायंते कुलपूजिताः ॥ ५ ॥
ते क्षेत्रजाश्च पित्र्याश्च श्रूयंते कुलवर्धनाः ।
तस्मात्स्वदारनिरता भवंति पुरुषाः शुभाः ॥ ६ ॥

SG adds after v. 6:—परदाररतेः पुंसः सततिस्तस्य नश्यति । पतंति पि।।ो स्वयं पश्चात्सतत्यथ ।

### After V. 14a

ST adds :—

स्वजात्याचारकरणं धर्माचरणमेव च ।

### After V. 15

SK adds:—

वैशंपायन उवाच ।
एवमुक्तस्तु सैरंध्रया कीचकः काममोहितः ।
जानन्नपि सुदुर्बुद्धिः परदाराभिमर्शने ॥ १ ॥
दोषान् बहून् प्राणहरान् सर्वलोकविगर्हितान् ।
प्रोवाचेदं सुदुर्बुद्धिर्द्रौपदीमजितेन्द्रियः ॥ २ ॥
नार्हस्येवं वरारोहे प्रत्याख्यातुं वरानने ।
मां मन्मथसमाविष्टं त्वत्कृते चारुहासिनि ॥ ३ ॥
प्रत्याख्याय च मां भरु वशगं प्रियवादिनम् ।
नूनं त्वमसितापाङ्गि पश्चात्तापं करिष्यसि ॥ ४ ॥
अहं हि सुभ्रु राज्यस्य कृत्स्नस्यास्य सुमध्यमे
प्रभुर्वासयिता चैव वीर्ये चाप्रतिमः क्षितौ ॥ ५ ॥
पृथिव्यां मत्समो नास्ति कश्चिदन्यः पुमानिह ।
रूपयौवनसौभाग्यैर्भोगैश्चानुत्तमैः शुभैः ॥ ६ ॥
सर्वकामसमृद्धेषु भोगेष्वनुपमेष्विह ।
भोक्तव्येषु च कल्याणि कस्माद्दास्ये रता ह्यसि ॥ ७ ॥
मयादत्तमिदं राज्यं स्वामिन्यसि शुभानने ।
भजस्व मां वरारोहे भुंक्ष्व भोगाननुत्तमान् ॥ ८ ॥

एवमुक्तातु सा साध्वी कीचकेनाशुभं वचः ।
कीचकं प्रत्युवाचेदं गर्हयन्त्यस्य तद्वचः ॥ ९ ॥

### After V. 15

SG, ST, SA add:—

स्प्रष्टुं द्रष्टुं च वा सूत कामदग्धेन चेतसा ।
मां हि त्वमभिमन्वानः सूतपुत्र नशिष्यसि ।
आशु चाद्यैव नचिरात् सपुत्रपशुबान्धवः ॥

### After V. 16

SA, SG, ST add:—

पतिष्यस्यवशास्तूर्णं वृन्तात् तालफलं यथा ॥ १ ॥

SA continues:—

कामवेगोद्धतांगेन स्प्रष्टुं दुष्टेन चेतसा ।

### After V. 17

SA, SG, ST add:—

सीतार्थं हि दशग्रीवं सानुबन्धममर्षिणम् ।
रामो हत्वा तु मुदितः तथा त्वां पतयो मम ॥
पतिष्यसि यथा मूर्खः पाताले क्रूरदर्शने ॥ १ ॥

*b* omitted in SG, ST.

### After V. 18

SA, SG, ST add:—

यो मामज्ञाय कामार्तः अवद्धानि प्रभाषते ।
अशक्तस्तुपुमांच्छैलं न लंघयितुमर्हति ॥ १ ॥
दिशः प्रपन्नो गिरिगह्वराणि वा गुहां प्रविष्टोंतगतोपि वा क्षितेः ।
ज़ुव्हन् जपन् वा प्रपतन् गिरेस्तटे हुताशनादित्यगतिं गतोऽपि वा ॥ २ ॥
भार्यावमंता पुरुषो महात्मनाम् न जातु मुच्येत कथं च नाहतः ।
मोघं तवेदं वचनं भविष्याति प्रतोदनं वा तुलया महागिरेः ॥ ३ ॥
दाराभिमर्शी पुरुषो महात्मनां गत्वापि देवान् शरणं न विन्दति ।
इमां मतिं कीचक मुञ्च कामिनां मा नीनशो जीवितमात्मनः प्रियम् ॥ ४ ॥
हुताशसंप्रज्वालितं महावने निदाघमध्यान्ह इवातुरः स्वयम् ।
प्रवेष्टुकामोसि वधाय चात्मनः कुलस्य सर्वस्य विनाशनाय च ॥ ५ ॥
न देवगन्धर्वमहर्षिसन्निधौ न नागलोकेऽसुरराक्षसालये ।
इह स्थितां मामवमत्य चेतसा न जीवितार्थे शरणं त्वमाप्स्यसि ॥ ६ ॥

After v. 4 above, SG, ST add:—

त्वंकालपाशं प्रतिमुच्य कंठे प्रवेष्टुमिच्छस्यथ दुष्प्रवेशम् ।

After V. 20

SK adds :—

तेषां प्रियां प्रार्थयतो न ते भुवि गत्वा दिवं वा शरणं भविष्यति ।
न वर्तते कीचक ते दशा शुभं या तेन संजीवनमर्थयेत सा ॥ १ ॥

---

## ADHYĀYA 15.

[ *NORTHERN RECENSION.* ]

After V. 2a

MSS. & Edns add :—

येनोपायेन सैरन्ध्री भजेन्मां गजगामिनी ।

After V. 8a

N adds :—

भक्ष्यांश्च विविधाकारान्बहूंश्चोच्चावचांस्तदा ।

[ *SOUTHERN RECENSION.* ]

After V. 1a

S. cl. adds :—

प्रविश्य राजभवनं भगिन्या अग्रतः स्थितः ।
सोऽभिवीक्ष्य सुकेशान्तां सुदेष्णां भगिनीं प्रियाम् ॥
स तु मूर्ध्न्यञ्जलिं कृत्वा भगिन्याश्चरणावुभौ ।
संमोहाभिहतस्तूर्णं वातोद्धूत इवार्णवः ॥
स प्रोवाच सुदुःखार्तो भगिनीं निःश्वसन् मुहुः ।
अव्यक्तमृदुना साम्ना शुष्यता च पुनः पुनः ॥

After V. 2

S. cl. adds :—

यदीयमनवद्यांगी न मामद्यापि कांक्षते ।
चेतसाभिप्रसन्नेन गतोऽस्मि यमसादनं ॥ १ ॥

After V. 4

S. cl adds :—

( सुदेष्णोवाच in SG )
शरणागतेयं सुश्रोणी मया दत्ताभया च सा ।
शुभाचारा च भद्रं ते नैनां वक्तुमिहोत्सहे ॥ १ ॥

एषा हि शक्या नान्येन स्प्रष्टुं पापेन चेतसा ।
गन्धर्वाः किल पञ्चैमां रक्षंति रमयन्ति च ॥ २ ॥
एवमेषा ममाचष्ट तथा प्रथमसंगमे ।
तथैव गजनासोरूः सत्यमाह ममान्तिके ॥ ३ ॥
ते हि क्रुद्धा महात्मानो नाशयेयुर्हि जीवितम् ।
राजा चैव समीक्ष्यैनां संमोहं गतवानिह ॥ ४ ॥
मया च सत्यवचनैरनुनीतो महीपतिः ।
सोप्येनामनिशं दृष्ट्वा मनसैवाभ्यनन्दत ॥ ५ ॥
भयाद्गन्धर्वमुख्यानां जीवितस्योपघातिनाम् ।
मनसापि ततस्त्वेनां न चिन्तयति पार्थिवः ॥ ६ ॥
ते हि क्रुद्धा महात्मानो गरुडानिलतेजसः ।
दहेयुरपि लोकांस्त्रीन्युगांतेष्विव भास्करः ॥ ७ ॥
सैरन्ध्र्या ह्येतदाख्यातं मम तेषां महद्बलम् ।
तव चाहमिदं गुह्यं स्नेहाद्वक्ष्यामि बन्धुवत् ॥ ८ ॥
मा गमिष्यसि वै कृच्छ्रां गतिं परमदुर्गमाम् ।
बलिनस्ते रुजं कुर्युः कुलस्य च धनस्य च ॥ ९ ॥
तस्मान्नास्यां मनः कर्तुं यदि प्राणाः प्रियास्तव ।
न चिन्तयेथा मा गास्त्वं मत्प्रियं च यदीच्छसि ॥ १० ॥

वैशंपायन उवाच ।

एवमुक्तस्तु दुष्टात्मा भगिनीं कीचकोब्रवीत् ।
गन्धर्वाणां शतं चापि सहस्रमयुतानि वा ॥ ११ ॥
अहमेको वधिष्यामि गन्धर्वान् पंच किं पुनः ।
न च त्वमभिजानीषे स्त्रीणां गुह्यमनुत्तमम् ॥ १२ ॥
पुत्रं वा किल पौत्रं वा भ्रातरं वा मनस्विनम् ।
रहसीह नरं दृष्ट्वा नानागन्धविभूषितम् ॥ १३ ॥
योनिरुत्स्विद्यते स्त्रीणां सतीनामपि च श्रुतम् ।
मां निरीक्ष्यानुलिप्तांगं सर्वाभरणभूषितम् ॥ १४ ॥
वशमेष्यति सैरन्ध्री मन्मथेनाभिपीडिता ।
सा त्वं दृष्ट्वा ब्रूहि चैनां मम चेज्जीवितं प्रियम् ॥ १५ ॥

वैशंपायन उवाच ।

एवमुक्ता सुदेष्णा तु शोकेनाभिप्रपीडिता ।
अहो दुःखमहोकृच्छ्रमहो पापमिति स्म ह ॥ १६ ॥
प्रारुदच्छ्रुशदुःखार्ता विपाकं तस्य वीक्ष्य सा ।
पातालेषु पतत्येष विलपन् वडवामुखे ॥ १७ ॥

त्वत्कृते विनशिष्यन्ति भ्रातरः सुहृदश्च मे ।
किंनु शक्यं मया कर्तुं यत्त्वमेवमभिप्लुतः ॥ १८ ॥
न च श्रेयोऽभिजानीषे काममेवानुवर्तसे ।
ध्रुवं गतायुस्त्वं पाप यदेवं काममोहितः ॥ १९ ॥
अकर्तव्ये हि मां पापे नियुनङ्क्षि नराधम ॥
अपि चैतत्पुरा प्रोक्तं निपुणैर्मनुजोत्तमैः ॥ २० ॥
एकस्तु कुरुते पापं स्वजातिस्तेन हन्यते ॥
गतस्त्वं धर्मराजस्य विषयं नात्र संशयः ॥ २१ ॥
अदूषितमिदं सर्वं स्वजनं घातयिष्यसि ॥
एतत्तु मे दुःखतरं येनाहं भ्रातृसौहृदात् ॥ २२ ॥
विदितार्था करिष्यामि तुष्टो भव कुलक्षये ॥
गच्छ शीघ्रमितस्त्वं हि स्वमेव भवनं शुभम् ॥ २३ ॥

**After V. 5a**

S. cl. adds:—

कृते चान्ने सुरायां च प्रेषयिष्यसि मे पुनः ।

**After V. 6**

S. cl. adds:—

सद्य कृतमिदं सर्वं शेषमत्रानुचिंतय ।
सुदेष्णयैवमुक्तस्तु कीचकः कालचोदितः ।

**After V. 8a**

SG, SK add:—

भक्ष्यांश्च विविधाकारान्बहूंश्चोच्चावचांस्तदा ।

**After V. 8**

S. cl. adds:—

त्वरावान्कालपाशेन कंठे बद्धः पशुर्यथा ॥
नावबुध्यत मूढात्मा मरणं समुपस्थितम् ॥ १ ॥
आनीतायां सुरायां तु कृते चान्ने सुसंस्कृते ॥
कीचकः पुनरागम्य सुदेष्णां वाक्यमब्रवीत् ॥ २ ॥
मधुमांसं च बहुधा भक्ष्याश्च बहुधा कृताः ॥
सुदेष्णे ब्रूहि सैरन्ध्रीं यथा सा मे गृहं व्रजेत् ॥ ३ ॥
केनचित्त्वद्य कार्येण त्वर शीघ्रं मम प्रियम् ॥
अहं हि शरणं देवं प्रतिपद्ये वृषध्वजम् ॥ ४ ॥
समागमं मे सैरंध्र्या मरणं वा दिशेति वै ॥

वैशंपायन उवाच ।

सा तमाह विनिःश्वस्य प्रतिगच्छ स्वकं गृहम् ॥ ५ ॥

एवाहमपि सैरंध्रीं सुरार्थं तूर्णमादिशे।
एवमुक्तस्तु पापात्मा कीचकस्त्वरितः पुनः ॥ ६ ॥
स्वगृहं प्राविशत्तूर्णं सैरंध्रीं गतमानसः।
कीचकं तु गतं ज्ञात्वा त्वरमाणं स्वकं गृहम् ॥
सैरंध्रीं तत आहूय सुदेष्णा वाक्यमब्रवीत् ॥ ७ ॥

S. cl adds:—

**After V. 10**

वैशंपायन उवाच ।
सुदेष्णयैवमुक्ता सा निःश्वसंती नृपात्मज ।
अब्रवीच्छोकसंतप्ता नाहं तत्र व्रजामि वै ॥
सूतपुत्रो हि मां भद्रे कामात्मा चाभिमन्यते ॥

**After V. 13a**

S. cl. adds :—

तथा निवसमानायां यथाऽहं नान्यचारिणी ।

**After V. 14**

S. cl. adds :—

कथंनु वै तत्र गतां मर्षयेन्मामबांधवाम् ।

**After V. 15**

ST adds :—

जानियात्त्वमि मा पापः सकामोयमिहागतः ।
अन्यां प्रेषय कैकेयि संरक्षाहमिह त्वया ॥

**After V. 15**

S. cl. adds :—

कीचकस्यालयं देवि न यामि भयकंपिता ।
यद्यदन्यच्च मे कर्म करोमि च सुदुष्करम् ॥ १ ॥
एकमुक्ता तु पांचाल्या दैवयोगेन कैकयी।
तां विराटस्य महिषी क्रुद्धा भूयोन्वशासत ॥ २ ॥
कीचकं चैव गच्छ त्वं बलात्कारेण चोदिता ।
नास्ति मेऽन्या त्वया तुल्या सा त्वं शीघ्रतरं व्रज ॥ ३ ॥
अवश्यं त्वेवं गंतव्यं किमर्थं मां विवक्षसि ।
शीघ्रं गच्छ त्वरस्वेति मत्प्रीतिवशमाचर ॥ ४ ॥

**After V. 16a**

S. cl. adds:—

उक्त्वा चैनां बलाच्चैव विनियुज्य प्रभुत्वतः ।

SG adds before this वैशंपायन उवाच ।

Before V. 17

S. cl. adds:—

या सुजाता सुगन्धा च तामानय सुरामिति ।

After V. 18

SK, ST, SG, SA add:—

यथाहं पाण्डुपुत्रेभ्यः पंचभ्यो नान्यगामिनी ।
तेन सत्येन मां दृष्ट्वा कीचको मा वशं नयेत् ॥

S. cl. adds (& herewith begins a new Adhyāya in this

अकीर्तयत सुश्रोणी धर्मं शक्रं दिवाकरम् ।
मारुतं चाश्विनौ देवौ कुबेरं वरुणं यमम् ॥ १ ॥
रुद्रमग्निं भगं विष्णुं स्कन्दं पूषणमेव च ।
सावित्रीसहितं चापि ब्रह्माणं पर्यकीर्तयत् ॥ २ ।
इत्येवं मृगशावाक्षी सुश्रोणी धर्मचारिणी ॥ ३

After V. 20

S cl. adds:—

प्रतस्थे सा सुकेशान्ता त्वरमाणा पुनः पुनः ।
विलम्बमाना विवशा कीचकस्य निवेशनम् ॥

---

## ADHYĀYA 16.

[ *NORTHERN RECENSION.* ]

After V. 2

Edns and all MSS add:—

आहरन्तु तव प्रेष्याः कौशिकान्याजिनानि च ।

After V. 5

EdnsACGHL add:—

द्रौपद्युवाच ।
यथैवाहं नाभिचरे कदाचित् ।
पतीन्मदाद्वै मनसापि जातु ॥
तेनैव सत्येन वशीकृतं त्वाम् ।
द्रष्टास्मि पापं परिकृष्यमाणम् ॥ १ ॥

After V. 7b

Edn[1] DN add:—

चिक्षेप तं गाढममृष्यमाणा ।
प्रवेपमानातिरुषा शुभांगी ॥

### After V. 13

Edns CDG add:—

धूमच्छाया ह्यमजतां नेत्रे चोच्छ्रितपक्ष्मणी ।
सस्वेदा भ्रुकुटी चोग्रा ललाटे समवर्तत ॥
हस्तेन ममृदे चैव ललाटं परवीरहा ।
भूयश्च त्वरितः क्रुद्धः सहसोत्थातुमैच्छत ॥ २ ॥

### After V. 14

Edns L add:—

तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिम् ।
स तमावारयामास भीमसेनं युधिष्ठिरः ॥ १ ॥
आलोकयसि किं वृक्षं सूद दारुकृतेन वै ।
यदि ते दारुभिः कृत्यं बहिर्वृक्षान्निगृह्यताम् ॥ २ ॥

K adds:—

त्रिशंकोर्द्वादशांगस्य चतुर्विंशतिपर्वणः ।
यस्त्रिषष्टिशतानस्य पकाशं न क्षमी कथं ॥ १ ॥

### Before V. 17

A adds:—

इदं ब्रुवन्ती सा देवी राजनं च वशं नयेत् ।

### Before V. 18

Edns BCDGKLN add:—

ये दद्युर्न च याचेयुर्ब्रह्मण्याः सत्यवादिनः ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ।

### After V. 23

Edns ABCDEGHKLN add:—

मयापि शक्यं किं कर्तुं विराटे धर्मदूषणे ॥

### Before V. 30

D adds:—

सभ्या ऊचुः ।
सत्यं कथय सैरंध्रि अपराधं यथाक्रमम् ।
सैरंध्री उवाच ।
सुदेष्णयाहं मद्यार्थं प्रेषिता कीचकगृहे ।
मां तदा कामयामास भार्यार्थं,धर्मचारिणीम् ॥

**Before V. 32**

Ends ABCDEGMN add:—

न हीदृशी मनुष्येषु सुलभा वरवर्णिनी ।
नारी सर्वानवद्यांगी देवीं मन्यामहे वयम् ॥

**After V. 36**

Edns ABCDEGKN add:—

व्यपनेष्यंति ते दुःखं येन ते विप्रियं कृतम् ।

**Before V. 37**

Edns and all MSS add:—

गच्छ गच्छेति गंधर्वाः करिष्यंति प्रियं तव ।

**Before V. 47**

Edns and all MSS add :—

किं करोमि क्व गच्छामि कथं कार्यं भवेन्मया ।

**After V. 48**

Edns and all MSS add:—

भवनं भीमसेनस्य क्षिप्रमायतलोचना ।

**After V. 48**

Edns and all MSS add :-

दुःखेन महता युक्ता मानसेन मनस्विनी ।

**After V. 49a**

Edns and all MSS add :—

सर्वश्वेतेव माहेयी वने जाता त्रिहायनी ।

**Before V. 50**

Edns and all MSS add :—

सा लतेव महाशालं फुल्लं गोमतितीरजम् ।

**After V. 50a**

Edns and all MSS add :—

बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता ।

**After V. 51a**

Edns and all MSS add :—

वीणेव स्वरसंपन्ना गान्धारस्वरमूर्च्छिता ।

After V. 51

$A^2$DN add:—

परिसंस्पृश्य पाणिभ्यां सुप्तं प्राबोधयत् प्रियम् ।
श्रीरिवाग्रथा महोत्साहा सुप्तं कृष्णं महार्णवे ॥ १ ॥
शामावदता शयने शयानमृषभेक्षणम् ।
सा शचीव सहस्राक्षं रुद्राणीव च शंकरम् ॥ २ ॥
सावित्री चैव ब्रह्माणं गुहं षष्ठीव भामिनी ।
भीमं प्राबोधयत्कृष्णा लक्ष्मीर्दामोदरं यथा ॥ ३ ॥
देवगर्भसमाना सा प्रियं प्रियवचः प्रियाः ।

* * * * *

एवमुक्त्वाथ तां शालां प्रविवेश मनस्विनी ।
यस्यां भीमस्तथा शेते मृगराज इव श्वसन् ॥ १ ॥
तस्या रूपेण सा शाला भीमस्य च महात्मनः ।
संमूर्छितैव कौरव्य प्रजज्वाल च तेजसा ॥ २ ॥

Edns DKN add these two verses *with v. 53 of the text preceding these two*, after *v.* 48 of the text. ABCEFGHLM add these two verses after *v. 53 of the text.*

[ *SOUTHERN RECENSION.* ]

Before V. 1

S. cl. adds:—

श्लक्ष्णं चोवाच वाक्यं स कीचकः काममूर्छितः ।

After V. 1

S. cl. adds :—

कुरुष्व च मयि प्रीतिं वशे चोपायनयस्व माम् ।

After V. 2

ST adds :—

आहरस्व च वस्त्राणि आविकान्यजिनानि च ।

After V. 3a

S. cl. adds :—

सर्वरत्नमयीं मालां कुंडले च हिरण्मये ।
वासांसि चंदनं माल्यं धूपमुग्रां च वारुणीम् ॥ १ ॥
प्रतिगृह्णीष्व भद्रं ते विहर त्वं यथेच्छसि ।
प्रीत्या मे कुरु पद्माक्षि प्रसादं प्रियदर्शने ॥ २ ॥

After V. 3

S. cl. adds :—

भजस्व मां विशालाक्षि भर्ता ते सदृशोऽस्म्यहम् ।
उपसर्प वरारोहे मेरुमर्कप्रभा यथा ॥ १ ॥

वैशंपायन उवाच ।

स मूढः कीचकस्तत्र प्राप्तां राजीवलोचनाम् ।
अब्रवीत् द्रौपदीं दृष्ट्वा दुरात्मा ह्यात्मसंमतः ॥ २ ॥
कीचकेनैवमुक्ता सा द्रौपदी वरवर्णिनी ।
अब्रवीत्तमनाचारं नेदृशं वक्तुमर्हसि ॥ ३ ॥
नाहं शक्या त्वया स्प्रष्टुं श्वपचेनेव ब्राह्मणी ।
गंतुमिच्छसि दुर्बुद्धे गतिं दुर्गतरान्तराम् ॥ ४ ॥
यत्र गच्छंति बहवः परदाराभिमर्शकाः ।
नराःसंभिन्नमर्यादाः कीटवच्चाशुभाश्रयाः ॥ ५ ॥

After V. 4

S. cl. adds:—

दीयतां मे सुरा शीघ्रं सूतपुत्र व्रजाम्यहम् ।

After V. 5

S. cl. adds :—

किं त्वं यास्यसि कल्याणि मदर्थं त्वमिहागता ।

After V. 9

S. cl adds :—

ब्राह्मणानां च वृद्धाना क्षत्रियाणां च पश्यतां ।
तस्याः पादाभितप्ताया मुखाद्रुधिरमास्रवत् ॥

After V. 11

S. cl. adds :—

तां दृष्ट्वा तत्र ते सभ्या हाहाभूताः समंततः ।
न युक्तं सूतपुत्रेति कीचकेति च तेऽवदन् ॥
किमियं वध्यते बाला कृपणा चाप्यबांधवा ।

After V. 12

S. cl. adds :—

तां दृष्ट्वा भीमसेनस्य क्रोधादास्रमवर्तत ॥
धूमोच्छ्वासः समभवन्नेत्रे चोच्छ्रितपक्ष्मणी ।
सस्वेदा भ्रुकुटी चोग्रा ललाटे समवर्तत ॥

भूयः संचरितः क्रुद्धः सहसोत्थाय चासनात् ।
निरैक्षत द्रुमं दीर्घं राजानं चाप्यवैक्षत ॥
वधमाकांक्षमाणं तं कीचकस्य दुरात्मनः ।
आकारेणैव भीमं स प्रत्यपेधद्युधिष्ठिरः ॥ ५ ॥
तस्य राजा शनैः संज्ञां कुन्तीपुत्रो युधिष्ठिरः ।
चकार भीमसेनस्य रोषाविष्टस्य धीमतः ॥ ६ ॥
प्रत्याख्यानं तदा चाह कंको नाम युधिष्ठिरः ।
सूद मा साहसं कार्षीः फलितोऽयं वनस्पतिः ॥ ७ ॥
नात्र शुष्काणि काष्ठानि सन्ति यानि च कानि च ।
यदि ते दारुकृत्यं स्यान्निष्क्रम्य नगराद्बहिः ॥ ८ ॥
समूलं शातयेर्वृक्षं श्रमस्ते न भविष्यति ।
यस्य चार्द्रस्य वृक्षस्य शीतच्छायां समाश्रयेत् ॥ ९ ॥
न तस्य पर्णं द्रुह्येत पूर्ववृत्तमनुस्मरन् ।
न क्रोधकालसमयः सूद मा चापलं कृथाः ॥
अपूर्णोऽयं द्विपक्षो नो नेदं बलवतां बहु ॥ १० ॥

## After V. 14

S. cl. adds :—

भीमसेनस्तु तद्वाक्यं श्रुत्वा परपुरंजयः ॥
सहसोत्पतितं क्रोधं न्ययच्छद्धृतिमान्बलात् ॥ १ ॥
इङ्गितज्ञः स तु भ्रातुस्तूर्णीमासीत् वृकोदरः ।
भीमस्य च समारंभं दृष्ट्वा राज्ञोऽस्य चेष्टितम् ॥ २ ॥
द्रौपदी चाधिकं क्रोधात्प्रारुदत्सा पुनः पुनः ॥
कीचकेनानुगमनात्कृष्णा ताम्रायतेक्षणा ॥ ३ ॥

SG, ST, SA add :— वैशंपायन उवाच । before this.

## After द्रौप° V. 16

S. cl. adds :—

प्रजारक्षणशीलानां राज्ञां दमिततेजसाम् ।
कार्यानुपालनं नित्यं धर्मे सत्ये च तिष्ठताम् ॥ १ ॥
स्वप्रजायां प्रजायां च विशेषं नाधिगच्छताम् ।
प्रियेष्वपि च यथ्येषु समत्वं ये समाश्रिताः ॥ २ ॥
विचारेषु प्रवृत्तेषु समं कार्यानुदर्शिना ।
राज्ञा धर्मासनस्थेन जितौ लोकावुभावपि ॥ ३ ॥
राजन् धर्मासनस्थो हि रक्ष मां त्वमनागसम् ॥ ४ ॥
अहं त्वनपराध्यन्ती कीचकेन दुरात्मना ।
पश्यतस्ते महाराज हता पादेन दासिवत् ॥ ५ ॥

त्वत्समक्षं नृपश्रेष्ठ निष्पिष्टा वसुधातले ।
अनागसं कृपार्हां मां स्त्रियं त्वं परिपालय ॥ ६ ॥

रक्ष मां कीचकाद्भीतां धर्मं रक्ष नरेश्वर ।
मत्स्याधिप प्रजा रक्ष पिता पुत्रानिवौरसान् ॥ ७ ॥

यस्त्वधर्मेण कार्याणि मोहात्मा कुरुते नृपः ।
अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥ ८ ॥

मत्स्यानां कुलजस्त्वं हि तेषां सत्यं परायणम् ।
त्वं किलैवंविधो जातः कुले धर्मपरायणे ॥ ९ ॥

अतस्त्वाहमभिक्रंदे शरणार्थं नराधिप ।
त्राहि मामद्य राजेन्द्र कीचकात्पापपूरुषात् ॥ १० ॥

अनाथामिह मां ज्ञात्वा कीचकः पुरुषाधमः ।
प्रहरत्येव नीचात्मा न तु धर्ममवेक्षते ॥ ११ ॥

अकार्याणामनारंभात्कार्याणामनुपालनात् ।
प्रजासु ये सुवृत्तास्ते स्वर्गमायान्ति भूमिपाः ॥ १२ ॥

कार्याकार्यविशेषज्ञाः कामकारेण पार्थिवाः ।
प्रजासु किल्बिषं कृत्वा नरकं यान्त्यधोमुखाः ॥ १३ ॥

नैव यज्ञैर्न वा दानैर्न गुरोरुपसेवनात् ।
प्राप्नुवंति तथा धर्मं यथा कार्यानुपालनात् ॥ १४ ॥

अपि चेदं पुरा ब्रह्मा प्रोवाचेन्द्राय पृच्छते ।
द्वंद्वं कार्यमकार्यं च लोके चासत्परं यथा ॥ १५ ॥

धर्माधर्मौ पुनर्द्वन्द्वं विनियुक्तमथापि वा ।
क्रियाणामक्रियाणां च प्रापणे पुण्यपापयोः ॥ १६ ॥

प्रजायां सृज्यमानायां पुरा ह्येतदुदाहृतम् ।
एतद्वो मानुषाः सम्यक्कार्यं द्वंद्वनयं भुवि ॥ १७ ॥

अस्मिन्सुनीते दुर्नीते लभते कर्मजं फलम् ॥
कल्याणकारी कल्याणं पापकारी च पापकम् ॥ १८ ॥

तेन गच्छति संसर्गं स्वर्गाय नरकाय वा ।
सुकृतं दुष्कृतं वाऽपि कृत्वा मोहेन मानवः ॥
पश्चात्तापेन तप्येत स्वबुध्या मरणं गतः ॥ १९ ॥

एवमुक्त्वा परं वाक्यं विससर्ज शतक्रतुम् ।
शक्रोप्यापृच्छ्य ब्रह्माणं देवराज्यमपालयत् ॥ २० ॥

यथोक्तं देवराजेन ब्रह्मणा परमेष्ठिना ।
तथा त्वमपि राजेन्द्र कार्याकार्ये स्थिरो भव ॥ २१ ॥

[ End of Adh. in S. cl. ]

वैशंपायन उवाच ।

एवं विलपमानायां पाञ्चाल्यां मत्स्यपुंगवः ।
अशक्तः कीचकं तत्र शासितुं बलदर्पितम् ।
विराटराजः सूतं तु सान्त्वेनैव न्यवारयत् ॥ २२ ॥
कीचकं मत्स्यराजेन कृतागसमनिंदिता ।
नापराधानुरूपेण दण्डेन प्रतिपादितम् ॥ २३ ॥
पाञ्चालराजस्य सुता दृष्ट्वा सुरसुतोपमा ।
धर्मज्ञा व्यवहाराणां कीचके कृतकिल्बिषे ॥
पुनः प्रोवाच राजानं स्मरन्ती धर्ममुत्तमम् ॥ २४ ॥
संप्रेक्ष्य च वरारोहा सर्वांस्तत्र सभासदः ।
राजानुवर्तनपरान्कीचकं च कृतागसम् ॥
विराटं चाह पाञ्चाली दुःखेनाविष्टचेतना ॥ २५ ॥

... ... ... ...

न धर्मं कीचको वेत्ति राजभृत्यास्तथैव च ।

द्रौपद्युवाच ।

SG, ST add :—

(इतः प्रमाणान्तरिते षष्ठे जनपदान्तरे ।
गंधर्वाः पतयोमह्यं कार्यकालानुकांक्षिणः ॥)
न राजा विनयं ब्रूते अमात्याश्च न जानते ॥ २६ ॥
नोपालभे त्वां नृपते विराटं नृपसंसदि ।
नाहमेतेन युक्ता वै हन्तुं मात्स्य तवान्तिके ॥ २७ ॥
सभासदस्तु पश्यन्तु कीचकं धर्मलङ्घिनम् ।
( =v. 26 of text. )
विराटनृपते पश्य मामनाथामनागसम् ॥ २८ ॥
न साम फलते दुष्टे दुष्टे दण्डः प्रयुज्यते ॥ २९ ॥
अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चाप्यदण्डयन् ।
स राजा न भवेल्लोके राजशब्दस्य भाजनम् ॥ ३०॥
दीनान्धकृपणाशक्तपंगुकुब्जजडादिकान् ।
अनाथबालवृद्धांश्च पुरुषान्वा स्त्रियोऽपिवा ॥
दुष्टचोराभिभूतांश्च पालयेदवनीपतिः ॥ ३१ ॥
अनाथानां च नाथः स्यादपितॄणां पिता नृपः ।
माता भवेदमातॄणामगुरूणां गुरुर्भवेत् ॥
अगतीनां गती राजा नृणां राजा परायणम् ॥ ३२ ॥
विशेषतः परैर्दुष्टैः परामृष्टां नरोत्तमः ।
स्त्रियं साध्वीमनाथां च पालयेत्स्वसुतामिव ॥ ३३ ॥
त्वद्गृहावसति राजन्नेतावत्कालपर्ययम् ॥
अधि ं त्वत्सुतायाश्च पश्य मां कीचकादृताम् ॥ ३४ ॥

Before V. 18

S. cl. adds :—

ये दद्युर्न च याचेयुर्ब्रह्मण्याः सत्यवादिनः ।

After V. 19a

S. cl. adds :—

महेष्वासा रणे शूरा गर्विता मानवत्पराः ॥

omitted in ST.

After V. 20

SK adds:—

येषां नास्ति समः कश्चिद्वीर्ये सत्ये बले दमे ।
तेषां मां दयितां भार्यां-सूतपुत्रः पदाऽवधीत् ॥ १ ॥
येषां न सदृशः कश्चिद्धनार्थैर्भुवि मानवः ।
तेषां मां दयितां भार्यां सूतपुत्रः पदाऽवधीत् ॥ २ ॥
तवाग्रतो विशेषेण प्रजानां च हितैषिणः ।
पश्यतो निहता राजंस्तेनेह जगतीपते ॥ ३ ॥

After V. 23

S. cl. adds:—

मयापि शक्यं किं कर्तुं विराटे धर्मदूषणे ।

After V. 24

S. cl. adds:—

धर्मो विद्धो ह्यधर्मेण सभां यत्रोपतिष्ठति ।
न चेद्विशल्यः क्रियते सर्वे विद्धाः सभासदः ॥ १ ॥
यत्र धर्मो ह्यधर्मेन सत्यंयत्रानृतेनच ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥ २ ॥
वैशंपायन उवाच ।
तस्यास्तत्कृपणं श्रुत्वा सैरंध्र्याः परिदेवितम् ॥ ३ ॥

v. 3 omitted in SG. ST.

After V. 30

S. cl. adds :—

केचित्कृष्णां प्रशंसंति केचिन्निंदंति कीचकम् ।
केचिन्निंदंति राजानं केचिद्देवीं च तां नराः ॥

After V. 31

S cl. adds:—

यस्या गात्रं शुभं पीनं मुखं जयति पंकजम् ।
गतिर्हंसं स्मितं कुन्दं सैषा नार्हति पद्धम् ॥ १ ॥

द्वात्रिंशद्दशना यस्याः श्वेता मांसनिबन्धनाः ।
स्निग्धाश्च मृदवः केशाः सैषा नार्हति पद्वधम् ॥ २ ॥
पद्मं चक्रं ध्वजं शङ्खं प्रासादो मकरस्तथा ।
यस्याः पाणितले सन्ति सैषा नार्हति पद्वधम् ॥ ३ ॥
आवर्ताः खलु चत्वारः सर्वे चैव प्रदक्षिणाः ।
समं गात्रं शुभं स्निग्धं यस्या नार्हति पद्वधम् ॥ ४ ॥
अच्छिद्रहस्तपादा च अच्छिद्रदशना च या ।
कन्या कमलपत्राक्षी कथमर्हति पद्वधम् ॥ ५ ॥
सेयं लक्षणसंपन्ना पूर्णचन्द्रनिभानना ।
सुरूपिणी सुवदना नेयं योग्या पदा वधम् ॥ ६ ॥
देवदेवीव सुभगा शक्रदेवीव शोभना ।
अप्सरा इव सारूप्यान्नेयं योग्या पदा वधम् ॥ ७ ॥

After V. 32a

SK, ST add :—

सा विनिःश्वस्य सुश्रोणी भूमावन्तर्मुखी स्थिता ।
तूष्णीमासीत्तदा दृष्ट्वा विचक्षन्तं युधिष्ठिरं ॥

ST continues :—

तस्य दृष्ट्वा द्विधा दृष्टेः विराटस्य व्यतिक्रमम् ।

After V. 33a

S. cl. adds :—

कृष्णां तत्र नृपाभ्याशे परिव्राजकरूपधृत् ।

After V. 33

S. cl. adds :—

राजा ह्ययं धर्मशीलो विराटः परलोकभीः ॥
यतस्त्वां न परित्राति सत्ये धर्मपथे स्थितः ॥ १ ॥

After V. 35

S. cl. adds :—

श्रूयन्तां ते सुकेशान्ते मोक्षधर्माश्रयाः कथाः ।
यथा धर्मः कुलस्त्रीणां दृष्टो धर्मानुरोधनात् ॥ १ ॥
नास्ति यज्ञः स्त्रियाः कश्चिन्न श्राद्धं नाप्युपोषणम् ।
या तु भर्तारि शुश्रूषा सा स्वर्गायाभिजायते ॥ २ ॥
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातंत्र्यमर्हति ॥ ३ ॥

SG adds :—

शुश्रूषया क्लिश्यमानाः पतिलोकं जयंत्युत ।
मीरु भर्तृभयात्पान्यो न कुप्यन्ति कदाचन ।

बहुभिश्च परिक्लेशैरवज्ञाताश्च शत्रुभिः ।
अनन्यभावाः शुद्धाश्च पुण्यलोकं जयंत्युत ॥ ४ ॥
न क्रोधकालं नियतं पश्यन्ति पतयस्तव ।
न क्रुद्धान्प्रतियायाद्वै पतींस्ते वृत्रहा अपि ॥
तेन त्वां नाभिधावन्ति गन्धर्वाः कामरूपिणः ॥ ५ ॥
यदि ते समयः कश्चित्कृतो ह्यायतलोचने ।
तं स्मरस्व क्षमाशीले क्षमा धर्मो ह्यनुत्तमः ॥ ६ ॥
क्षमा धर्मः क्षमा सत्यं क्षमा दानं क्षमा तपः ।
क्षमावतामयं लोकः परलोकः क्षमावताम् ॥ ७ ॥
त्र्यंशिनो द्वादशाङ्गस्य चतुर्विंशतिपर्वणः ।
कस्त्रिषष्टिशतारस्य मासोनस्याक्षमीभवेत् ॥ ८ ॥

ST adds:—

त्रिंशरूनो द्वादशीमा चतुर्विंशति पर्वणः ।
कस्त्रयशीतिशतारस्य सांगोनस्याक्षमो भवेत् ॥ ९ ॥

After V. 36

SK adds:—

गच्छ सैरन्ध्रि गंधर्वाः करिष्यंति तव प्रियम् ।
व्यपनेष्यंति ते दुःखं येन ते विप्रियं कृतम् ॥

S. cl. adds:—

इत्येवमुक्ते तिष्ठन्तीं पुनरेवाह धर्मराट् ।
एवमुक्ता तु सा भर्त्रा समुद्वीक्ष्याब्रवीदिदम् ॥ १ ॥
सत्यमुक्तं त्वया विद्धश्शैलूषीं विद्धि मां पुनः ।
शैलूषकस्य तस्याहं येषां ज्येष्ठोऽक्षकोविदः ॥ २ ॥
एवमुक्त्वा वरारोहा परिमृज्याननं शुभम् ।
केशान्विमुक्तान्संयम्य रुधिरेण समुक्षितान् ॥ ३ ॥
पांसुकुण्ठितसर्वाङ्गी गजराजवधूरिव ।
प्रतस्थे नागनासोरूर्भर्तुराज्ञाय शासनम् ॥ ४ ॥
विमुक्ता मृगशावाक्षी निरन्तरपयोधरा ।
प्रभा नक्षत्रराजस्य कालमेघैरिवावृता ॥ ५ ॥

After v 5 ST adds —

शुशुभे वदनं तस्या रुदित्वोपरतं तथा ।
मेघजालविनिर्मुक्तं दिवीव शशिमण्डलम् ॥

* * *

यस्यार्थे पाण्डवेयास्तु त्यजेयुरपि जीवितम् ॥
तां ते दृष्ट्वा तथा कृष्णां क्षमिणो धर्मचारिणः ।
समयं नातिवर्तन्ते वेलामिव महोदधिः ॥ ६ ॥

### After V. 39.

S. cl. adds:—

सा प्रविश्य प्रवेपन्ती सुदेष्णाया निवेशनम् ।
रुदन्ती चारुसर्वाङ्गी तस्यास्तस्थावथाग्रतः ॥ ७ ॥
तामुवाच विराटस्य महिषी शाठ्यमास्थिता ।
किमिदं पद्मसंकाशं सुदन्तोष्ठाक्षिनासिकम् ॥ ८ ॥
रुदन्त्या अवमृष्टाश्रापूर्णेन्दुसमवर्चसम् ।
बिम्बोष्ठं कृष्णताराभ्यामत्यन्तरुचिरप्रभम् ।
नयनाभ्यामजिह्माभ्यां मुखं ते मुञ्चते जलम् ॥ ९ ॥
कस्त्वाऽवधीद्वरारोहे कस्माद्रोदिषि शोभने ।
को विप्रयुज्यते दारैः सपुत्रैः सहबान्धवैः ॥ १० ॥
कस्याद्य राजा कुपितो वधमाज्ञापयिष्यति ।
ब्रूहि किं ते प्रियं कर्म कं त्यजे घातयामि वा ॥ ११ ॥
वैशंपायन उवाच ।
तां निःश्वस्याब्रवीत्कृष्णा जानन्ती नाम पृच्छसि ।
भ्रातुस्त्वं मामनुप्रेष्य किमेवं हि विकत्थसे ॥ १२ ॥
After this come our 41, 42 *a*
भ्राता यद्येष मे व्यक्तं योऽतीतो धर्मचारिणीम् ॥ १३ ॥
Then come our *42b* & v. 43.

### After V. 43

S. cl. adds :—

भ्रातुः प्रयच्छ त्वरिता जीवच्छ्राद्धं त्वमद्य वै ।
सुहृष्टं कुरु वै चैनं नासून्मन्ये धरिष्यति ॥
तेषां हि मम भर्तॄणां पञ्चानां धर्मचारिणाम् ।
एको दुर्धर्षणोऽत्यर्थं बले चाप्रतिमो भुवि ॥ १५ ॥
निर्मनुष्यमिमं लोकं कुर्यात्क्रुद्धो निशामिमाम् ।
न स संक्रुध्यते तावद्गन्धर्वः कामरूपधृत् ॥ १६ ॥
नूनं ज्ञास्यति यावद्वै मर्मतत्पादघातनम् ।
तत्क्षणात्कीचकः पापः सपुत्रभ्रातृबांधवः ।
विनशिष्यति दुष्टात्मा यथा दुष्कृतकर्मकृत् ॥ १७ ॥
अपि चैतत्पुरा प्रोक्तं निपुणैर्मनुजोत्तमैः ।
एकस्तु कुरुते पापं कालपाशवशं गतः ॥
नीचेनात्मापराधेन कुलं तेन विनश्यति ॥ १८ ॥
वैशंपायन उवाच ।
सुदेष्णामेवमुक्त्वा तु सैरन्ध्री दुःखमोहिता ।
कीचकस्य वधार्थाय मतदीशामुपागमत् ॥ १९ ॥
अभ्यर्थिता च नारीभिर्मानिना च सुदेष्णया ।
न च स्नाति न चाश्नाति न पांसून्परिमार्जति ॥ २० ॥

रुधिरक्लिन्नवदना बभूव मृदितेक्षणा ।
तां तथा शोकसंतप्तां दृष्ट्वा प्ररुदिता स्त्रियः ॥
कीचकस्य वधं सर्वा मनोभिश्च शशंसिरे ॥ २१ ॥

[ S. cl. here begins a new Adh. ]

जनमेजय उवाच ।

अहो दुःखतरं प्राप्ता कीचकेन पदा हता ।
पतिव्रता महाभागा द्रौपदी योषितां वरा ॥ २२ ॥
दुःशलां स्मारयन्ती स भर्तॄणां भगिनीं शुभाम् ।
नाशपत्सिन्धुराजं सा बलात्कारेण वाहिता ॥ २३ ॥
किमर्थमिह संप्राप्ता कीचकेन दुरात्मना ।
नाशपत्तं महाभागा कृष्णा पादेन ताडिता ॥ २४ ॥
तेजोराशिरियं देवी धर्मज्ञा सत्यवादिनी ।
केशपाशे परामृष्टा मर्षयन्ती ह्यशक्तवत् ॥
नैतत्कारणमल्पं हि श्रोतुकामोऽस्मि सत्तम ।
कृष्णायास्तु परिक्लेशान्मनो मे दूयते भृशम् ॥ ६ ॥
कस्य वंशे समुद्भूतः स च दुर्ललितो मुने ।
बलोन्मत्तः कथं चासीत्स्यालो मात्स्यस्य कीचकः ॥ २७ ॥
दृष्ट्वापि तां प्रियां भार्यां सूतपुत्रेण ताडिताम् ।
नैव चुक्षुभिरे वीराः किमकुर्वन्त तं प्रति ॥ २८ ॥

वैशंपायन उवाच ।

त्वदुक्तोऽयमनुप्रश्नः कुरूणां कीर्तिवर्धनः ।
एतत्सर्वं यथा वक्ष्ये विस्तरेणेह पार्थिव ॥ २९ ॥
ब्राह्मण्यां क्षत्रियाज्जातः सूतो भवति पार्थिव ।
प्रातिलोम्येन जातानां स ह्येको द्विज एव तु ॥ ३० ॥
रथकारमितीमं हि क्रियायुक्तं द्विजन्मनाम् ।
क्षत्रियादवरो वैश्याद्विशिष्ट इति चक्षते ॥ ३१ ॥
सहसूतेन संबन्धः कृतः पूर्वं नराधिपैः ।
तेन तु प्रातिलोम्येन राजशब्दो न लभ्यते ॥ ३२ ॥
तेषां तु सूतविषयः सूतानां नामतः कृतः ।
उपजीव्यं च यत्क्षेत्रं राजन्सूतेन वै पुरा ॥ ३३ ॥
सूतानामधिपो राजा केकयो नाम विश्रुतः ।
राजकन्यासमुद्भूतः सारथ्येऽनुपमोऽभवत् ॥ ३४ ॥
पुत्रास्तस्य कुरुश्रेष्ठ मालव्यां जज्ञिरे तदा ।
कीचका इति विख्याताः शतं पद्धैव भारत ॥ ३५ ॥

तत्रासीद्बलश्रेष्ठः कीचकः सर्वजित्प्रभो ।
अग्रजो बलसंमत्तस्तेनासीत्सूतपद्शतम् ॥ ३६ ॥
मालव्या एव कौरव्य तत्र ह्यवरजाऽभवत् ।

[ SA² reads:—

द्वितीयायां त मालव्यां चित्राह्यवराजाभवत् ।]
तस्या केकयराज्ञस्तु सुदेष्णा दुहिताऽभवत् ॥ ३७ ।

[ SA² adds:—

तां सुदेष्णेति व प्राहुर्विराटमहिषीं प्रियां ।]
तां विराटस्य मात्स्यस्य केकयः प्रददौ मुदा ।
सुरथायां मृतायां तु कौसल्यां श्वेतमातरि ॥ ३८ ॥
श्वेते विनष्टे शङ्खे च गते मातुलवेश्मनि ।
सुदेष्णां महिषीं लब्ध्वा राजा दुःखमपानुदत् ॥ ३९ ।
उत्तरं चोत्तरां चैव विराटात्पृथिवीपते ।
सुदेष्णा सुषुवे देवी कैकेयी कुलवृद्धये ॥ ४० ॥
मातृष्वसृसुतां राजन्कीचकस्तामनिन्दिताम् ।
सदा परिचरत्प्रीत्या विराटे न्यवसत्सुखी ॥ ४१ ॥
भ्रातरश्चास्य विक्रान्ता सर्वे च तमनुव्रताः ।
विराटस्यैव संहृष्टा बलं कोशं त्ववर्धयन् ॥ ४२ ॥
कालेया नाम ते दैत्याः प्रायशो भुवि विश्रुताः ।
जज्ञिरे कीचका राजन्बाणो ज्येष्ठस्तथाऽभवत् ॥ ४३ ॥
स हि मर्यादसंपन्नो बलवान्भीमविक्रमः ।
कीचको नष्टमर्यादो बभूव भयदो नृणाम् ॥ ४४ ॥
तं प्राप्य बलसंमत्तं विराटः पृथिवीपतिः ।
जिगाय सर्वांश्च रिपून्यथेन्द्रो दानवान्पुरा ॥ ४५ ॥
मेखलांश्च त्रिगर्तांश्च दशार्णांश्च कशेरुकान् ।
मालवांश्चैव यवनान्पुलिन्दान्काशिकोसलान् ॥ ४६ ॥
करदांश्च निषिदांश्च शिवान्मचुलकांस्तथा ।
पुलिन्दांश्च कलिङ्गांश्च तङ्गणान्परतङ्गणान् ॥ ४७ ॥

[ SA adds —

मलादान् निषधांश्चैव तुंडिकेरांश्च कोंकणान् । ]
अन्ये च बहवः शूरा नानाजनपदेश्वराः ।
कीचकेन रणे भग्ना विद्रवंति दिशो दश ॥ ४८ ॥
तमेवं धैर्यसंपन्नं नागायुतसमं बले ।
विराटस्तत्र सेनायाश्चकार पतिमात्मनः ॥ ४९ ॥
विराटभ्रातरश्चैव दश दाशरथेः समाः ।
ते चैनानभ्ययर्तन्त कीचकान्बलवत्तरान् ॥ ५० ॥

एवंविधबलो भीमः कीचकस्ते च तद्विधाः ।
राज्ञः स्याला महात्मानो विराटस्य हितैषिणः ॥ ५१
एतत्ते कथितं सर्वं कीचकस्य पराक्रमम् ।
द्रौपदी न शशापैनं यस्मात्तद्वदतः शृणु ॥ ५२॥
रक्षन्ति हि तपः क्रोधादृषयो न शपन्ति च ।
जानन्ती तद्यथा तत्वं द्रौपदी न शशापतम् ॥ ५३ ॥
क्षमा धर्मः क्षमा दानं क्षमा यज्ञः क्षमा तपः ।
क्षमा सत्यं क्षमा शीलं क्षमा सर्वमिति श्रुतिः ॥ ५४ ।
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
एतत्सर्वं विजानन्ती सा क्षमामन्वपद्यत ॥ ५५ ॥
भर्तृणां मतमाज्ञाय क्षमिणां धर्मचारिणां ।
नाशपत्तं विशालाक्षी सती शक्ताऽपि भारत ॥ ५६ ।
पांडवाश्चापि ते सर्वे द्रौपदीं प्रेक्ष्य दुःखिताम् ।
क्रोधाग्निनाऽप्यदह्यन्त तदा लज्जाव्यपेक्षया ॥ ५७ ॥
अथ भीमो महाबाहुः सूदयिष्यंस्तु कीचकम् ।
वारितो धर्मपुत्रेण वेलयेव महोदधिः ॥ ५८ ॥
संधार्य मनसा रोषं दिवारात्रं विनिश्वसन् ।
महानसे तदा कृच्छ्रात्सुष्वाप रजनीं च ताम् ॥ ५९ ॥

**After V. 46**

S. cl. adds :—

किं करोमि क्व गच्छामि कथं कार्यं भवेन्मम ।

**After V. 48**

S. cl. adds:—

दुःखेन महता युक्ता मानसेन मनस्विनी ।

SG, ST, SA add :—

उपातिष्ठत पाञ्चाली भीमं कौरव्यमच्युतम् ।
महर्षभं यथा सुप्तमर्थिनी वननिर्झरे ॥ १ ॥

*b* in SK also.

**After V. 49a**

S cl. adds:—

सर्वश्वेतेव माहेयी वने वृद्धा त्रिहायणी ।

**After V. 49**

SK, SG, SA add:—

सुजातं गोमतीतीरे सालं वल्लीव पुष्पिता ।

ST reads for this :—

सा लतेव महासालं व्यहगं गूहति या (ती?) रुजं ।

S. cl. adds:—

परिस्पृश्य च पाणिभ्यां पतिं सुप्तमबोधयत् ।
श्रीरिवाप्त्या महोत्साहं सुप्तं विष्णुमिवार्णवे ॥ १ ॥
क्षौमावदाते शयने शयानं वृषभेक्षणम् ।
यथा शची देवराजं रुद्राणी शंकरं यथा ॥ २ ॥
ब्रह्माणमिव सावित्री देवसेना गुहं यथा ।
दिशा गजसमाकारं गजं गजवधूरिव ॥ ३ ॥
भीमं प्राबोधयत्कान्ता लक्ष्मीर्दामोदरं यथा ॥ ४ ॥

**After V. 51a**

ST adds :—

वीणेव मधुरालापा स्वरं गांधारमाश्रिता ।

**After V. 53**

S. cl. adds:—

वैशंपायन उवाच ।
सुखसुप्तश्च तं शब्दं निशाम्य स वृकोदरः ।
संबोधितः कुरुश्रेष्ठस्तोत्रैरिव महागजः ॥ १ ॥

**After V. 54**

S. cl. adds :—

उपवेश्य च दुर्धर्षः पाञ्चालकुलवर्धनीम् ।

**After V. 56a**

S. cl. adds:—

प्रकाशं यदि वा गुह्यं सर्वमाख्यातुमर्हसि ।

**After V. 57a**

S. cl. adds :—

यद्यप्यसुकरं कर्म कृतमित्यवधारय ।

---

## ADHYĀYA 17.

[ *NORTHERN RECENSION.* ]

**After V. 2**

H adds:—

विकृष्टा हास्तिनपुरे सभायां राजसंसदि ।
दुःशासनेन केशान्ते परामृष्टा रजस्वला ॥ १ ॥
क्षत्रियैर्भीष्मकर्णाद्यैर्दृष्टा दुर्योधनेन च ।
श्वशुराभ्यां च द्रोणेन विदुरेण च धीमता ॥ २ ॥

पितृभ्रातृव्यमध्ये च पतिमध्ये च भारत ।
केशे गृह्य सभां नीता त्वयि जीवति पाण्डवे ॥ ३
विप्रमुक्ता ततश्चाहं हृतराज्याद्वनं गता ।
साहं वने दुर्वसति वसंती चाध्वकर्शिता ॥ ४ ॥
जटासुरपरिक्लेशस्तत्रापि च महद्भयम् ॥ ५ ॥

**After V. 4**

H adds —

पद्भ्यां पर्यचरं चाहं देशान्विषयसंस्थितान् ।
ततोऽहं द्वादश वर्षं कन्दमूलफलाशिनी ॥ १ ॥
इदं पुरमनुप्राप्य सुदेष्णापरिचारिका ।
परस्त्रीमुपतिष्ठामि सत्यधर्मपथि स्थिता ॥ २ ॥
गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम् ।
नित्यं पिपे विराटस्य त्वयि जीवति पाण्डव ॥ ३ ॥
साहं बहूनि दुःखानि गणयामि न ते कृते ।
अहं चास्य विराटस्य राज्ञःश्यालेन पाण्डव ॥ ४ ॥
निपात्य गृह्य केशेषु सर्वलोकस्य पश्यतः ॥ ५ ॥

**After V. 20**

Ends ABCDEGKN add.—

अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ॥ १ ॥
अप्रतिग्राहिणां चैव यतीनामूर्ध्वरेतसाम् ।
दश चापि सहस्राणि सोयमास्ते नरेश्वरः ॥ २ ॥
आनृशंस्यमनुक्रोश संविभागस्तथैव च ।
यस्मिन्नेतानि सर्वाणि सोयमास्ते नरेश्वरः ॥ ३ ॥

**After V 26**

Edns A²BEGKN add·—

सदस्य समुपासीनं परस्य प्रियवादिनम् ।
दृष्ट्वा युधिष्ठिरं कोपो वर्धते मामसंशयम् ॥
L for v. 26*b*
दृष्ट्वा कस्य न दुःखं स्याद्धर्मात्मान युधिष्ठिरम् ॥

[ *SOUTHERN RECENSION* ]

**Before V. 1**

S cl adds —

वैशंपायन उवाच ।
सा लज्जमाना भीता च अधोमुखमुखी ततः ।
नोवाच किंचिद्वचनं बाष्पदूषितलोचना ॥ १ ॥

अथाब्रवीद्भीमपराक्रमो बली ।
वृकोदरः पाण्डवमुख्यसंमतः ॥
प्रब्रूहि किं ते करवाणि सुन्दरि ।
प्रियं प्रिये वारणमत्तगामिनि ॥ २ ॥

### After V. 2

S. cl. adds:—

विक्रुष्टा हास्तिनपुरे सभायां राजसंसदि ।
दुःशासनेन केशान्ते परामृष्टा रजस्वला ॥ १ ॥
क्षत्रियैस्तत्र कर्णाद्यैर्दृष्टा दुर्योधनेन च ।
श्वशुराभ्यां च भीष्मेण विदुरेण च धीमता ॥ २ ॥
द्रोणेन च महाबाहो कृपेण च परंतप ।
साऽहं श्वशुरयोर्मध्ये भ्रातृमध्ये च पांडव ॥ ३ ॥
केशे गृहीत्वा च सभां नीता जीवति वै त्वयि ।
विप्रमुक्ता ततश्चाहं वने राज्याद्धनं गता ॥ ४ ॥
साऽहं वने दुर्वसतिं वसती त्वध्वकर्शिता ।
जटासुरपरिक्लेशात्प्राप्तापि सुमहद्भयम् ॥ ५ ॥

v. 4b omitted in SA, SG. v 5 omitted in SA.

### After V. 4

S. cl adds:—

पद्भ्यां पर्यचरं चाहं देशान् विषमसंस्थितान् ।
दुर्गान्व्यालपदसंकीर्णांस्त्वयि जीवति पाण्डवे ॥ १ ॥
ततोऽहं द्वादशे वर्षे वन्यमूलफलाशना ।
इदं पुरमनुप्राप्ता सुदेष्णापरिचारिका ॥ २ ॥
परस्त्रियमुपातिष्ठे सत्यधर्मपरायणा ।
गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम् ॥ ३ ॥
नित्यं पिंषे विराटस्य त्वयि जीवति पाण्डव ।
साहं बहूनि दुःखानि गणयामि न ते कृते ॥ ४ ॥

### After V 6

S. cl. adds:—

द्रुपदस्य सुता चाहं धृष्टद्युम्नस्य चानुजा ।
अग्निकुण्डात्समुद्भूता नोर्व्यां जातु चराम्यहम् ॥ १ ॥
कीचकं चेन्न हन्यास्त्वं प्रीवां बध्वा जले प्रिये ।
विषमालोड्य पास्यामि प्रवेक्ष्याम्यथवाऽनलं ॥ २ ॥
आत्मानं नाशयिष्यामि वृक्षमारुह्य वा पते ।
शस्त्रेणाहं च भेत्स्यामि किं फलं जीवितेन मे ॥ ३ ॥

After V 9

S. cl. adds:—

शरणं भव कौन्तेय मा स्म गच्छे युधिष्ठिरम् ।
निरुद्योगं निरामर्षं निर्वीर्यमरिमर्दन ॥ १ ॥
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ।
विजानामि तवामर्षं बलं वीर्यं च पांडव ॥ २ ॥
ततोऽहं परिदेवामि चाग्रतस्ते महाबल ।
यथा यूथपतिर्मत्तः कुञ्जरः षाष्टिहायनः ॥ ३ ॥
भूमौ निपतितं बिल्वं पद्भ्यामाक्रम्य पीडयेत् ।
तथैव च शिरस्तस्य निपात्य धरणीतले ॥ ४ ॥
वामेन पुरुषव्याघ्र मर्द पादेन पाण्डव ।
स चेदुद्यन्तमादित्य प्रातरुत्थाय पश्यति ॥ ५ ॥
कीचकः शर्वरीं व्युष्टां नाहं जीवितुमुत्सहे ।
शापितोऽसि मम प्राणैः सुकृतेनार्जुनस्य च ॥ ६ ॥
युधिष्ठिरस्य पादाभ्यां यमयोर्जीवितेन च ।
कीचकस्य वधं नाद्य प्रतिजानासि भारत ॥ ७ ॥

After V 10

[e]xcept SA, adds:—

येषां मुख्यतमो ज्यष्ठो भवेत्तु कुलपांसनः ।
भ्रातरं परमन्वीयुस्तेऽपि शालीनबुद्धयः ॥ १ ॥

After V. 12a

SG adds:—

एकः पणो भवेत् द्यूते बहून्मासान्परंतप ॥

After V 19

S. cl. except SA, adds —

सहस्रं बालखिल्यानां सहस्रमुदवासिनाम् ।
सहस्रमश्मकुट्टानां सहस्र वायुभोजिनाम् ॥ १ ॥
सहस्र मुनिपत्नीनां सहस्र ब्रह्मचारिणाम् ।
सहस्र मौनशीलानां सहस्र गृहमेधिनाम् ॥ २ ॥
हंसाः परमहंसाश्च योगिनश्च द्विजातयः ।
कुटीरका॰ परिव्राजो ये चान्ये वनचारिणः ॥ ३ ॥
सविमक्तात्मकाश्चैव बहवश्चोर्ध्वरेतसः ।
चतुर्वेदविदो विप्रा॰ शिक्षामीमांसपारगाः ॥ ४ ॥
क्रमपाठाश्च ये विप्रा॰ सामाध्यायनिकाश्च ये ॥ ५ ॥

5 *a* omitted in SG.

After V. 27

ST adds:—

आनृशंस्यमनुक्रोशः संविभागस्तथैव च ।
यस्मिन्नेतानि नित्यानि सर्वाण्यासन्युधिष्ठिरे
अर्हद्भ्यो यः सदा दत्वा धनान्यन्यांश्च सर्वः
स राजा कृपणं भीम वृत्तमन्येषु लिप्सति ।

---

## ADHYĀYA 18.

[ *NORTHLRN RECLNSION.*

After V. 1

Edns A²BCDEGKMN add—

सूपकारं विराटस्य वल्लवं त्वां विदुर्जनाः ।
प्रेष्यत्वं समनुप्राप्तं ततो दुःखतरं नु किम् ॥

D further adds—सर्वेषां बलिनां श्रेष्ठस्त्व च भाम महाबल ।

After V. 5

Edns CDG add:—

तत उत्थाय कैकेयी सर्वास्ताः प्रत्यभाषत ।

After V. 6a

D adds—

एकांतार्पितभावेन वल्लवं चारुहासिनी ॥

and N adds:—

तस्माच्छोचति भावेन दुष्करं चारुहासिनी ।
युध्यमानं मृगैर्व्याघ्रैर्नून च समवुध्य तम् ।
सौहृदादागतत्रासाद्यस्मात्समनुशोचति ॥ १ ।

After V 11

Edns BCDEFKN add:—

त्वय्येवं निरयं प्राप्ते भीमे भीमपराक्रमे ।

After V. 12

N adds—

यस्य ज्यातलनिर्घोषात्समकम्पत मेदिनी ।
सोच पार्थो विराटस्य कन्यानां नर्तको युवा ॥

After V.

AK add:—

एवंविधमिमं श्रुत्वा कुंत्याः शोको भविष्यति ।

Before V. 22

AΓKM adds.—

आपतन्तं रणे दृष्ट्वा शात्रवा यान्ति संभ्रमम् ।

After V. 25

DFKM add:—

यः स्वराष्ट्रं समासाद्य सारिताग्रारिरस्त्रवित् ।
परं हर्षमुपातिष्ठन् स्वसैन्यमभिनंदयन् ॥ १ ॥

After V. 28a

K adds.—

संदृश्येमं मनस्त्वासीद्दुःखे परमके तदा ।

After V.31

Edns ABCDEGHKLN add:—

न विंदामि महाबाहो सहदेवस्य दुष्कृतम् ।
यस्मिन्नेवंविधं दुःखं प्राप्नुयात्सत्यविक्रमः ॥ १

FM add, instead:—

युवानमृषभं राज्ञां सर्वशास्त्रविशारदम् ।
दृष्ट्वा गोपालवेषं तं भृशं मुह्यति मे मनः ॥ १ ॥

After V. 34

FM add:—

कथं मया विहीनो हि वने दुःखं निवत्स्यति ।

After V. 41

F adds.—

अपश्यमेव श्रीमंतं विराटस्य पुरः सरम् ।

[ *SOUTHERN RECENSION.* ]

Before V. 6

S. cl. adds:—

तत उत्थाय कैकेयी सर्वास्ताः प्रत्यभाषत ।
[ ST ततः स्त्रियस्तु कैकेय्या ]

After V. 10

ST adds:—

तस्यां तथा ब्रुवन्त्यां तु भीताहमवबोधनात् ।
सतोकमग्रं वाचं शोकमाविश्य पाण्डव ।
अपस्मारोत्तमे मासे देवि मामनुवर्तते ॥

का वाहं वल्लवस्याङ्के को भवेद्वल्लवो मम ।
इत्यवोचमहं सर्वाः स्त्रियो राजनिवेशने ।
एषो हि नियमः प्राप्तो जीवत्येव वृकोदरे ॥

After V. 11a

S. cl. adds:—

नोवाच किंचिद्वचनं संरम्भाद्रक्तलोचनः ।
ज्ञात्वा तु रुषितं भीमं द्रौपदी पुनरब्रवीत

After V. 12

SK adds:—

आस्ते वेषप्रतिच्छन्नः कन्यानां परिचारक

After V. 16a

S. cl. adds:—

षण्ढरूपं वहन्तं तं गतिं नृत्तावलम्बनम् ।
कुर्वन्तमर्जुनं दृष्ट्वा न मे स्वास्थ्यं मनो व्रजे

After V.

S cl. adds:—

अजातशत्रुं कौरव्यं मग्नं दुर्धूतदेविनम् ॥ १
ऐन्द्रवारुणवायव्यब्रह्माग्नेयैः सवैष्णवैः ।
अग्नीन्संतर्पयन्पार्थः सर्वशत्रुनिबर्हणः ।
दिव्यैरस्त्रैरमेयात्मा सर्वांश्चैकरथोऽजयत् ॥
कौबेरं वैष्णवं शैवमस्त्राण्यन्यानि भारत ।
दर्शयन्नस्त्रवीर्यं च वासुदेवसहायवान् ॥ ३
दिव्यं गान्धर्वमस्त्रं च वायव्यमथ वैष्णवम्
ब्राह्मं पाशुपतं चैव स्थूणाकर्णंच दर्शयन् ॥
पौलोमान्कालकेयांश्च इन्द्रशत्रून्महाबलान् ।
निवातकवचैः सार्धं घोरानेकरथोऽजयत् ।
सोन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ॥ ५
यो वै महातपः कुर्वन्महाबलपराक्रमः ।
युद्धेन तोषयामास शंकरं शूलपाणिनम् ॥ ६
कन्यापुरगतं दृष्ट्वा गोष्ठेष्विव महावृषम् ।
स्त्रीवेषविकृतं पार्थं कुन्ती गच्छति मे मनः ॥

v. 3. omitted in ST, SA. v. 5 omitted in ST, v. 7 here

धर्मे सत्ये च सत्ये च जीवलोके सुसंमतः ।
सोन्तःपुरे विराटस्य वसन् दुःखी करोति मा

After V. 39.

S. cl. adds :—

राजकन्याश्च वेश्याश्च विशां दुहितरश्च याः ।
सर्वाः सात्युता नार्यो दामग्रन्थिवशं गताः ॥
प्रेष्यकर्माणि तं दृष्ट्वा शोचामि विलपामि च ॥ १ ॥

After V. 31

S. cl. adds:—

न विन्दामि महाबाहो सहदेवस्य दुष्कृतम् ।
यस्मिन्नेवंविधं दुःखं प्राप्नुयात् सत्यविक्रमः ॥

After V. 44

SK, SG add:—

एकभर्ता तु या नारी सा सुखेनैव वर्तते ।
पञ्च मे पतयः सन्ति मम दुःखमनन्तकम् ॥

---

## ADHYĀYA 19.

[ *NORTHERN RECENSION.* ]

Before V. 3

Edns and MSS add:—

अनित्याः किल मर्त्यानामर्थसिद्धिर्जयाजयौ ।
इति कृत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥
*b* omitted in BE.

After V. 4

$A^2$ adds:—

पराभवनिमित्तानि तथैवाचरते नरः ॥

After V. 6

Edns CG add :—

किं मां न प्रतिजानीषे भीमसेन मृतामिव ॥

After V. 16

ND add :—

का प्रीतिर्जीवितेनाद्य ममानेन वृकोदर ॥

Before V. 22

MSS & Edns add :—

इदं दुःखं तु कौन्तेय ममासह्यं निबोध तत् ।

After V. 25

AFM add :—

तदाग्रतो विराटस्य किंकरीव स्थिता ह्यहम्

After V. 28

FM add:—

इदं तु समुपालंभं त्वत्तो राजा युधिष्ठिरः ।
शृणुयाद्यदि कल्याणि कृत्स्नं जह्यात्स जीवितम् ॥
धनंजयोपि सुश्रोणि यमौ चापि शुचिस्मिते ।
रुरोद शनकैः कृष्णा पुनर्वाक्यमभाषत ॥

A adds the last line only. The vv. come here wrongly; see text 20. 8,9*a*.

[ *SOUTHERN RECENSION.* ]

Before V. 3

S. cl. adds :—

अनित्याः किल मर्त्यानामर्थसिद्धिर्जयाजयौ ।
इति कृत्वा प्रतीक्षामि भर्तृणामुदयं पुनः ॥

Before V. 22

S. cl. adds :—

इदं दुःखं तु कौन्तेय ममासह्यं निबोध तत् ।

After V. 29

S. cl. adds :—

कच्चिकं चेन्न हन्यास्त्वं स्वात्मानं नाशयाम्यहम् ।
विषमालोड्य पास्यामि प्रवेक्ष्याम्यथवाऽनलम् ॥
अभाग्याऽहमपुण्याऽहं नित्यदुःखा च विक्लवा ।
पापे निपतितायाश्च किं फलं जीवितेन मे ॥
इत्यस्मै दर्शयामास किणबद्धौ करावुभौ ॥

---

ADHYĀYA 20.

[ *NORTHERN RECENSION.* ]

After V. 4a

Edns BCDEGHKLN add :—

ऐश्वर्यमदमत्तस्य क्रीडन्निव महाद्विपः ।

After V. 7

Edns & MSS add:—

माधर्मं कुरु सुश्रोणि कोपं जहि शुचिस्मिते ।

### After V. 14

Edns BCEG add:—

द्युमत्सेनसुतं वीरं सत्यवन्तमनिन्दिता ।
सावित्र्यनुचचारैका यमलोकं मनस्विनी ॥

### After V. 27a

Edns BCDEGHKLN add :—

अथ मां तत्र कैकेयी प्रैषयत्प्रणयेन तु ।
तेनैव देशिता पूर्वं भ्रातृप्रियचिकीर्षया ॥ १ ॥
सुरामानय कल्याणि कीचकस्य निवेशनात् ।
सूतपुत्रस्तु मां दृष्ट्वा महत्सांत्वमवर्तयत् ॥ २ ॥
सांत्वे प्रतिहते क्रुद्धः परामर्शमनाभवत् ।
विदित्वा तस्य संकल्पं कीचकस्य दुरात्मनः ॥ ३ ॥
तथाहं राजशरणं जवेनैव प्रधाविता ।
संदर्शने तु मां राज्ञः सूतपुत्रः परामृशत् ॥ ४ ॥
पातयित्वा तु दुष्टात्मा पदाहं तेन ताडिता ।
प्रेक्षते स्म विराटस्तु कंकस्तु बहवो जनाः ॥ ५ ॥
रथिनः पीठमर्दाश्च हस्त्यारोहाश्च नैगमाः ।
उपालब्धो मया राजा कंकश्चापि पुनः पुनः ॥ ६ ॥
ततो न वारितो राज्ञा न तस्याविनयः कृतः ।
योयं राज्ञो विराटस्य कीचको नाम सारथिः ॥ ७ ॥
त्यक्तधर्मा नृशंसश्च नरस्त्रीसंमतः प्रियः ।
शूरोभिमानी पापात्मा सर्वार्थेषु च मुग्धवान् ॥ ८ ॥
दारामर्शी महाभाग लभतेर्थान्बहूनपि ।
आहरेदपि वित्तानि परेषां क्रोशतामपि ॥ ९ ॥

D omits v. 3. H omits the whole portion begining with v.

### After V. 39a

Edns ABCDEGKLN add:—

आश्वासयित्वा बहुशो भृशामार्तां सुमध्यमाम् ।
हेतुतत्वार्थसंयुक्तैर्वचोभिर्द्रुपदात्मजाम् ॥ १ ॥
प्रमृज्य वदनं तस्याः पाणिनाश्रुसमाकुलम् ।
उवाच चैनां दुःखार्तां भीमः क्रोधसमन्वितः ॥ २ ॥

[ EdnsBCDEGKN read कीचकं मनसा &c our 39 *b* after 2*a* her AL read it as in text, so that these additional 2 vv. come a in AL. ]

## [ SOUTHERN RECENSION. ]

S. cl. has for our. vv. 1–5:—

वैशंपायन उवाच ।

आश्वासयंस्तां पाञ्चालीं भीमसेन उवाच ह ।
शृणु भद्रे वरारोहे क्रोधात्तत्र तु चिन्तितम् ॥ १ ॥
त्वां वै सभागतां दृष्ट्वा मात्स्यानां कदनं महत् ।
कर्तुकामेन भद्रं ते वृक्षश्चावेक्षितो मया ॥ २ ॥
then comes our v. *5a*.
तज्ज्ञात्वाऽवाङ्मुखस्तूष्णीमास्थितोस्मि महानसं ॥ ३ ।
शृणुष्वान्यत्प्रतिज्ञातं यद्वदामीह भामिनि ॥ ४ ॥
then comes our v. 1.
तदद्य मां तु तपति यत्कृतं न मया पुरा ।
then come our v. *2a*, *3b*, & *5b*.

**After V. 4a**

ST. adds:—

ऐश्वर्यमदमत्तस्य क्रीडन्निव मदच्छिपः ।

**After V. 5**

ST. adds:—

शृणुष्वान्यत्प्रतिज्ञातं यद्वदामीह भामिनि ।
कीचकं यैः न हन्यां चेद्भ्रातृभिः सह दर्पितं ।
भ्रातृभिः सह संवासः कृष्णेनास्म भवेन्मम ॥

**After V. 7b**

S cl. adds:—

अपि चान्यद्वरारोहे स्मरिष्यसि वचो मम ।
पुण्ये तीरे सरस्वत्या यत्प्रतिष्ठाम संगताः ॥
तस्मादहमग्रयं कृष्णे सर्वक्लेशाननुस्मरन् ॥ १ ॥
न चाहमनुगच्छेयं धर्मराजं युधिष्ठिरम् ।
धनञ्जयं च पाञ्चालि माद्रिपुत्रौ च भ्रातरौ ।
कृतवंतां च मतिं कृष्णे युधिष्ठिरमगर्हयम् ॥ २ ॥
एवं वचनं श्रुत्वा मम धर्मात्मजस्तदा ।
ह्रीमान्वाक्यमहीनार्थं पुण्यप्राज्ञा युधिष्ठिरः ।
सर्वानन्वनयद्भ्रातॄन्मुनेर्धर्मस्य पश्यतः ॥ ३ ॥
मा रौद्री रात्रि लोकानां सर्वागमगुणान्विता ।
रक्षितव्यं सहास्माभिः सत्यमग्निनिभं भुवि ॥ ४ ॥
अनुनीतेषु चास्मासु अनुनीता त्वमप्यसि ॥

माधर्मं कुरु सुश्रोणि कोपं जहि शुचिस्मिते ॥ ५ ॥

### After V. 9

S. cl. adds:—

धर्मं शृणुष्व पांचालि यत्ते वक्ष्यामि मानिनि ।

### After V. 13a

S. cl. adds:—

रावणेन हृता सीता राक्षसीभिश्च तर्जिता ।

### After V. 15a

S. cl. adds:—

नलं राजानमेवाथ दमयन्ती वनान्तरे ।
अन्वगच्छत्पुरा कृष्णे तथा भर्तृस्त्वमन्वगाः ।

SK reads this before v. 15.

### After V. 16

S. cl. adds:—

सत्येन ते शपे चाहं भविता नान्यथेति च ।
सर्वासां परमस्त्रीणां प्रामाण्यं कर्तुमर्हसि ॥ १ ॥
सर्वेषां च नरेन्द्राणां मूर्ध्नि स्थास्यसि भामिनि ।
भर्तृभक्त्या च वृत्तेन भोगानाप्स्यसि दुर्लभान् ॥ २ ॥
याता यांतु प्रतिज्ञायां महान्तं भोगमाप्नुयाः ।
गुरुभक्तिकृतं ज्ञात्वा राज्ञां मूर्ध्नि स्थिता भवेः ॥ ३ ॥

### After V. 17

S. cl. adds:—

इदं तु दुःखं कौंतेय ममासह्यं निबोध तत् ।
योयं राज्ञो विराटस्य सूतपुत्रस्तु कीचकः ॥१ ॥
स्यालो नामप्रवादेन भोजस्त्रैगर्तदेशजः ।
त्यक्तधर्मो नृशंसश्च सर्वार्थेषु च वल्लभः ॥ २ ॥
नित्यमेवाह दुष्टात्मा भार्या मे भव शोभने ।
अविनीतः सुदुष्टात्मा मामनाथेति चिंतयन् ॥ २ ॥

### After V. 33a

ST adds:—

येषामरिर्न स्वपिति षष्ठेपि विषये वसन् ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥

After V.

ST adds:—

कीचकं चेन्न हन्यास्त्वं कूपे वा निपताम्यहम् ।
अथवा क्षुरिकां नीत्वा ग्रीवं स्यामि तवाग्रतः ॥

वैशंपायन उवाच ।

After V. 39

SK adds:—

आश्वासयित्वा बहुशो भृशमार्तां सुमध्यमाम् ।
हेतुतत्वार्थसंयुक्तैर्वचोभिर्द्रुपदात्मजाम् ॥
प्रमृज्य वदनं तस्याः पाणिनाऽश्रुसमाकुलम् ।
उवाच चैनां दुःखार्तां भीमः क्रोधसमन्वितः ॥

---

## ADHYĀYA 21.

[ *NORTHERN RECENSION.* ]

Before V.

N adds:—

निशीथे तत्र गच्छामि गन्धर्वास्तत्र जानते ।

Before V. 6

A[2] adds:—

एवं सा भीरु तन्वंगी आमंत्र्यैनं महानसे ।
वधं तस्य परीप्संती आजगाम स्ववेश्मनि ॥ १ ॥

After V. 12a

BE add:—

यदि त्वं सूत संयोगमिच्छस्यद्य मया सह ॥

After V. 18

Edn[1] A[2]BDEKN add:—

ततः सा भीमसेनस्य तमर्थं प्रत्यवेदयत् ।

Before V. 24

H adds:—

वृथासि सत्यं मत्यत्वं न गतो न तु लाघवम् ।
इत्यकुप्यत्ततोऽर्कस्य कीचको वै भृशं तदा ॥ १ ॥

Before V. 30

Edn[1] DN add:—

एवं करोम्यहं भद्रे यथा त्वं भीरु भाषसे ॥

**After V 36a**

Edns BCDEGKLN add:—

अद्य तं सूदयिष्यामि कीचकं सहबान्धवैः ।

**After V. 38**

AFM add:—

काङ्क्षमाणो वधं तस्य कीचकस्य दुरात्मनः ।
एतस्मिन्नंतरे सूतस्तदा चास्तंगते रवौ ॥ १ ॥

(first line omitted in A.)

**After V. 39**

MSS and Edns add:—

मन्यमानः स संकेतमागारं प्रविशच्च तत् ।

**After V. 40a**

MSS & Edns add:—

पूर्वागतं गतस्तत्र भीममप्रतिमौजसम् ॥

**After V. 42**

N adds:—

पतंगं पावकं दीप्तं सिंहं क्षुद्रपशुर्यथा ।

**After V. 44**

Edns ABCDEGHKLN add:—

यत्कृतं धनरत्नाढ्यं दासीशतपरिच्छदम् ।
रूपलावण्ययुक्ताभिर्युवतीभिरलंकृतम् ॥ १ ॥
गृहं चान्तःपरं सुभ्रु क्रीडारतिविराजितम् ।

**After V. 45**

F adds :—

भीमसेन उवाच ।

एवंरूपसमायुक्तं मां कथं न प्रशंससि ।

**After V. 49**

A[2] adds:—

वैशंपायन उवाच ।

इत्युक्त्वा...... भीमो भीमपराक्रमः ।
सहसोत्पत्य कौन्तेयः प्रहस्य च नर... ॥ १ ॥

तच्छ्रुत्वा वचनं तस्य भीमस्य स महाबलः ।
......श्वसञ्च क्रोधं तं तदा इदं वचनमब्रवीत् ॥ २ ॥
......त्वां महावीर गन्धर्वोसि न संशयः ।
अद्य त्वानिहिनिष्यामि सहायैः सहबान्धवैः ॥ ३ ॥
एवमुक्तस्तथा तेन कीचकेन दुरात्मना ।
तौ द्वावपि महावीर्यौ सहसाभिनिपेततुः ॥ ४ ॥

After V. 49a

N. MSS & Edns add :—

स केशेषु परामृष्टो बलेन बलिनां वरः ।

Before V. 51

N. MSS and Edns add:—

कीचकानां च मुख्यस्य नराणामुत्तमस्य च ॥

After V. 51

D adds·—

बाहुभिः समसज्जेतामायसैः परिघैरिव ।

After V. 52a

Edns BCDEGHLN add:—

नखदंष्ट्राभिरन्योन्यं घ्नतः क्रोधविषोद्धतौ ।

After V. 52

Edns A²BCDEGKN add:—

स्थिरप्रतिज्ञः स रणे पदान्न चलितः पदम् ।

After V. 69

AF add :—

गृहीत्वा कीचकं भीमो विरराम महाबलः ।

A² Continues: —

किंचिच्छेषा यदा रात्रिर्बभूव पुरुषर्षभः ।

After V. 71a.

Edns & MSS add:—

आक्रम्य च कटीदेशे जानुना कीचकाधमम् ।

after V. 71

ADK add:—

तं विमर्दन्तमाज्ञाय कीचकं पाण्डुनन्दनः ।

After V. 72a

D adds:—

जग्राह जयतां श्रेष्ठः केशेष्वेव पुनर्भृशम् ।

After V. 74

Edns and MSS. add :—

इत्येवमुक्त्वा पुरुषप्रवीरस्तं कीचकं क्रोधसरागनेत्रः ।
अस्त्रस्तवस्त्राभरणं स्फुरंतमुद्भ्रांतनेत्रं व्यसुमुत्ससर्ज ॥ १ ॥

After V. 75a

N adds:—

अभ्याहनन्महाराज पदाघातैश्च दारुणैः ।

After V. 78

Edns A[2]BCDEGKMN add:—

एवमुक्त्वा महाराज भीमो भीमपराक्रमः ।
पादेन पीडयामास तस्य कायं दुरात्मनः ॥ १ ॥
ततोऽग्निं तत्र प्रज्वाल्य दर्शयित्वा तु कीचकम् ।
पांचालीं स तदा वीरः इदं वचनमब्रवीत् ॥ २ ॥
प्रार्थयंति सुकेशांते ये त्वां शीलगुणान्विताम् ।
एवं ते भीरु वध्यंते कीचकः शोभते यथा ॥ ३ ॥
तत् कृत्वा दुष्करं कर्म कृष्णायाः प्रियमुत्तमम् ॥ ४ ॥

D omits portion from येत्वा in 3*a* to वध्यते in *b*, and H reads *b* only.

After V. 83

Edns ADGN add:—

पाणिपादविहीनं तु दृष्ट्वा च व्यथिताभवन् ।
निरीक्षंति ततः सर्वे परं विस्मयमागताः ॥
अमानुषं कृतं कर्म तत् दृष्ट्वा विनिपातितम् ॥ १ ॥

A[2] adds before this । नास्य ग्रीवा न चरणौ न पाणी न शिरस्तथा । इति स्म तं निरीक्षिते गंधर्वेण हत तदा । ( our v. 84 )

After V 84

AFKLM add:—

हतं हि दृष्ट्वा निशि सैन्यनाथं राज्ञो विराटस्य बलाभिमुख्याः ।
कीलालमिश्रं पिशितस्य पिंडं ते मेनिरे दत्तमुखाधिदेव्याः ॥ १ ॥

[ *SOUTHERN RECENSION.* ]

After V. 1

ST adds:—

मा भैषीर्गच्छ सैरन्ध्रि कीचकं हन्मि सानुजम् ।
कीचकं न हन्यां चेत् भ्रातृभिः सह दर्पितम् ॥
भ्रातृभिः सह संवासः कृष्णे नास्म भवेन्मम ।
कीचकस्यास्य पादौ च मुखं हस्तौ च मस्तकम् ।
भङ्क्त्वा सर्वाणि रोषेण गात्रे प्रावेशयाम्यहम् ॥

After V. 4

S. cl. adds:—

त्वद्दर्शनसमुत्थेन कामेनाकुलितेंद्रियम् ।
संकेतं सूतपुत्रस्य कारयस्व शुभानने ॥ १ ॥
SG, SA omit *a.*—

After V. 5

SK, ST add:—

तथा कुर्याश्च संकेतं सूतपुत्रस्य संवृतम् ।
आवयोः संगमं भीरु यथा मर्त्यो न बुध्यति ॥
कीचकस्य विनाशाय तथा कुरु नृपात्मजे ॥ १ ॥

ST omits *a.*—

After V. 6

S. cl. adds:—

भीमेन च प्रतिज्ञाते कीचकस्य वधे तदा ।
द्रौपदी च सुदेष्णायाः प्रविवेश पुनर्गृहम् ॥ १ ॥

After V. 9

ST adds:—

तथैव नियमे राजा न चैव प्रमदिष्यति ॥ १ ॥
यात्वियं प्रहतास्माभिः किं त्वं केनाभिरक्षिता ॥ २ ॥
न मत्तस्त्वमं प्राप्तां पुनस्त्वां ताडयाम्यहम् ॥ ३ ॥
तव स्नेहं करिष्यामि गर्हणं चापि रक्षितम् ॥ ४ ॥
तव कार्यं सानुनयात् साधयिष्यामि भामिनि ॥ ५ ॥

After V. 10a

S. cl. adds:—

नद्यहं त्वां ऋते भीरु चिरं जीवितुमुत्सहे ॥

### After V. 10b

ST adds :—

एवं नगरमर्हंतु त्वयि मे प्रियवादिनः ।
दासीसहस्रमायांतु गोसहस्रं सखेटकम् ॥ १ ॥

### After V. 11

SK, ST add:—

सुदासानां सहस्रं च महिषाणां सहस्रकम् ।
अंतःपुरसहस्रं च हेमकूटसहस्रकम् ॥
तुभ्यं दास्यामि सर्वाणि राजार्हाण्यंबराणि च ॥ १ ॥

### After V. 13a

S. cl. adds:—

अनुबोधादनर्थः स्यादयशश्च महद्भवत् ॥ १ ॥

### After V. 17

S. cl. adds :—

एकस्त्वं नर्तनागारं रात्रौ संकेतमाव्रज ।
तत्राहं भविता तुभ्यं वशगा नात्र संशयः ॥ १ ॥

कीचक उवाच ।

तथा भद्रे करिष्यामि यथा त्वं भीरु वक्ष्यसि ।
एकः सन्नर्तनागारमागमिष्यामि भामिनि ॥ २ ॥
समागमार्थं सुश्रोणि शपे च सुकृतेन मे ।
यथा त्वां नावबुध्यंति गंधर्वा वरवर्णिनि ॥ ३ ॥
सत्यं ते प्रतिजानामि गन्धर्वेभ्यो न ते भयम् ।
अलंकरिष्यास्यद्याहं त्वत्समागमनाय वै ॥ ४ ॥
वासांसि च विचित्राणि मनोज्ञानि तवापि च ।

द्रौपद्युवाच ।

यथा मां न त्यजेथास्त्वं तथा रंस्ये त्वया सह ॥ ५ ॥
तथा चेद्प्यहं सूत दर्शयिष्यामि ते सुखम् ।
यथानुभूतं भवता जन्मप्रभृति कीचक ॥ ६ ॥

SA, SG, ST omit last four lines.

### After V. 25

S. cl. adds:—

कालेन नियतं बद्धः कामेन च बलात्कृतः ॥ १ ॥

### After V. 29a

S. cl. adds:—

वाहुवीर्यानुरूपं च दर्शयाद्य पराक्रमम् ॥ १ ॥

### After V. 32

S. cl. adds :—

प्रसह्य निहनिष्यामि केशवः केशिनं यथा ॥ १ ।

### After V 33a

S. cl. adds :—

अहं भद्रे हनिष्यामि कीचकं मदनान्वितम् ॥ १
यस्त्वां कामाभिभूतात्मा दुर्लभामभिमन्यते ॥ २
अथ चेदवबुध्यंति सूतपुत्रं मया हतम् ॥ ३ ॥
निर्मनुष्यं करिष्यामि मत्स्यानामिदमालयम् ॥ ४
मया हतांश्चेम्मात्स्यांस्तु धार्तराष्ट्रो विबुध्यति ॥ ५

### After V. 34

S. cl. adds :—

नाहं शक्तोऽनुनयितुं कुंतीपुत्रं युधिष्ठिरम् ॥
काममन्ये ह्युपासंतु विनीता धर्मचारिणः ॥ १ ॥
त्वां तु दुःखमिदं प्राप्तां नाहं शक्नोम्युपेक्षितुम् ।
निर्वृता भव पांचालि कीचकस्य वधात्पुनः ॥ २ ॥

द्रौपद्युवाच ।

कीचकस्य वधं भीम यदि जानंति नागराः ।
त्वया कृतं महाबाहो नाहं जीवितुमुत्सहे ॥ ३ ॥

### After V. 35

S. cl. adds :—

अनुबुद्धे हि कौंतेयो धर्मराजो युधिष्ठिरः ।
पुनर्वनं व्रजेद्धीमाननुजैः परिवारितः ॥ १ ॥
कथं धर्मपरं ज्येष्ठमतिवर्तेत भारत ।
भीम भीताऽस्मि संदोषात्साधु मा चापलं कृथाः ॥
यथा न कश्चिज्जानीते सूतपुत्रं त्वया हतम् ।
तथा कुरुष्व कौरव्य यत्नवन्नरिमर्दन ॥
अदृश्यमानस्त्वं तस्य भिन्धि प्राणानरिन्दम ॥ २ ॥

**After V. 37**

S. cl adds:—

मया यदुक्तं पाञ्चालि धर्मराजसुतं प्रति ।
कोपादृते किमन्यच्च नानुवर्तेत को नृपम् ॥ १ ॥
एवमुक्त्वा महाबाहुस्तत्र पाण्डवनन्दनः ।
अर्धरात्रे तदोत्थाय सत्ववान्भीमविक्रमः ॥ २ ॥
अवदातेन मृदुना पटेनाच्छादितस्तथा ।
द्रौपदीं पृष्ठतः कृत्वा यत्रासीन्नर्तनालयः ॥ ३ ॥

v. 1 omitted in SG, ST, & SA; and *2b* *3a* omt in ST, SA *3b* omt. in SA

**After V. 39**

S cl. adds:—

तां मन्यमानः संकेते सैरन्ध्रीं काममोहितः ।

**After V. 40a**

S. cl. adds :—

पूर्वागतं गतस्तत्र भीममप्रतिमौजसम् ।

**After V. 44a**

S cl adds:—

अहं रूपेण संपन्नः स्नातो गुरुविभूषितः ।
नित्यमेव प्रियः स्त्रीणां सौभाग्यात्प्रियदर्शनः ॥ १ ॥
रूपस्य तन्मया प्राप्तं फलं कमललोचने ॥ २ ॥

**After V. 46a**

S cl. adds:—

त्वयापीदृग्गुणा नारी रूपशीलसमन्विता ।
अदृष्टपूर्वा पश्य त्वां यतो जानासि सूतज ॥ १ ॥
द्रक्ष्यसि त्वं मुहूर्तेन यथेयं स्त्री गुणान्विता ।
उपरंस्यसि कामाच्च शीघ्रं त्वं स्प्रष्टुमर्हसि ॥ २ ॥
स्पर्शं वेत्सि विदग्धस्त्वं कामधर्मविचक्षणः ।
स्त्रीणां प्रीतिकरो नान्यस्त्वत्समः पुरुषस्त्विह ॥ ३ ॥

ST adds:—त्वादृशःपुरुषो लोके दृष्टपूर्वो न कश्चन before verse 3. SG. *om* v. 3

**After V. 49a**

S. cl. adds·—

स केशेषु परामृष्टो बलेन बलिनां वरः ।

After V. 49

ST adds:—

इत्युक्त्वा तु गृहीत्वाथ केशेषु त्वस्य पांडवः ।
तलेन ताडयमास वायुतुल्यपराक्रमः ॥
स तु केशे परामृष्टो बलेन बलिनां वरः ।
उवाच कीचको भीमं न वेत्सि बलमात्मनः ॥
मम शौर्यं प्रतापं च नामकीर्तिमनुत्तमां ।
विद्रवंति जनाः सर्वे मामवेक्ष्य सुदुर्जयं ॥
सुरगंधर्वसिद्धाश्च यक्षकिन्नरचारिणाः ।
त्वमल्पबललोभार्तः किं नु जानासि बालक ॥
मर्तुकामस्त्वमद्यैव वधं प्राप्स्यसि वै मया ।
अथवा युद्धकामस्त्वं स्थिरो भव भयं जहि ॥
एवमुक्तस्तथा भीमः कीचकं प्रत्युवाच सः ।
अद्य त्वां निहनिष्यामि दुरात्मानं दुरासदं ॥
परस्त्रीगतचित्तं त्वां गतश्रीबलसंपदं ।
एवमुक्त्वा समासाद्य केशान् जग्राह पांडवः ॥
तलेन ताडयामास तरसा भीमविक्रमं ।

After V. 49a

S. cl. adds:—

गृहीत्वा कीचकं भीमो विरराज महाबलः ।
गृहीत्वा ग्रासकामस्तु सिंहः क्षुद्रमृगं यथा ॥

After V. 50

S. cl. except SG adds :—

कीचकानां च मुख्यस्य नराणामुत्तमस्य च ।

After V. 51

SK, ST add:—

शार्दुलाविव गर्जन्तौ तार्क्ष्यनागाविवोद्यतौ ।
समयत्नौ समक्रोधौ पतितौ भीमकीचकौ ॥ १ ॥
गजाविव मदोन्मत्तौ नदन्तौ पतितौ क्षितौ ।
वृषभाविव वल्मीकं मृद्नन्तौ समविक्रमौ ॥ २ ॥

After V. 69

S. cl. adds:—

पुनश्चातिबलस्तत्र कीचको बलदर्पितः ।
व्यायच्छच्चैव दुर्धर्षः पांडवेन तरस्विना ॥ १ ॥
मुष्टिना भीमसेनेन शिरस्यभिहतो भृशाम् ।
कीचको वृत्तरक्ताक्षो गतासुरपतद्भुवि ॥ २ ॥

ST continues—समाकम्य च मपुद्रो वेगेन स वृकोदरः ।

**After V. 77a**

S. cl. adds:—

तत्राग्निं स्वयमुज्वाल्य पाणिसंघर्षजं बली।

**After V. 78a**

SK adds:—

त्वयि कामुकमत्यन्तं पापिनं पारदारिकम् ।

**After V. 78**

SK adds:—

प्रार्थयन्ते सुकेशान्ते ये त्वां शीलसमन्विताम्।
एवं स्वपन्ति ते भीरु शेतेऽयं कीचको यथा ॥
यस्त्वामभ्यहनद्भद्रे पदा भूमौ निपात्य च ।
एवमुक्त्वा महाबाहुर्गन्धर्वेण हतं तदा ॥
विज्ञापनार्थमन्येषां विरराम महाहवम् ॥

First two lines are in SG, ST also.

**After V. 79**

S cl. adds:—

स्नात्वानुलेपनं कृत्वा व्यापूर्य च मनोरथम् ।
सुखोपविष्टः शयने भीमो भीमपराक्रमः ।
ततः कृष्णा यदा मेने गतं भीमं महानसम् ॥

**After V. 82**

SK, ST, SA add:—

तस्यास्तं निहतं दृष्ट्वा कीचकस्य सहोदराः ।

**After V. 83**

SK, adds:—

पार्ष्णिपाणिशिरोहीनं दृष्ट्वा ते विस्मिताऽभवन् ।

**After V. 84**

ST adds:—

ततस्ततः पृथक्पाणी पृथक्पादौ पृथङ्मुखं ।
पृथग्ग्रीवा पृथग्बन्धं मांसापिंडमजायतां ॥
सुव्यक्तमिह जानीमो गंधर्वेण हतं त्विमं ॥

SK adds:—

अमानुषं कृतं कर्म तं दृष्ट्वा विनिपातितम् ।
निरीक्षते ततः सर्वे परं विस्मयमागताः ॥

## ADHYĀYA 22.

### [ *NORTHERN RECENSION.* ]

**After V. 3**

L adds:—

तत्रास्य बान्धवाः सर्वे सूतपुत्राः समागताः ।

**After V. 17a**

MSS & Edns add :—

ततः स व्यायतं कृत्वा वेषं विपरिवर्त्य च ।

**After V. 18**

Edn ABCGEGKN add:—

स लङ्घयित्वा प्राकारं निःसृत्य च पुरोत्तमात् ।
जवेन पतितो भीमः सूतानामग्रतस्तदा ॥ १ ॥
चितासमीपं गत्वा स तत्रापश्यद्वनस्पतिम् ।
तालमात्रं महास्कन्धमूर्ध्वशुष्कं विशांपते ॥ २ ॥
तं नागवदुपक्रम्य बाहुभ्यां परिरभ्य च ।
स्कंधमारोपयामास दशव्यामं परंतपः ॥ ३ ॥

G omits v. 1.

**After V. 21**

Edn[1] ADFGHKLMN add :—

तमन्तकमिवायान्तं गन्धर्वं प्रेक्ष्य ते तदा ।
दिधक्षन्तस्तदा ज्येष्ठं भ्रातरं ह्युपकीचकाः ॥
परस्परमथोचुस्ते विषादभयकम्पिताः ॥ १ ॥

H omits *c.*

**After V. 24**

Edns A[2]CDGN add:—

वृक्षेणैतेन राजेन्द्र प्रभञ्जनसुतो बली ।

**After V. 26**

K adds:—

अन्येन त्वं पथा याहि सुदेष्णाया निवेशनम् ।

**After V. 27a**

AFHKLM add :—

इत्युक्ता भीमसेनेन अहृदया सा च तत्क्षणात् ।
अपासर्पन्न मां कश्चित् पश्येदित्यभिशङ्कया ॥

After this A reads v. 23 from the following Adh. बृहन्नडापि कन्याणी etc. omitting the intervening portion. A omits *a* above

[ *SOUTHERN RECENSION.* ]

**After V. 3a**

S. cl. adds :—

कीचकं बलसम्मत्तं दुर्धर्षं येन केनचित् ।
गंधर्वेण हतं श्रुत्वा कीचकं पुरुषर्षभम् ॥

**After V. 5a**

S. cl. adds :—

हसन्निव तदाऽमर्षान्निर्दहन्निव चक्षुषा ।

SA omits this line.

**After V. 6**

S. cl. adds :—

इयं हि दुष्टचरिता मम भ्रातुरमित्रिणी ।
यत्कृते मरणं प्राप्तो नेयं जीवितुमर्हति ॥ १ ॥
सहेयं दह्यतां सूता आमन्त्र्य च जनाधिपम् ।
हतस्यापि हि गन्धर्वैः कीचकस्य प्रियं भवेत् ॥ २ ॥

**After V. 8**

S. cl. adds :—

ततस्ते समनुज्ञाताः सर्वे तत्रास्य बान्धवाः ।
रुरुदुः कीचकं दृष्ट्वा परिवार्याभितः स्थिताः ॥ १ ॥
आरोप्य कृष्णां सह कीचकेन ।
निबध्य केशेषु च पादयोश्च ॥
ते चापि सूता वचनैरवोच- ।
न्नुद्दिश्य चैनामभिवीक्ष्य कृष्णाम् ॥ २ ॥
यस्याः कृतेऽयं निहतो महात्मा ।
तस्माद्धि सा कीचकमार्गमेतु ॥
अनार्यसत्वेन च कीचकेन ।
गतासुना सुंदरि स्वर्गलोकम् ॥ ३ ॥
सा तेन कृष्णा शयने निबद्धा यशस्विनी चैव मनस्विनी च ।
अनार्यसत्वेनमहार्यसत्वा गतासुना सा प्ररुरोद कृष्णा ॥ ४ ॥
विलम्ब्यमाना विवशा हि दुष्टै- ।
स्तत्रैव पर्यङ्कवरे शुभाङ्गी ॥ ५ ॥

ST adds before v. 1:—

ततश्च तां समारोप्य निबध्याथ सुमध्यमाम् ।
अनुरुद्यम्य ते सर्वे श्मशानाभिमुखास्तदा ॥

3 *b*–omitted in ST.
4 *b*–omitted in SG, SA

**After V. 12**

S. cl. adds:—

येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयते महान्।
ते मे वाचं विजानन्तु सूतपुत्रा नयंति माम् ॥

**After V. 14**

S. cl. adds:—

येषां वीर्यमतुल्यं तु शक्रस्येव बलं यशः।
राजसिंहा इवाग्रयास्ते मां जानन्तु सुदुःखिताम् ॥

**After V. 17a**

S. cl. adds:—

ततः स व्यायतं बद्ध्वा वस्त्रं विपरिवेष्ट्य च।

**After V. 18**

S. cl. adds:—

स लङ्घयित्वा प्राकारं निःसृत्य च पुरोत्तमात्।
जवेनोत्पतितो भीमः सूतानामग्रतस्तदा ॥ १ ॥
चितासमीपं गत्वा स तत्रापश्यन्महाबलः।
तालमात्रं महास्कन्धमूर्ध्वशुष्कं वनस्पतिम् ॥ २ ॥
तं नागवदुपक्रम्य बाहुभ्यां परिरभ्य च।
वृक्षमुत्पाटयामास भीमो भीमपराक्रमः ॥ ३ ॥

1 *a* omittd in SA.

**After V. 19**

ST adds:—

स तं वृक्षं महोत्सेधं सुस्कंधं बलीनं बली।
स्कन्धमारोपयांचक्रे दशव्यामं परंतपः ॥
तं प्रदीप्यांगमुद्यम्य ज्वलंतं सर्वतस्तदा ॥ १ ॥

**After V. 21**

S. cl. adds:—

तमन्तकमिव क्रुद्धं गन्धर्वभयशङ्किताः।
दिधक्षन्तस्तथा ज्येष्ठं भ्रातरं चोपकीचकाः।
परस्परमथोचुस्ते विषादभयमोहिताः ॥ १ ॥

**After V. 22a**

S. cl. adds:—

प्रबुद्धाः सुमहाभागा गंधर्वाः सूर्यवर्चसः।

### After V. 24a.

SK adds—

अथ भीमः समुत्पत्य द्रवतां पुरतोऽभवत् ।
ते तं दृष्ट्वा भयोद्विग्ना निश्चेष्टाः समवस्थिताः ॥ १ ॥
दृष्ट्वा ताञ्शतसंख्याकान्स वज्री दानवानिव ।
एकेनैव प्रहारेण दश सप्त च विंशतिम् ॥
अष्टादश च पञ्चाशज्जघान स वृकोदरः ॥ २ ॥

### After V. 24

S. cl. adds:—

वृक्षेणैकेन राजेन्द्र प्रभंजनसुतो बली ।
वायुवेगसमः श्रीमान् सर्वान्सूतानशेषतः ॥
तान्निहत्य महाबाहुर्भीमसेनो महाबलः ॥ १ ॥
a omitted in SG, ST, SA. ST further adds:—
प्रेतेन तेन संहत्या सूतपुत्रानशेषतः ।

### After V. 25

SK adds:—

अश्रुपूर्णमुखीं भीतामुद्धरन्स वृकोदरः ।
मा खिदस्त्वं याज्ञसेनि पातिव्रत्यव्रते स्थिता ॥
पातिव्रत्ये स्थिता नारी व्रतं रक्षेत्सदात्मनः ॥ १ ॥
पुरा स्त्री देवरातस्य पतिप्रीता शिरोमणिः ।
कदाचिद्भर्तृरूपेण रक्षसाऽपहृता सती ॥ २ ॥
कस्यचित्सरसस्तीरे तां निवेश्य स राक्षसः ।
तद्भर्तृरूपं संत्यज्य रक्षो भूत्वा सुदारुणम् ॥ ३ ॥
साम्ना दानेन भेदेन सा यदा नान्वमन्यत ।
तदा तां पातयित्वा स मैथुनायोपचक्रमे ॥ ४ ॥
ततः सा धैर्यमास्थाय विवरं न ददौ तदा ।
ततः स खड्गमुत्कृष्य भीषयामास तां सतीम् ॥ ५ ॥
साऽपि त्यक्तभया साध्वी प्राणत्यागे सुनिश्चिता ।
प्रतिज्ञामकरोत्कृष्णे पातिव्रत्यपरायणा ॥ ६ ॥
आराधितो यदि मया भर्ता मे दैवतं महत् ।
कर्मणा मनसा वाचा गुरवस्तोषिता मया ॥ ७ ॥
तेन सत्येन योनिर्मे भवत्वद्य शिला दृढा ।
एवं तया प्रतिज्ञाते तद्योनिः सा शिलाऽभवत् ॥ ८ ॥
अन्तरा नाभिजान्वोर्यत्तत्सर्वं च शिलाभवत् ।
ततः स खड्गमुद्धृत्य वेगेनास्याः शिरोऽहरत् ॥ ९ ॥
जया नाम सती साऽभूत् पार्वत्या गणमांसवत् ।
तस्मात्पतिव्रतायाश्च दुःसमल्पं सुखं यद् ॥ १० ॥

After V 27a

S cl. adds:—

अन्येन त्वं पथा शीघ्रं सुदेष्णाया निवेशनम् ।

After V 27

S. cl. adds:—

यथा नौ नावबुध्येरन् रात्रावेवं व्यवस्थितौ ।

वैशंपायन उवाच ।
सागच्छन्नगरं कृष्णा भीमेनाश्वासिता सती ॥ १ ॥
कृतकृत्या सुदेष्णाया भवनं शुभलक्षणा ।
शचीव नहुषे शप्ते प्रविवेश निविष्टपम् ॥ २ ॥
भीमोऽप्यमितवीर्यस्तु बलवानरिमर्दनः ।
सर्वांस्तान् कीचकांस्तत्र हत्वा धर्मात्मजानुजः ॥ ३ ॥
निःशेषं कीचकान् हत्वा रामो रात्रिचरानिव ।
जितशत्रुरदीनात्मा प्रविवेश पुरं ततः ॥ ४ ॥

After V. 29

S. cl. adds:—

न गंधर्वभयात्किंचिद्वक्तुं कीचकबांधवाः ।
अशक्नुवन्तस्तांस्तत्र भयादप्यभिवीक्षितुम् ॥ १ ॥
विराटनगरे चापि सर्वे मात्स्याः समागताः ।
काल्यं पंचशतं चैतानपश्यन्सारथीन् हतान् ॥ २ ॥

After V. 30

ST adds:—

षट् शतं कीचकानां च विकीर्णं पतितं भुवि ।

---

## ADHYĀYA 23.

[ *NORTHERN RECENSION.* ]

Before V. 1

K adds:—

ततो रजन्यां व्युष्टायां उत्थाय सगणो नृपः ॥
कल्पे शतं षडधिकं हतान् शुश्राव कीचकान् ॥ १ ॥

After V. 28

Dns ABEGHKLM add:—
पुंसामिष्टश्च विषयो गंधर्वाश्चानिवेदनाः ।

### After V. 30

KL add:—

एवमुक्ताथ कैकेयी नृपायोक्त्वा परावसत् ।
पूर्णकामा कृता कृष्णा वायुपुत्रेण चावसत् ॥ १ ॥
L. omits the first line.

## [ *SOUTHERN RECENSION.* ]

### After V. 5

SK adds:—

सर्वाङ्गसौष्ठवयुतां रूपलावण्यशालिनीम् ॥ १ ॥
पश्यतामनिमेषेण चक्षुषा वनितां शुभाम् ।
मनसश्चक्षुषश्चैव प्रतिबन्धो न विद्यते ॥ २ ॥
तस्मात्तां यः पुमान्दृष्ट्वा रूपेणाप्रतिमां भुवि ।
गच्छेत्कामवशं मूढो गन्धर्वैः स निहन्यते ॥ ३ ॥
निष्कासयैनां भवनात्पुराच्चैव विशेषतः ।
कालः प्रविश्य सैरन्ध्रीं पुरं नाशयते ध्रुवम् ॥ ४ ॥

### After V. 7

SK, SG, ST add:—

इत्युक्त्वा परमोद्विग्नः प्रविश्यान्तःपुरं शुभम् ॥

### After वैश° of V. 11

SK adds:—

एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ॥
अदहन् कीचकान्सर्वान् संस्कारैश्चैव सर्वशः ॥ १ ॥

### After V. 13

SK, ST add:—

प्रदुद्रुवुश्चाप्यपरे तथा जना हस्तैश्च चक्षूंषि पिधाय मोहिताः ॥
मा पश्यत स्मेति च तां ब्रुवन्तस्तथा जनाश्चुक्रुशुरार्तरूपाः ॥ १ ।
तामद्य यः पश्यति रूपशालिनीं शयीत भग्नोऽत्र यथैव कीचकाः
इति ब्रुवन्तो भयविह्वलचेतसो भयेन गन्धर्वगतेन मोहिताः ॥ २ ॥

### After V. 15

S cl. adds:—

कीचकेभ्यो विनिर्दोषामनाथां वसतीं गृहे ॥
यो मा रक्षति संत्रस्तां गंधर्वाय नमोस्तु ते ॥ १ ॥
SK further adds—

भीमसेन उवाच ।
ये यस्या विचरन्तीह पुरुषा वशवर्तिनः ।
तेषां च वशगा नित्यं विचर त्वं यथेप्सितः ॥ १ ॥

### After V. 16

S. cl. adds:—

वैशंपायन उवाच ।
तयोस्तद्वचनं श्रुत्वा जह्रिरे नेतरे जनाः ।
ततः पांचालराजस्य सुता चापि जगाम ह ॥ १ ॥

### After V. 22a

SK adds:—

सुखेन वर्तसे येह न तद्दुःखमवाप्यते ।

### After V. 24a

SK, ST add:—

त्वत्तः कृच्छ्रतरं वासं वसेयमहमंगने ।

### After V. 28

S. cl. adds:—

चित्तानि च नृणां भद्रे रक्तानि स्पर्शजे सुखे ।
तस्मात्त्वत्तो भयं मह्यं राष्ट्रस्य नगरस्य च ॥ १ ॥
गच्छाद्यैव यथेष्टं त्वं नगराद्यत्र रंस्यसे ।
त्वन्निमित्तं शुभे मह्यं सर्वो बन्धुजनो हतः ॥ २ ॥
नृशंसा खलु ते बुद्धिर्भ्रातॄणां मे कृतो वधः ।
तस्माद्गन्धर्वराजेभ्यो भयमद्य प्रवर्तते ॥ ३ ॥
यथेष्टं गच्छ सैरन्ध्रि स्वस्ति चेह यथा भवेत् ।

वैशंपायन उवाच ।
सुदेष्णाया वचः श्रुत्वा सैरन्ध्री चेदमब्रवीत् ॥ ४ ॥

### After V. 30

S. cl. adds:—

राज्ञः कृतोपकाराश्च कृतज्ञाश्च सदा शुभे ।
साधवश्च बलोत्सिक्ताः कृतप्रतिकृतेप्सवः ॥ १ ॥
अर्थिनी मा ब्रवीत्येषा यद्वातद्वेति चिन्तय ।
भरस्व तदहर्मात्रं तत्ते श्रेयो भविष्यति ॥ २ ॥

वैशंपायन उवाच ।
तस्यास्तद्वचनं श्रुत्वा कैकेयी दुःखमोहिता ।
उवाच द्रौपदीमार्ता भ्रातृव्यसनकर्शिता ॥ ३ ॥
वस भद्रे यथेष्टं त्वं त्वामहं शरणं गता ।
त्रायस्व मम भर्तारं पुत्रांश्चैव विशेषतः ॥ ४ ॥
इत्युक्त्वा राजशार्दूल राज्ञे सर्वं न्यवेदयत् ।
निंदाद्गानिमिमां भीदः कृतकृत्या नियासये ॥ ५ ॥

ST adds after v. 5*a*,

तामुवाच विराटश्च भयेन महतावृतः ।

and after v. 5 adds:—

एवं राज्ञाभ्यनुज्ञाता वासयामास तां शुभाम् ॥

SG, SA omit v. 5.

---

## ADHYĀYA 24.

### [ *NORTHERN RECENSION.* ]

**Before V. 1**

L adds :—

इति पांडवानिगूढवासं संवत्सर चरितमभिधाय पाराशर्यः
कीचकवध्यांतं यत्र त्रयेदशाहमज्ञाननशेषवासानिवृत्तये ?
कुरूपतिकार्यानुसंधानाय दूराम्वेषितफलावाप्तये हि
सुयोधनादीनां चारप्रत्याचारमभिधातुमाह ?

**After V. 14a**

Edns CG add :—

नहि विद्मो गति तेषां वासं हि नरसत्तम ।

**After V. 18**

Edns & MSS add:—

इमां च नः प्रियां वीर वाचं भद्रवतीं शृणु ।

### [ *SOUTHERN RECENSION.* ]

**Before V. 1**

S. cl. adds:—

कीचके तु हते राजा विराटः परवीरहा ।
शोकमाहारयत्तीव्रं सामात्यः सपुरोहितः ॥ १ ॥

**After V. 2**

S. cl. adds:—

सांपराये परिकुष्टो बलवान्दुर्जयो रणे ।

**After V. 6**

S. cl. adds:—

आगम्य हास्तिनपुरं धार्तराष्ट्रमरिंदमम ।

After V. 8a

S. cl. adds: —

प्रणम्य शिरसा भूमौ वर्धयित्वा जयाशिषा ।
आसीनं सूर्यसंकाशो कांचने परमासने ॥ १ ॥
उपास्यमानं सचिवैर्मरुद्भिरिव वासवम् ।
विद्वद्भिर्गायकैः सार्धं कविभिः स्तुतिपाठकैः ॥ २ ॥
अनेकैरपि राजन्यैः सेवितं सपरिच्छदैः ॥ ३ ॥

SA[1] reads v. 1 and 2a, before v. 7b. v. 2b and 3 omitted in SA, SG, ST.

After V. 13

S. cl. adds: —

गिरीणां कूटकुञ्जेषु कन्दरोदरसानुषु ।
नदीप्रस्रवणेष्वेव ह्रदेषु च सरस्सु च ॥ १ ॥
गह्वरेषु च दुर्गेषु ग्रामेषूपवनेषु च ।
दुर्विज्ञेया गतिस्तेषां मृग्यतेऽस्माभिरेव च ॥ २ ॥
गजव्याघ्रसमीपेषु सिंहान्ते शरभान्तरे ॥ ३ ॥

After V. 16a

S. cl. adds:—

नरदेव यथोद्दिष्टं न च विद्मश्च पाण्डवान् ।
निर्वृतो भव नष्टास्ते स्वस्थो भव परंतप ॥ १ ॥

SG further adds:—

नच विद्मो गतिं तेषां पाण्डवानां महात्मनाम् ।
पाण्डवानां प्रवृत्तिर्वा कर्म चापि गुणांस्तथा ॥ १ ॥

After V. 16a

S cl. adds:--

सर्वा च पृथिवी कृत्स्ना सशैलवनकानना ।
सराष्ट्रनगरग्रामा पत्तनैश्च समन्विता ॥
अन्वेषिता च सर्वत्र न च पश्याम पाण्डवान् ॥ १ ॥

'After V. 18

S. cl. adds:—

इमां च नः प्रिया वीर वाचं भद्रवतीं शृणु ।

After V. 20a

S. cl. adds: —

स्यालो राज्ञो विराटस्य सेनापतिरुदारधीः ।
सुदेष्णायानुजः क्रूरः शूरो वीरो गतव्ययः ॥ १ ॥

उत्साहवान् महावीर्यो नीतिमान्बलवानपि ।
युद्धज्ञो रिपुवीर्यघ्नः सिंहतुल्यपराक्रमः ॥ २ ॥
प्रजारक्षणदक्षश्च शत्रुग्रहणशक्तिमान् ।
विजितारिर्महायुद्धे प्रचण्डो मानतत्परः ॥ ३ ॥
नरनारीमनोल्हादी धीरो वाग्मी रणप्रियः ।
पुण्यकर्माऽर्थकामानां भाजनं मनुजोत्तमः ॥ ४ ॥
स हतो निशि गन्धर्वैः स्त्रीनिमित्तं नराधिप ।
अमृष्यमाणो दुष्टात्मा निशीथे सह सोदरैः ॥
सुहृदश्चास्य निहता योधाश्च प्रहरैर्हताः ॥ ५ ॥
गन्धर्वाणां च महिषी काचिदस्ति नितम्बिनी ।
सैरन्ध्री नाम तां दृष्टो दुष्टात्माऽकामयद्बली ॥ ६
इत्येवं श्रुतमस्माभिर्गन्धर्वैर्निहतो निशि ।
बान्धवैर्बहुभिः सार्धं कीचको निहतो यतः ॥ ७
अद्य प्रभृति राजेन्द्र पाण्डवान्वेषणं प्रति ।
चाराश्च सर्वतश्चर्तुं प्रेषयेति मतिर्हि नः ॥ ८ ॥

v. 5 omitted in SA v. 6 omitted in SG, ST, SA

**After V. 21**

SK adds:—

एतावच्छ्रुतमस्माभिर्भद्रं तेऽस्तु नराधिप ।

---

## ADHYĀYA 25.

[ *NORTHERN RECENSION.* ]

**After V. 1a**

K adds:—

जानन्नपि महाराज सशल्येनांतरात्मना ।
कीचकस्य वधं श्रुत्वा न चाकारमदर्शयत् ॥ १ ॥
केवलं शौर्यमालंब्य गतसत्व इव श्वसन् ।
भूयः प्रत्यागतप्राणो धृतराष्ट्रात्मजो बली ॥ २ ॥

L reads for 2 *b*:—

भूयः प्रत्यागतप्राणैः शरीरस्थैश्चप्रेक्षकाः ।

and further adds:—

श्रुत्वा तेषांवचस्तावन् चिंतयामास कौरवः ।

A² reads 1 *a* only and omits the other 3

A² L read the above after v. 3 *a* of the

After V. 14a

Edns A²BCDEGKLN add:—

ते यांतु दत्तदेया वै भूयस्तान्परिमार्गितुम् ॥

L अपरे तत्र गच्छन्तु चराः प्रच्छन्नचारिणः। for ते यातु दत्त &c. A² also has:—

तानहं प्रेषयिष्यामि यतन्तो दृढभक्तयः।

After V. 17a

K adds:—

प्रत्याहर्तुं त्र मूढास्ते पथि नाशमतो गताः

[ *SOUTHERN RECENSION.* ]

After V. 5

S. cl. adds:—

विज्ञातव्या मनुष्येंद्रास्तर्कया सुप्रणीतया।
निपुणैश्चारपुरुषैः प्राज्ञैर्दक्षैः सुसंवृतैः ॥ १ ॥

After V. 7

SK adds:—

दुर्योधनेनैवमुक्ते वचनेतीव दुःखिना।

After V. 14a

S cl adds—

ते यान्तु दत्तदेयावै भूयस्तान् परिमार्गितुम्।

After V. 15a

S. cl. adds:—

घ्राणं पश्यन्ति पशवो वेदैरेव द्विजोत्तमाः।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ १ ॥
यथोक्ताश्चारपुरुषा मृगयंतु पुनः पुनः।

After V. 17a

S. cl. adds:—

द्वीप वा परम प्राप्ता गिरिदुर्गवनेष्वपि।
हीनदर्पा निराशास्ते भक्षिता वापि राक्षसैः ॥ १ ॥

Before V. 18

SA, SG, SF add.—

इति तेषां गतिर्नासः प्रवृत्तिर्नोपलभ्यते।

## ADHYĀYA 26.

[ *NO ADDITIONS IN THE NORTHERN RECENSION.* ]

[ *SOUTHERN RECENSION.* ]

**After V. 7a**

SA adds:—

सर्वोपायैर्यतस्व त्वं यथा पश्यामि पांडवान् ।

**After V. 8a**

S. cl adds:—

प्रवृत्तिरुपलभ्येत तथानीतिर्विधीयताम् ।
सर्वोपायैर्यतस्व त्वं यथा पश्यसि पांडवान् ॥
( SA repeats the second half here. )

**After V. 10**

SK adds:—

विविधैस्तत्परैः सम्यङ्निर्भीकैस्तज्ज्ञसंमतैः ।
अन्वेष्टव्या मनुष्येंद्र पांडवाश्छन्नचारिणः ॥

---

## ADHYĀYA 27.

[ *NORTHERN RECENSION.* ]

**After V. 3a.**

Edns & MSS add:—

असत्सु दुर्लभां नित्यं सतां चाभिमतां सदा ।

**After V. 4**

A² adds:—

निःसंशयं तथैवैतत् भूयश्चैनां विबोधत ।

DN add:—

तद्वाक्यमपि नन्दामि न मेऽस्त्यत्र विचारणा ।

**After V. 6a**

Edns A¹BCDEGKLN add:—

क्षत्रधर्मरता नित्यं केशवानुगताः सदा ।
प्रवीरपुरुषास्ते वै महात्मानो महाबलाः ॥

**After V. 15**

Edns & MSS. add:—

जनो जनपदे भाव्यो यत्र राजा युधिष्ठिरः।

**After V. 27**

DN add:—

सर्वभूतदयायुक्तः सदा निर्मलमानसः।

N further adds:—

भविष्यति जनस्तत्र यत्र राजा युधिष्ठिरः।

**After V. 30**

Edns and MSS add:—

ह्रीः श्रीः कीर्तिः परं तेज आनृशंस्यमथार्जवम्।

[ *SOUTHERN RECENSION.* ]

**After V. 3a**

S. cl. adds:—

पांडवे नित्यमव्यग्रां गिरं भीष्मः समाददे।
असत्सु दुर्लभां नित्यं सतां चाभिमतां सदा॥

**After V. 7**

SK adds:—

क्षत्रधर्मरता नित्यं केशवानुगताः सदा।
प्रवीरपुरुषास्ते वै महात्मानो महाबलाः॥

**After V. 11a**

S. cl. adds:—

अयुक्तं तु मया वक्तुं तुल्या मे कुरुपांडवाः।
निवासं पांडुपुत्राणां संचिन्त्य च वदाम्यहम्॥
बहुना किं प्रलापेन यतो धर्मस्ततो जयः॥

**After V. 12**

S cl. adds:—

निवासे पांडुपुत्राणां शृणुष्व मनुजाधिप।

SK, ST further add:—

भ्रातृभिः सहितो वीरः कृष्णया च महायशाः।
किमर्थं स महाराजो नात्मश्रेयो भविष्यति॥ १॥
पांडवो निहृतः पूर्वं यथावद्विदितं तव।
क्लेशितश्च पुरे नित्यं राज्यकामैश्च सांप्रतम्॥ २॥

छन्नश्चरति तस्मात्स प्रकृत्या नीतिमान्नृपः ।
वर्षमेकं सुसंछन्नमुष्य वासमनुत्तमम् ॥ ३ ॥
आयाति चोदये काले क्षिप्रं द्रक्ष्यसि पांडवम् ।
सोदरैः सहितं वीरं द्रौपद्या च परंतप ॥ ४ ॥
संविधत्स्व महाबाहो यथा नः स्यात्सुखोदयः ।
यस्मिन्स राजा वसति च्छन्नः सत्वभृतां वरः ॥ ५ ॥
भविष्यंति नरास्तत्र रागमोहविवर्जिताः ।
नाधयो हि महाराज न व्याधिः क्षत्रियर्षभ ॥ ६ ॥

**After V. 15**

S cl. adds:—

प्रियवाक्सत्यवाक्शूरो धर्मशीलो जितेंद्रियः ।

SG adds after the above:—

पुरे जनपदे भाव्यो यत्र राजा युधिष्ठिरः ।

**After V. 20a**

S. cl. ( except SA[1]) adds :—

नीरोगास्तत्र विद्यंते वधबंधा न संति च ।
न चोरा न च दंडाश्च न च बाधा भवंत्युत ॥
नाशक्ता मच दुष्टाश्च यत्र राजा युधिष्ठिरः ॥

**After V. 21**

S. cl. adds:—

सलिलानि प्रसन्नानि सर्वे भावाश्च शोभनाः ।

**After V. 27**

S. cl. adds:—

नित्योत्सवप्रमुदितो नित्यहृष्टः श्रिया वृतः ।
भविष्यति निवासोऽयं यत्र राजा युधिष्ठिरः ॥

SA[2] omits *a*.

**After V. 30**

S cl. adds:—

ह्रीः श्रीः कीर्तिः परं तेज आनृशंस्यमथार्जवम् ।

**After V. 32**

S. cl. adds:—

कुलस्य हि क्षमं तात यदहं प्रब्रवीमि ते ।

After V 38

SG, ST, SA add —

निरास पाण्डुपुत्राणा दर्शन मृगयामहे ।

After V 46

S cl adds —

भीष्मद्रोणकृपस्ते कर्णदु शासनादिभि ।
तता दुर्योधनो वाक्य श्रुत्वा तेषा महात्मनाम् ॥ १ ॥
मुहूर्तमनुसचिंत्य सचिवानिदमब्रवीत् ।
श्रुतमेतन्मया पूर्वं कथासु जनसंसदि ॥ २ ॥
वीराणा शास्त्रविद्षा प्राज्ञाना मतिनिश्चय ।
इतिना सारफल्गुत्वे जानामि नयचक्षुषा ॥ ३ ॥
सत्त्व बाहुबल वीर्यं प्राण शारीरसभव ।
साप्रत मानुष लोके सदैत्यनरराक्षसे ॥ ४ ॥
चत्वारस्तु नरव्याघ्रा बले शक्रोपमा भुवि ।
उत्तमा प्राणिना तेषा नास्ति कश्चिद्बले सम ॥ ५ ॥
समप्राणबला नित्य सपूर्णबलपौरुषा ।
बलदेवश्च भीमश्च मद्रराजश्च वीर्यवान् ॥ ६ ॥
चतुर्थ कीचकस्तेषा पचम नानुशुश्रुम ।
अन्योन्यानन्तरबला परस्परजयैषिण ॥ ७ ॥
बाहुयुद्धमभीप्सतो नित्य सरब्धमानसा ।
तेनाहमवगच्छामि प्रत्ययेन वृकोदरम् ॥ ८ ॥
मनस्यभिनिविष्ट मे व्यक्त जीवन्ति पाडवा ।
तथाह कीचक मन्ये भीमसेनेन मारितम् ॥ ९ ॥
सैरध्रीं द्रौपदीं मन्ये नात्र कार्या विचारणा ।
शङ्के कृष्णानिमित्त तु भीमसेनेन कीचक ॥ १० ॥
गधर्वव्यपदेशेन हतो निशि महाबल ।
को हि शक्त परो भीमात्कीचक हन्तुमोजसा ॥ ११ ॥
शस्त्र विना बाहुबलात्तथा सर्वाङ्गचूर्णने ।
मर्दन वा तथा तीव्र चर्ममांसास्थिचूर्णनम् ॥ १२ ॥
रूपमन्यत्समास्थाय भीमस्यैतद्विचेष्टितम् ।
ध्रुव कृष्णानिमित्त तु भीमसेनेन सूतजा ॥ १३ ॥
गधर्वव्यपदेशेन हता निशि न सशय ।

[ ST adds —

तस्मात्प्रियामिमोदाय कृष्णा सप्रेक्ष्य सूतज ।
कामजांश्च कामात्मा भीमात्प्राप क्षय ध्रुवम् ॥ ]

पितामहेन ये चोक्ता देशस्य च जनस्य च ॥ १४ ॥
गुणास्ते मत्स्यराष्ट्रेषु बहुशोऽपि मया श्रुताः ।
विराटनगरे मन्ये पाण्डवाश्छन्नचारिणः ॥ १५ ॥
निवसन्ति पुरे रम्ये तत्र यात्रा विधीयताम् ।
मत्स्यराष्ट्रं गमिष्यामो ग्रहीष्यामश्च गोधनम् ॥ १६ ॥
गृहीते गोधने नूनं तेऽपि योत्स्यन्ति पाण्डवाः ।
अपूर्णे समये चापि यदि पश्येम पांडवान् ॥ १७ ॥
द्वादशान्यानि वर्षाणि प्रवेक्ष्यंति पुनर्वनम् ।
तस्मादन्यतरेणापि लाभोऽस्माकं भविष्यति ॥ १८ ॥
कोशवृद्धिरिहास्माकं शत्रूणां निधनं भवेत् ।
कथं सुयोधनं गच्छेद्युधिष्ठिरभृतः पुरा ॥ १९ ॥
एतच्चापि वदत्येष मात्स्यः परिभवान्मयि ।
तस्मात्कर्तव्यमेतद्धि तत्र यात्रा विधीयताम् ॥ २० ॥
एतत्सुनीतं मन्येहं सर्वेषां यदि रोचते ॥ २१ ॥

12 *b* omitted in SG, ST.

---

## ADHYĀYA 28

[ *NOETHERN RENSION.*]

**After V. 21b**

H. adds—

ग्रहीतुं गोधनं तस्य विराटस्य महीपतेः।

**After V. 24**

$A^2$ adds—

असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् ।
दुर्योधनप्रसङ्गेन भीष्मो गोग्रहणे गतः ॥

[ *SOUTHERN RECENSION.* ]

**After 1a**

S. cl. adds:—

पूर्वमाभाष्य कर्णेन तथा दुःशासनेन च ॥ १ ॥

**After V. 15a**

S. cl. adds:—

यदेतत्तेऽभिरोचितं मम चैतद्धि रोचते ॥ २ ॥

After 18

S. cl. adds.—

तद्भवांश्चतुरंगेण बलेन महता वृतः।
विराटनगरं यातु सर्वसैन्येन भारत ॥ १ ॥

After V. 24

S cl. adds:—

सुशर्मणा गृहीते तु मत्स्यराजस्य गोधने।
विराट· सैन्यमादाय त्रिगर्तैः सह योत्स्यति ॥ १ ॥
अपरं दिवसं गास्तु तत्र गृण्हंतु कौरवाः।
गवार्थं पांडवास्तत्र योत्स्यति कुरुभिः सह ॥ २ ॥

Before V. 26a

ST adds —

इत्युक्त्वा कौरवान् सर्वान्समादिदयानुजं बलम्।
उपस्थानमनुज्ञाप्य विवशान्तःपुरं तथा ॥ १ ॥
सौबलं च समानीय कर्णं च रणकर्कशम्।
आमंत्र्य च पुनःकार्यं विराटे चापि कृत्यवित् ॥ २ ॥
बलमुद्योजयामासुर्निश्चिताः कुरुपुंगवाः।
निर्ययुर्नगरात्तस्मादवस्कंधारिकांक्षिणः ॥ ३ ॥
हस्त्यश्वरथघोषेण दारयन्तो वसुंधराम्।
अतीत्य विविधान् देशान् गत्वा साल्वेयपर्वतान् ॥ ४ ॥

After V. 29

S cl. adds:—

कौरवास्तु महावीर्या मत्स्यानां विषयांतरे ॥ १ ॥

---

ADHYĀYA 29.

[ *NORTHERN RECENSION* ]

After V. 7a

G adds:—

अपश्यन्मत्स्यराजानं सिंहासनगतं तदा।

After V. 7

Edns & MSS add:—

अस्मान्युधि विनिर्जित्य परिभूय सयान्धवान्।

### After V. 9

L adds:—

समादिश्य तदा राजा मत्स्यानां परवीरहा ।

### After V. 29a

Edns G add:—

रथान् हेमपरिच्छिन्नानास्थाय च महारथाः

### After V. 30

AFHKLM add:—

पूर्णे शतसहस्रे द्वे पदातीनां च भारत ।

K further adds:—

एतद्बलमपर्यन्तं मत्स्यानामभिनिर्ययौ ।

[ *SOUTHERN RECENSION.* ]

### After V. 4

S. cl. adds:—

ततः शब्दो महानासीद्रेणुश्च दिवमस्पृशत् ।
शंखदुंदुभिघोषश्च भेरीणां च महास्वनः ॥ १
गवाश्वरथनागानां निस्वनश्च पदातिनाम् ।
एवं तेस्वभिनिर्याय मत्स्यराजस्य गोधने ॥ २
त्रिगर्तैर्गृह्यमाणे तु गोपालाः प्रत्यषेधयन् ।
अथ त्रिगर्ता बहवः परिगृह्य धनं बहु ॥ ३ ॥
परिक्षिप्य हयैः शीघ्रै रथमातैश्च भारत ।
गोपालान्प्रत्ययुध्यंत रणे कृत्वा जये धृतिम् ॥
ते हन्यमाना बहुभिः प्रासतोमरपाणिभि ।
गोपाला गोकुले भक्ता वारयामासुरोजसा ॥
परश्वधैश्च मुसलैर्भिण्डिपालैश्च मुद्गरैः ॥
गोपालाः कर्षणैश्चित्रैर्जघ्नुरश्वान्समंततः ॥ ६ ॥
ते हन्यमानाः संक्रुद्धास्त्रिगर्ता रथयोधिनः ।
विसृज्य शरवर्षाणि गोपानद्रावयन्बलात् ॥ ७
हन्यमानेषु गोपेषु विमुखेषु विशांपते ।
ततो युवानः संभीताः श्वसंतो रेणुगुण्ठिताः ॥

SA omits 2*a* SA omits हन्यमानेषु गोपेषु and 8 *b*

### After V. 7

S. d. adds :—

अस्मान्युधि विनिर्जित्य परिभूय सबान्धवान् ।

**Before V. 9**

S. cl. adds:—

वैशंपायन उवाच ।

श्रुत्वा तु वचनं तेषां गोपालानामरिंदमः ।

**After V 10**

S. cl. adds:—

पृथक्कांचनसंनाहान् रथेष्वश्वानयोजयन् ।
उत्सृज्य पाशान् मौर्वीणां शूराश्चापेष्वयोजयन् ॥ १ ॥

SA[1] omits *b*.

**After V. 19**

S. cl. adds:—

रथेषु युज्यमानेषु कंको राजानमब्रवीत् ।
मया ह्यस्त्रं चतुर्वर्गमवाप्तमृषिसत्तमात् ॥ १ ॥
दंशितो रथमास्थाय पदं निर्यास्यहं गवां ।
अयं च बलवाञ्छूरो बल्लवो दृश्यतेऽनघ ॥ २ ॥
गोसंख्यमश्वबंधे च संयोजय रथेषु वै ।
नैतेन जातु युध्येयुर्गवार्थमिति मे मतिः ॥ ३ ॥

SA[2] for *2a*:-

रथमास्थाय पदवीमनुयास्याम्यहं गवां ।

SA[1] for *3b*:-

नैतेन केन जानीयुर्गवार्थमिति मे मतिः ।

ST adds between *3a* & *b*:-

नीरांगरूपाः पुरुषाः श्रमंतोऽलंघ्य विभ्रमाः ।

**After V. 20**

SK, ST add:—

मन्त्रिपालश्च गोसंख्या यथा तं पुरुषर्षभा. ॥

**After V 30a**

S cl. adds:—

दीर्घानां च दृढानां च धनुषां ते यथाबलम् ।
उत्सृज्य पाशान्मौर्वीणां चापांश्चापेष्वयोजयन् ॥ १ ॥
ततः सुवाससः सर्वे पीताश्चंदनरूषिताः ।
चोदिता नरदेवेन क्षिप्रमश्वानचोदयन् ॥ २ ॥
ते हया हेमसंछन्ना बृहंतः साधुवाहिनः ।
चोदिताः प्रत्यदृश्यंत पक्षिणामिव पंक्तयः ॥ ३ ॥

**After V. 32**

S cl. adds —

विंशतिस्तु सहस्राणि नराणामनुयायिनाम् ।

**Before V. 34**

S I adds :—

वीरयोधसमुत्कृष्टं शंखभेरीनिनादित ।

**After V. 34a**

S cl. adds —

वसंते बहुपुष्पाढ्यं काननं चित्रित यथा ॥

---

## ADHYĀYA 30

*[ NORTHERN RECENSION. ]*

**After V 5a**

Edns and MSS add —

पदातिरथनागेन्द्रहयारोहबलौघवान् ।

**After V. 8a**

L adds —

रुक्मपुंखैः सुतीक्ष्णाग्रैः वज्राग्निसदृशप्रभैः ।

**After V. 17**

Edns and MSS add —

ते घ्नन्तः समरेऽन्योन्यं शूराः परिघबाहवः ।

**After V. 18**

All except FM add —

न शेकुरभिसंरब्धाः शूरान् कर्त्तुं पराङ्मुखान् ॥

A has the line on the margin

*[ SOUTHERN RECENSION. ]*

**After V. 14**

S cl. adds—

यथा वा वाससी श्लक्ष्णे महारजतरंजिते ॥
बिभ्रती युवती श्यामा तद्वद्भाति वसुधरा ॥ १ ॥

**After V. 16**

S cl. adds —

युधिष्ठिरोपि धर्मात्मा भ्रातृभिः सहितस्तदा ।
[illegible] विराटस्य [illegible] पाण्डवाः ॥ २ ॥

आत्मानं श्येनवत्कृत्वा तुण्डमासीद्युधिष्ठिरः।
पक्षौ यमौ च भवतः पुच्छमासीद्वृकोदरः ॥ २ ॥
सहस्रं न्यहनत्तत्र कुन्तीपुत्रो युधिष्ठिरः।
भीमसेनस्तु संक्रुद्धः सर्वशस्त्रभृतांवरः ॥ ३ ॥
द्विसहस्रं रथान्वीरः परलोकं प्रवेशयन्।
नकुलस्त्रिशतं जघ्ने सहदेवश्चतुश्शतम् ॥ ४ ॥

**After V. 20**

S. cl. adds:—

शंखो विराटपुत्रश्च महेष्वासो महाबलः।
विनिघ्नन्समरे शूरान्प्रविवेश महाचमूम् ॥ १ ॥

**Before V. 27**

SK, SA add:—

अन्योन्यमभिसंरब्धौ दन्ताभ्यामिव कुंजरौ।
कृतास्त्रौ निशितैर्बाणैर्दारयामासतू रणे ॥ १ ॥

SA[2] omits *b*

**After V. 27**

S. cl. adds :—

ताभ्यां सूतं च विव्याध केतुं च त्रिभिराशुगैः ॥

**After V. 28.**

SA adds —

तयोर्बाणानि राजेन्द्र समस्तानि महारणे ॥

---

## ADHYĀYA 31.

[ *NORTHERN RECENSION* ]

**After V. 7**

D adds:—

ततो राजा त्रिगर्तानां विव्याध दशभिः शरैः।
पंचभिः पंचभिश्चास्य स विव्याध ततो हयान् ॥ १ ॥
तथैव मत्स्यराजानं सुशर्मा युद्धदुर्मदः।
पंचाशद्भिः शितैर्बाणैर्विव्याध परमास्त्रवित् ॥ २ ॥

**After V. 21**

Dn OGHK add:—

मर्दिता समरे तत्र मत्स्यानां परिप्लवम्।

वैशंपायन उवाच ।

एवमुक्तस्तु वेगेन भीमसेनो महाबलः ।
गृहीत्वा तु धनुःश्रेष्ठं जवेन सुमहाजवः
व्यमुञ्चच्छरवर्षाणि सतोय इव तोयदः ।
तं भीमो भीमकर्माणं सुशर्माणमथाद्रवत्
विराटं समवीक्ष्यैनं तिष्ठतिष्ठेति चावदत्
सुशर्मा चिन्तयामास कालान्तकयमोपम
तिष्ठतिष्ठेति भाषन्तं पृष्ठतो रथपुंगवः ।
पश्यतां सुमहत्कर्म महद्युद्धमुपस्थितम् ॥
परावृत्तो धनुर्गृह्य सुशर्मा भ्रातृभिः सह ।
निमेषान्तरमात्रेण भीमसेनेन ते रथाः ॥ ५ ॥
रथानां च गजानां च वाजिनां च ससादिनाम् ।
सहस्रशतसंघाताः शूराणामुग्रधन्विनाम् ॥ ६ ॥
पातिता भीमसेनेन विराटस्य समीपतः ।
पत्तयो निहतास्तेषां गदां गृह्य महात्मना ॥ ७ ॥
तद्दृष्ट्वा तादृशं युद्धं सुशर्मा युद्धदुर्मदः ॥
चिन्तयामास मनसा किं शेषं हि बलस्य मे ॥ ८ ॥
अपरो दृश्यते सैन्ये पुरा मग्नो महाबले ।
आकर्णपूर्णेन तदा धनुषा प्रत्यदृश्यत ।
सुशर्मा सायकांस्तीक्ष्णान् क्षिपते च पुनः पुनः ॥ ९ ॥

First line omitted in M. 1*b* omitted in H. 6*b* omitted in C.

After V. 25

Edns & all MSS add:—

युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभ ।

After V. 32

Edns & all MSS add:—

स चचार गदापाणिर्वृद्धोऽपि तरुणो यथा ।

A² further adds:—

तयोः स दृष्ट्वा तत्कर्म मत्स्यपाण्डवयोर्मृधे ।
त्वरमाणो रथं त्यक्त्वा पदातिप्राद्रवद्रणात् ॥ १ ॥

After V. 35

A² adds:—

पञ्चभिस्त्वरितो भीमं जघान समरे बली ।
तां बाणान् विनिहत्य जघ्निवेपस्तुम्नतो रणात् ॥

After V. 38

Edns & MSS add:—

पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ।

After V. 40a

N adds :—

तं निषेधयतां भीमं ययौ त्रैगर्तमारणे ।
तदा भीमोऽभिसंक्रुद्धस्तस्य दर्पं ननाश ह ॥

After V. 40

A² adds:—

हतशेषं तदा सैन्यं प्रनष्टं जनमेजय ।

After V. 42a

Edns & MSS add :—

विराटस्य महात्मानः परिक्लेशविनाशनाः ।

After V. 43

Edns & MSS add:—

गले गृहीत्वा राजानमवशं स्ववशे ततः ।

After V. 46

Edns. A²DHKLN add:—

एवमुक्तोऽब्रवीद्भीमः सुशर्माणं महाबलम् ।

HKL reads for this:—

ततो भीमो ब्रवीन्मूढं त्रिगर्तानां नराधिपं ।

A² adds after this:—

उवाच पुरुषव्याघ्र नृपस्य वचने रतः ।

After V. 47

Edns & MSS add:—

एवं ते जीवितं दद्यामेष युद्धजितो विधिः ।

After V. 51a

Edns CDG add:—

स्वबाहुबलसंपन्ना ह्रीनिषेवा यतव्रताः ।

After V. 51

D adds:—

विराटस्य महात्मानः परिक्लेशविनाशनाः

पातिता भीमसेनेन विराटस्य समीपतः।
पत्तयो निहतास्तेषां गदां गृह्य महात्मना ॥ ७ ॥
तद्दृष्ट्वा तादृशं युद्धं सुशर्मा युद्धदुर्मदः।
चिन्तयामास मनसा किं शेषं हि बलस्य मे ॥ ८ ॥
अपरो दृश्यते सैन्ये पुरा मग्नो महाबले।
आकर्णपूर्णेन तदा धनुषा प्रत्यदृश्यत ॥
सुशर्मा सायकांस्तीक्ष्णान् क्षिपते च पुनः पुनः ॥ ९ ॥

For v. 1 SA has:—

इत्युक्त्वा भीमसेनं तं स्वयमेव युधिष्ठिरः।
अन्वयाज्जवनैरश्वैः परीप्सन् मात्स्यसत्तमम् ॥

### After V. 23

S. cl add:—

त्रिगर्ताः समभिक्रम्य अयुध्यन्त जयैषिणः।
तान् भीमसेनः संक्रुद्धः सर्वशस्त्रभृतांवरः ॥ १ ॥

### After V. 25

S. cl adds:—

युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभः।

### After V. 26

SK, SG, ST add.—

क्षोभयन्सर्वभूतानि सिंहः क्षुद्रमृगानिव।

### After V. 32

S. cl. adds:—

स चचार गदापाणिर्वृद्धोऽपि तरुणो यथा।

### After V. 36

SK adds·—

उत्प्लुत्य गत्वा वेगेन तद्रथे विनिपत्य च ॥
सुशर्मणः शिरो गृह्णात् पुनराश्वास्य युध्यतः ॥

ST adds:—

निगृह्य तं शत्रुममित्रमध्ये।
विराटराजं च विमोचयित्वा ॥
भूयोऽभ्यधावत्सहसा त्रिगर्तान्।
ये तत्रातिष्ठाः समरे बभूवुः ॥ १ ॥
ते भीमसेनं ददृशुस्त्रिगर्ताः।
कर्माणि कुर्वन्तममित्रमध्ये ॥

विराटराजं च विमोचयित्वा।
भूयोऽभ्यधावत्सहसा त्रिगर्तान् ॥ ३ ॥
नातश्च वीराः समरे भयार्ताः।
त्रस्ता मृगा सिंह भयादिवासन् ॥ ४ ॥

**After V. 37**

SK adds:—

ऊर्ध्वमुत्प्लुत्य मार्जार आखोर्यद्वच्छिरो रुषा ॥

**After V. 38**

SK adds:—

यदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः।

**After V. 42a**

SK adds:—

विराटस्य महात्मानः परिक्लेशविनाशनाः।

**After V. 43**

SK adds:

गले गृहीत्वा राजानमानीय विवशं वशम्।

**After V. 46**

SK adds:—

एवमुक्तोऽब्रवीद्भीमः सुशर्माणं महाबलम् ॥

**After V. 47**

SK adds:—

एवं ते जीवितं दद्यामेष युद्धजितो विधिः।

**After V. 51a**

SK adds:—

स्वबाहुबलसंपन्ना ह्रीनिषेधा यतव्रताः ॥

**After V. 52**

ST adds:—

स भीमसेनः समरे निहत्य
शत्रून् विराटस्य महानुभावः ॥
ननाद हृष्टो बलवानमर्षी।
सिंहो यथा क्षुद्रमृगान्निहत्य ॥ १ ॥

***Before V. 53***

ST adds:—( beginning a new Adh. )

ततः प्रभाते विमले रवौ चाभ्युदिते जनैः।

### After V. 52

S. cl. adds:—

वचसा चैव सान्त्वेन स्नेहेन च मुदान्वितः।

### After V. 58

S cl. adds:—

यत्त्वं मुक्तोसि शत्रुभ्यो ह्येतत्कार्यं हितं हि नः।
न किंचित्कार्यमस्माकं न धनं मृगयामहे ॥ १ ॥

### After V. 58a

SK adds:—

निर्भरः प्रीतिपूरेण हर्षगद्गदया गिरा।

### After V. 63a

ST adds:—

त्वया प्रत्याहृतो ह्यत्र तस्मान्नाहं ममेश्वरः।
अस्मदीयमिति ख्यातं पुरे जनपदेऽपि वा ॥
तत्सर्वं प्रतिगृह्णीष्व यदि प्रीतोसि मेनघ ॥ १ ॥

### After V. 63

S. cl. adds:—

पुनरेव विराटश्च राजा कंकमभाषत।
अहो शूद्रस्य कर्माणि वल्लस्य द्विजोत्तम ॥ १ ॥
सोहं शूद्रेण संग्रामे वल्लेनाभिरक्षितः।
त्वत्कृते सर्वमेवैतदुपपन्नं ममानघ ॥ २ ॥
वरं वृणीष्व भद्रं ते ब्रूहि किं करवाणि ते।
ददामि ते महाप्रीत्या रत्नान्युच्चावचान्यहम् ॥ ३ ॥
शयनासनयानानि कन्याश्च समलंकृताः।
हस्त्यश्वरथसंघाश्च राष्ट्राणि विविधानि च ॥
एतानि च मम प्रीत्या प्रतिगृह्ण ममान्तिके ॥ ४ ॥

वैशंपायन उवाच।

तं तथावादिनं तत्र कौरव्यः प्रत्यभाषत।
एवैव तु मम प्रीतिर्यत्त्वं मुक्तोसि शत्रुभिः ॥ ५ ॥
प्रतीतश्चेत्पुरं तुष्टः प्रविशाद्य परंतप ॥
दारैः पुत्रैश्च संश्लिष्य सा हि प्रीतिर्ममातुला ॥ ६ ॥
सुशर्माणं तु राजेन्द्र सभृत्यबलवाहनम्।
विसर्जय नरश्रेष्ठ वरमेतद्वृणे ॥ ७ ॥

वैशंपायन उवाच ।

एवमुक्ते तु कंकेन विराटो राजसत्तमः ।
प्रत्युवाच ततः कंकं सुशर्मा यातु चेष्टतः ॥ ८ ॥

**After V. 66**

S. cl. add :—

प्रत्यायान्तु च मे शीघ्रं नागराः सर्व एव ते ।
एवमुक्तास्तथा दूता रात्रौ यात्वा तु केवलम् ॥
ततोऽन्तरे चानुपिता दूताः शीघ्रानुयायिनः ॥ १ ॥

**After V. 67**

S. cl. adds : —

पताकोच्छ्रयमाल्याढ्यं पुरमप्रतिमं यथा ॥

---

## ADHYĀYA 32.

*[ NORTHERN RECENSION. ]*

**After V. 20a**

Edns A²BCEGN add:—

यथा हि पाण्डुपुत्राणामर्जुनो जयतावरः ।
एवमेव गतिर्नूनं भवान्विषयवासिनाम् ॥ १ ॥
A² omits second half. N reads for *b*
एवं गतिस्त्वं मत्स्यानां भव वंशविवर्धनः ।

*[ SOUTHERN RECENSION. ]*

**After V. 5**

ST adds:—

तस्मिंस्तु नीयमाने तु मात्स्यराजस्य गोधने ।
अयुध्यंस्तत्र गोपाला यथा शक्त्यनुसारतः ॥ १ ॥
तत्र कर्णो महाबाहुः शरवर्षमिवाकिरत् ।
विद्रावयामास तदा चिच्छेद च शिरोधरान् ॥ २ ॥
एवं विद्राव्यमाणेषु हाहाकारो महानभूत् ।
विक्रोशंति तदा सर्वे विद्राव्य बहु कौरवाः ॥ ३ ॥
जगृहुर्गोधनं सर्वं निराक्रोशमनायकम् ।
तस्मिन्नुपरते शब्दे क्लिष्टाः क्लांतपुरस्सराः ॥
गोपास्तु हतशेषा ये नगरं प्राङ्मुखा ययुः ॥ ४ ॥

**After V. 13a**

S cl adds:—

समर्थः समरे योद्धुं कौरवैः सह तादृशैः ।

**After V. 13**

S cl. adds:—

जयश्च नियतो युद्धे कौरवाश्च ध्रुवं हताः ।

**After V. 16**

S. cl. adds:—

निर्याहि नगरात् शीघ्रं राजपुत्र किमास्यते ।

**After V. 20**

SK adds:—

यथा हि पांडुपुत्राणामर्जुनो जयतांवरः ।
एवमेव गतिर्नूनं भवान्विषयवासिनाम् ॥ १ ॥

**Before V. 21**

SK, ST add:—

वैशंपायन उवाच ।
महाजनसमक्षं तु स्त्रीणां मध्ये विशेषतः ।
गवाध्यक्षेण संप्रोक्तो विराटतनयस्तदा ॥

---

## ADHYĀYA 33.

[ *NORTHERN RECENSION.* ]

**Before V. 1**

D adds:—

वैशंपायन उवाच ।
गोपवाक्यं ततः श्रुत्वा विहस्योच्चैः पुनः पुनः ।
मातरं च स्वसारं च सर्वाश्चांतःपुरस्त्रियः ॥
निरीक्ष्यमाणः प्रोवाच स्वभुजो मार्जयन् रुषा ॥ १ ॥

**Before V 10**

Edns add:—

वैशंपायन उवाच ।
श्रुत्वा तदर्जुनो वाक्यं राज्ञः पुत्रस्य भाषतः ॥
अतीतसमये काले प्रियां भार्यामनिंदिताम् ॥ १ ॥
द्रुपदस्य सुतां तन्वीं पांचालीं पावकात्मजाम् ॥
सत्यार्जवगुणोपेतां भर्तुः प्रियहिते रताम् ॥ २ ॥

उवाच रहसि प्रीतः कृष्णां सर्वार्थकोविदः ।
उत्तरं ब्रूहि कल्याणि क्षिप्रं मद्वचनादिदम् ॥ ३ ॥
अयं वै पाडवस्यासीत् सारथिः संगतो दृढः ।
महायुद्धेषु संसिद्धः स ते यन्ता भविष्यति ॥ ४ ॥

**After V. 15**

Edns add :—

उत्तर उवाच ।
सैरंध्रि जानासि तथा युवानम्
नपुंसको नैव भवेद्यथासौ ॥
अहं न शक्नोमि बृहन्नलां शुभे ।
वक्तुं स्वयं यच्छ हयान्ममेति वै ॥

[ *SOUTHERN RECENSION.* ]

**After V. 10**

S. cl. adds:—

श्रुत्वा तदर्जुनो वाक्यमुत्तरेण प्रभाषितम् ॥ १ ॥

[ST omitting above line adds:—

अथैवमुपसंगम्य पार्थं पार्थप्रिया सती ।
उत्तरस्य वचः सर्वं यथातथ्यमथाब्रवीत् ॥
तच्छ्रुत्वा चार्जुनो वाक्यं द्रौपद्या परिकीर्तितम् ॥

Also SG, SA add:—

पाचालीमर्जुनो वाक्यमुपांशु तदनुस्मरन् ।
अतीतसमये काले प्रियां भार्यामभाषत ।]
द्रुपदस्य सुतां राज्ञः पांचालीं रूपसंमताम् ॥ १ ॥
सत्यार्जवगुणोपेतां भर्तुः प्रियहितैषिणीम् ।
उवाच रहसि प्रीतः कृष्णां सर्वार्थकोविदः । २ ॥
उत्तरां ब्रूहि पाञ्चालि गत्वा क्षिप्रं शुचिस्मिते ।
इयं किल पुरा युद्धे पाण्डवे सव्यसाचिनः ॥ ३ ॥
सारथिः पाण्डुपुत्रस्य पार्थस्य तु बृहन्नला ।
महाजयो भवेद्युद्धे सा चेद्यंता बृहन्नला ॥ ४ ॥
वैशंपायन उवाच ।
सा चोदिता तदा तेन ह्यर्जुनेन शुचिस्मिता ।
पाञ्चाली च तदाऽऽगम्य उत्तराया निवेदनम् ॥ ५ ॥
ज्ञात्वा तु समयान्मुक्तं चन्द्रं राहुमुखादिव ।
युधिष्ठिरं धर्मपरं सत्यार्जवपथे स्थितम् ॥ ६ ॥

**After V. 13a**

S cl. adds:--

समर्थः समरे योद्धुं कौरवैः सह तादृशैः

**After V. 13**

S cl. adds:—

जयश्च नियतो युद्धे कौरवाश्च ध्रुवं हताः।

**After V. 16**

S. cl. adds:—

निर्याहि नगरात् शीघ्रं राजपुत्र किमास्यते।

**After V. 20**

SK adds:—

यथा हि पांडुपुत्राणामर्जुनो जयतांवरः।
एवमेव गतिर्नूनं भवान्विषयवासिनाम् ॥ १ ॥

**Before V. 21**

SK, ST add:—

वैशंपायन उवाच।
महाजनसमक्षं तु स्त्रीणां मध्ये विशेषतः।
गवाध्यक्षेण संप्रोक्तो विराटतनयस्तदा ॥

---

## ADHYĀYA 33.

[ *NORTHERN RECENSION.* ]

**Before V. 1**

D adds:—

वैशंपायन उवाच।
गोपवाक्यं ततः श्रुत्वा विहस्योच्चैः पुनः पुनः।
भ्रातरं च स्वसारं च सर्वाश्चांतःपुरस्त्रियः ॥
निरीक्ष्यमाणः प्रोवाच स्वभुजो मार्जयन् रुषा ॥

**Before V 10**

Edns add:—

वैशंपायन उवाच।
श्रुत्वा तदर्जुनो वाक्यं राज्ञः पुत्रस्य भाषतः ॥
अतीतसमये काले प्रियां भार्यामनिंदिताम् ॥ १ ॥
द्रुपदस्य सुतां तन्वीं पांचालीं पावकात्मजाम् ॥
सत्यार्जवगुणोपेतां भर्तुः प्रियहिते रताम् ॥ २ ॥

उवाच रहसि प्रीतः कृष्णां सर्वार्थकोविदः ।
उत्तरं ब्रूहि कल्याणि क्षिप्रं मद्वचनादिदम् ॥ ३ ॥
अयं वै पाण्डवस्यासीत् सारथिः संगतो दृढः ।
महायुद्धेषु संसिद्धः स ते यन्ता भविष्यति ॥ ४ ॥

**After V. 15**

Edns add :—

उत्तर उवाच ।
सैरंध्रि जानासि तथा युवानम्
नपुंसको नैव भवेद्यथासौ ॥
अहं न शक्नोमि बृहन्नलां शुभे ।
वक्तुं स्वयं यच्छ हयान्ममेति वै ॥

[ *SOUTHERN RECENSION.* ]

**After V. 10**

S. cl. adds:—

श्रुत्वा तदर्जुनो वाक्यमुत्तरेण प्रभाषितम् ॥ १ ॥

[ST omitting above line adds:—

अथैवमुपसंगम्य पार्थं पार्थप्रिया सती ।
उत्तरस्य वचः सर्वं यथातथ्यमथाब्रवीत् ॥
तच्छ्रुत्वा चार्जुनो वाक्यं द्रौपद्या परिकीर्तितम् ॥

Also SG, SA add:—

पाञ्चालीमर्जुनो वाक्यमुपांशु तदनुस्मरन् ।
अतीतसमये काले प्रियां भार्यामभाषत ।]
द्रुपदस्य सुतां राज्ञः पाञ्चालीं रूपसंमताम् ॥ १ ॥
सत्यार्जवगुणोपेतां भर्तुः प्रियहितैषिणीम् ।
उवाच रहसि प्रीतः कृष्णां सर्वार्थकोविदः । २ ॥
उत्तरां ब्रूहि पाञ्चालि गत्वा क्षिप्रं शुचिस्मिते ।
इयं किल पुरा युद्धे खाण्डवे सव्यसाचिनः ॥ ३ ॥
सारथिः पाण्डुपुत्रस्य पार्थस्य तु बृहन्नला ।
महाजयो भवेद्युद्धे सा चेद्यंता बृहन्नला ॥ ४ ॥

वैशंपायन उवाच ।
सा चोदिता तदा तेन ह्यर्जुनेन शुचिस्मिता ।
पाञ्चाली च तदाऽऽगम्य उत्तराया निवेशनम् ॥ ५ ॥
ज्ञात्वा तु समयान्मुक्तं चन्द्रं राहुमुखादिव ।
युधिष्ठिरं धर्मपरं सत्यार्जवपथे स्थितम् ॥ ६ ॥

अमर्षयन्ती तद्दुःखं कृष्णा कमललोचना ।
उत्तरामाह वचनं सखीमध्ये विलासिनीम् ॥ ७ ॥

v. 1 & 2 omitted in ST. v. 2 *b* omitted in SG, ST, SA.

**After V. 12**

SK adds:—

एतेन वा सारथिना तदार्जुनः सदेवगंधर्वमहासुरोरगान् ।
सर्वाणि भूतान्यजयत्स वीर्यवानतर्पयच्चापि हिरण्यरेतसम् ॥ १ ॥
यदस्य संस्थामपि तस्य संयुगे जानामि वीर्यं परवीरमध्यगम् ।
संगृह्य रश्मीनपि चास्य वीर्यवानादाय चापं प्रययौ रथे स्थितः ॥ २ ॥
न सर्वभूतानि न देव दानवा न चापि सर्वे कुरवः समागताः ।
धनं हरेयुस्तव जातु धन्विनो बृहन्नला तूत्तरसारथिर्यदि ॥ ३ ॥

**After V. 15**

cl. adds: —

वैशंपायन उवाच ।

ततः सैरन्ध्रिसहिता उत्तरा भ्रातुरब्रवीत् ।
अभ्यर्थयैनां सारथ्ये वीर शीघ्रं बृहन्नलाम् ॥ १ ॥
शिक्षितैषा हि सारथ्ये नर्तने गीतवादिते ।
सैरन्ध्र्याह महाप्राज्ञा स्तुवन्ती वै बृहन्नलाम् ॥ २ ॥

उत्तर उवाच

सैरन्ध्रि जानासि मम व्रतं हि क्लीबेन पुंसा नहि संवदाम्यहम् ।
सोऽहं न शक्ष्यामि बृहन्नलां शुभे वक्तुं स्वयं यच्छ हयान्ममेति ॥ ३ ॥

सैरन्ध्र्युवाच

भयकाले तु संप्राप्ते न व्रतं नाव्रतं पुनः ।
यथा दुःखं प्रतरति कर्तुं युक्तं चरेद्बुधः ॥ ४ ॥
इतिधर्मविदः प्राहुस्तस्माद्याच्या बृहन्नला ॥ ५ ॥

v. 2. omitted in SA[1] vv. 4, 5 omitted in SA.

---

## ADHYĀYA 34

[ *NORTHERN RECENSION.* ]

**Before V. 1**

Lilns BCDLGN adds—

वैशंपायन उवाच ।

सा प्राद्रवत् काञ्चनमाल्यधारिणी ।
जवेन [illegible] यशस्विनी ।

सुदक्षिणा वेदिविलग्नमध्या।
सा पद्मपत्राभनिभा शिखंडिनी ॥ १ ॥
तन्वी शुभाङ्गी मणिचित्रमेखला।
मत्स्यस्य राज्ञो दुहिता श्रिया वृता।
तन्नर्तनागारमरालपक्ष्मा।
शतह्रदा मेघमिवान्वपद्यत ॥ २ ॥
सा हस्तिहस्तोपमसंहतोरूः।
स्वनिंदिता चारुदती सुमध्यमा ॥
आसाद्य तं वै वरमाल्यधारिणी।
पार्थं शुभा नागवधूरिव द्विपम् ॥ ३ ॥
सा रत्नभूता मनसः प्रियार्चिता।
सुता विराटस्य यथेन्द्रलक्ष्मीः ॥
सुदर्शनीया प्रमुखे यशस्विनी।
प्रीत्याब्रवीदर्जुनमायतेक्षणा ॥ ४ ॥
सुसंहतोरूं कनकोज्वलत्वचम्।
पार्थः कुमारीं स तदाभ्यभाषत ॥
किमागमः कांचनमाल्यधारिणि।
मृगाक्षि किं त्वं त्वरितेव भामिनि ॥ ५
किं ते मुखं सुन्दरि न प्रसन्नम्।
आचक्ष्व तत्वं मम शीघ्रमङ्गने ॥ ६ ॥

After V. 27

Edns BCDEGN add:—

तमुत्तरं वीक्ष्य रथोत्तमे स्थितम्।
बृहन्नलायाः सहितं महाभुजम् ॥
स्त्रियश्च कन्याश्च द्विजाश्च सुव्रताः।
प्रदक्षिणं चक्रुरथोचुरङ्गनाः ॥ १ ॥
यदर्जुनस्यर्षभतुल्यगामिनः।
पुराभवत् खांडवदाहमङ्गलम् ॥
कुरून् समासाद्य रणे बृहन्नले।
सहोत्तरेणाद्य तदस्तु मङ्गलम् ॥ २ ॥

[ SOUTHERN RECENSIC

Before. V. 1

S. cl. adds:—

सा प्राद्रवत्काञ्चनमाल्यधारिणी
ज्येष्ठेन भ्रात्रा प्रहिता यशस्विनी ॥

भ्रातुर्नियोगं तु निशम्य सुभ्रूः ।
शुभानाना हाटकवज्रभूषिता ॥ १ ॥
सा वज्रमुक्तामणिहेमकुण्डला ।
मृदुक्रमा भ्रातृनियोगचोदिता ॥
प्रदक्षिणावर्ततनुः शिखण्डिनी ।
पद्मानना पद्मदलायताक्षी ॥ २ ॥
तन्वी समाङ्गी मृदुमन्द्रलोचना ।
मात्स्यस्य राज्ञो दुहिता विलासिनी ॥
सा नर्तनागारमरालपक्ष्मा ।
शतह्रदा मेघमिवान्वपद्यत ॥ ३ ॥
सा नागनासोपमसंहितोरूः ।
अनिन्दिता वेदिविलग्नमध्या ॥
आसाद्य तस्थौ वरमाल्यधारिणी ।
पार्थे शुभा नागवधूरिव द्विपम् ॥ ४ ॥

## After V. 1

S cl. adds:—

किं ते मुखं सुन्दरि न प्रसन्नमाचक्ष्व शीघ्रं मम चारुहासिनि ।

वैशंपायन उवाच ।

सा वज्रवैडूर्यविकारकुंडला विनिद्रपद्मोत्पलपत्रगंधिनि ॥

## After V. 9a

S cl. adds:—

उवाच पार्थः शुभमंद्रया गिरा ।
शुभाननां शुक्लदतीं शुचिस्मिताम् ॥
गच्छामि यत्रेच्छसि चारुहासिनि ।
हुताशनं प्रज्वलितं विशामि वा ॥ १ ॥

इच्छामि तेऽहं वरगात्रि जीवितं ।
करोमि किं ते प्रियमद्य सुंदरि ॥
न मत्कृते द्रक्ष्यसि तत्पुरं प्रिये ।
वैवस्वतं प्रेतपतेर्महाभयम् ॥ २ ॥

वैशंपायन उवाच ।

एतावदुक्त्वा कुरुवीरपुङ्गवो ।
विलासिनीं शुक्लदतीं शुचिस्मिताम् ॥ ३ ॥

V. 2. omitted in SA. V. 3 omitted in SA[1].

After V. 9

ST, SK add:—

तथा व्रजन्तं वरभूषणैर्वृतम्
महाप्रभं वारणयूथपोपमम् ॥
गजेंद्रबाहुं कमलायतेक्षणम् ।
कवाटवक्षस्स्थलमुन्नतांसम् ॥ १ ॥

तमागतं पार्थममित्रकर्शनम् ।
महाबलं नागमिव प्रमाथिनम् ॥
वैराटिरामन्त्र्य ततो बृहन्नलाम् ।
गवां निनीषन्पदमुत्तरोऽब्रवीत् ॥ २ ।

v. 2 omitted in ST.

After V. 12

S. cl. adds:—

देवेंद्रसारथिर्वीरो मातलिः ख्यातविक्रमः ।
सुमहो जामदग्न्येश्च विष्णोर्यंता च दारुकः ।

सुमंत्रो वा दाशरथेः सूर्ययंता तथाऽरुणः ।
सर्वे सारथयः ख्याताः न बृहन्नलया समाः ॥ २ ॥

इत्युक्तोहं च सैरन्ध्या तेन त्वामाह्वयामि वै ।
आहूता त्वं मया सार्धं योद्धुं याहि बृहन्नले ॥
दूराद्दूरतरं गावो भवंति कुरुभिर्हृताः ॥ ३ ॥

For 2 *a* SG, ST, SA read:—

अरुणः सूर्ययंता च सुमंत्रो दशरथस्य च ॥

After V. 17

S. cl. adds:—

अभीक्ष्णमाहुस्तव कर्म पौरुषं ।
स्त्रियः प्रशंसंति ममाद्य चांतिके ॥ १ ॥

वैशंपायन उवाच ।

[ and then only ST adds:—

अथोत्तरं पुनः प्राह राजपुत्रं बृहन्नला ॥ १ ॥
कन्यापुरे नर्तनगीतवादिते ।
क्रीडासु चान्यासु विशेषिता वयम् ॥
अन्यं परीक्षस्व कुमारसारथिं ।
यस्तुल्यरूपस्तव नर्तकी ह्यहम् ॥ २ ॥

S. cl. continues —

वैशंपायन उवाच ।

इत्येवमुक्त्वा नृपसूनुसत्तमः ।
तदा स्मयित्वाऽर्जुनमभ्यनंदयत् ॥
अथोत्तरः पारशवं शताक्षिमत् ।
सुवर्णचित्रं परिगृह्य भानुमत् ॥ २
बृहन्नलायै प्रददौ स्वयं तदा
विराटपुत्रः परवीरघातिने ॥
तदाज्ञया मात्स्यसुतस्यवीर्यवान्
अकर्तुकामेव समाददे तदा ॥ ३ ॥

बृहन्नलोवाच ।

यद्यस्ति च रणे शौर्यं शक्यः स्याद्विपतां वधः ॥
अहं त्वामधिगच्छामि यत्र त्वं यासि तत्र भो ॥ ४ ॥

v. 1 omited in SA. vv. 2,3 omitted in ST.

वैशंपायन उवाच । omitted in SA, SG.

v. 2 omitted in SA. 3 *a*, *b* omitted in SA.

After v. 1 ST adds:—

ततोऽर्जुनो गृह्य विचित्रभूषणं ।
विराटपुत्रप्रसृतं महाबलः ॥
उन्मादयिष्यन् प्रमदामिवाबलः ।
त्वधोमुखं वीरतरोभ्यधारयत् ॥ १ ॥

**After V. 18**

S. cl. adds:—

तमाददानं प्रमदा जहासिरे ।
ह्यधोमुखं वीरवरोऽभ्यधारयत् ।
ततस्तिरश्चीनकृतं सपत्नहा ।
ह्यधोमुखं कवचमथाभ्यकर्षत ॥
सम्यक्प्रजानन्नपि सत्यविक्रमो ।
ह्यज्ञातवत्सर्वकुरुप्रवीरः ॥ १ ॥

*b* ST ततःस्मितच्छिन्नकृतः सपत्नहा ।

*b* omitted in SA. *c* omitted in SA.

**After V. 19**

S. cl. adds:—

तथापि कुर्वन्तममित्रकर्शनं ।
नैवोत्तरः पर्यमयद्धनंजयम् ॥ १ ॥

### After V. 20

S. cl. adds :—

कृशानुतप्तप्रतिमेन भास्वता ।
जाज्वल्यमानेन सहस्ररश्मिना ॥
अथास्य शीघ्रं प्रसमीक्ष्य योजयत् ।
रथे हयान्कांचनजालसंवृतान् ॥
सुवर्णजालान्तरयोक्त्रभूषणं ।
सिंहं च सौवर्णमुपाश्रयद्रथे ॥ १ ॥

### After V. ६a

S. cl. adds:—

आयुधानि च वै तत्र रथोपस्थे च स न्यसत् ॥ १ ॥

### After V. 26

S cl adds:—

वैशंपायन उवाच

अथोत्तरो वर्ममहाप्रभावं ।
सुवर्णवैडूर्यपरिष्कृतं शुभं ॥
आमुच्य वीरः प्रययौ रथोत्तमं ।
धनंजयं सारथिनं प्रगृह्य ॥ १ ॥

तमुत्तरं प्रेक्ष्य रथोत्तमे स्थितं ।
बृहन्नलां चैव महाजनस्तदा ॥
स्त्रियश्च कन्याश्च द्विजाश्च सुव्रताः ।
प्रदक्षिणं मङ्गलिनोऽभ्यपूजयन् ॥ २ ॥

यदर्जुनस्यर्षभतुल्यगामिनः ।
पुराभवत्खाण्डवदाहमङ्गलम् ॥

कुरून्समासाद्य रणे बृहन्नले
सहोत्तरणास्तु तवाद्य मङ्गलम् ॥ ३ ॥

---

## ADHYĀYA 35.

*[ NORTHERN RECENSION. ]*

### After V. 2

Edns & MSS add·—

ततस्तांश्चोदयामास सदश्वान्पाण्डुनन्दनः ॥

### After V. 9a

$A^2$ adds:—

तेषांतत्सैन्यमतुलं दृष्ट्वा भयविवर्द्धनम्।

### After V. 15.

HL add:—

आरनालेन वर्तिष्ये न गोभिर्मे प्रयोजनम्।
जीवन्प्राप्स्यामि गा नित्यं निवर्तस्व बृहन्नडहे ॥

### After V. 20a

D adds:—

अकृतार्थो निवृत्तेयं नैवाहं कुत्रचिद्भयात् ॥

### After V. 26a

K adds:—

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहा।
क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥ १ ॥ ?
आततायिनमायांतमपि वेदांगपारगम्।
जिघांसंतं जिघांसीयान्नतेन ब्रह्महा भवेत् ॥ २ ॥ ?

### After V. 2

K adds: -

क्षीरं वा दधि वाज्यं वा तक्रं वा न पिबाम्यहं।
आरनालं हि पास्यामि न मे गोभिः प्रयोजनम् ॥ १ ॥

Edns ABCDEGKN add:—

संग्रामे न च कार्यं मे गावो गच्छंतु चापि मे।
शून्यं मे नगरं चापि पितुश्चैव बिभेम्यहम् ॥ १ ॥

$A^2$ adds:—

वरं काले नजीवक्षुन् न मे गोभिः प्रयोजनम्। ?
यद्यहं जीवमानस्तु गच्छामि नगरं प्रति ॥

DN add:—

निवर्तय रथं तूर्णं हृदयं मे विदीर्यते।

### After V. 34a

Edns $A^2$BCDEGHKMN add:—

अमरेष्विव देवेन्द्रो मानुषेषु धनंजयः।
एकः कोऽस्मानुपायायादन्यो लोके धनंजयात् ॥

After V 40

Edns A²BCDEGN add:—

उत्तर उवाच ।

शृणुयास्त्वं हि कल्याणि बृहन्नले सुमध्यमे ।
निवर्तय रथं क्षिप्रं जीवन्भद्राणि पश्यति ॥

K adds after the above:—

ग्रामांश्चतुर्दशपर्णास्तथाश्वधनगोकुलैः ।
ददाम्येतद्धनं तुभ्यं मुंच मा त्वं बृहन्नडे ॥ १ ॥
अश्वानां तु सहस्रे द्वे शुभ्राणां हेममालिनां ।
सर्वलक्षणयुक्तानां मुंच मां त्वं बृहन्नडे ॥ २ ॥

After V. 45

K adds:—

कुरूनभिमुखं पार्थः प्रययौ शम्रिवाहनः ।
न थेंद्रोदा यानहंतुं प्रायातिचस तिलिः ॥ १ ॥ ?

After V. 46a

N. cl. adds:—

माभैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसिपरंतप ।
कथं पुरुषशार्दूल शत्रुमध्ये विषिदासि ॥ १ ॥
अहं वै कुरुभिर्योत्स्ये विजेष्यामि च ते पशून् ।
प्रविश्यैतद्रथानीकमप्रधृष्यं दुरासदम् ॥ २ ॥

FHLM omit 1*a*. A reads the on the verse margin.
F omits verse 2. A reads v 2. *b* on the margin.

[ *SOUTHERN RECENSION.* ]

After V. 2

S cl. adds:—

ततस्तांश्चोदयामास सदश्वान्पाण्डुनन्दनः ॥

After V. 11

S cl. adds:—

देवैरपिसहेंद्रेण न शक्यं किं पुनर्नरैः ।

After V. 14

S. cl. adds:—

मत्ता इव महानागा युक्तध्वजपताकिनः ।
नीतिमंतो महेष्वासाः सर्वार्थकृतनिश्चयाः ॥
तान् जेतुं समरे शूरान् दुर्बुद्धिरहमागतः ॥ १ ॥

SA[1] omits *a* and *b* of this verse.

SG, ST, SA add before *c* above:—

दुर्जयाः सर्वसैन्यानां देवैरपि स वासवैः ।
पताकिनश्च मातंगाः सध्वजाश्च महारथाः ॥
प्रकीर्णकक्कृतोद्योता वाजिनश्च प्रभूषिताः ॥ १ ॥

After V. 15

S. cl. adds:—

दृष्ट्वा तु महतीं सेनां कुरूणां दृढधन्विनाम् ।

After V 18

S. cl. adds:—

वैशंपायन उवाच ।

तं तथा वादिनं तत्र बीभत्सुः प्रत्यभाषत ।
संप्रहस्य पुनस्तं वै सर्वलोकमहारथः ॥ १ ॥

After V. 21

S. cl. adds:—

समुद्रमिव गंभीरं कुरुसैन्यमरिंदम ।
स्त्रीसकाशे प्रतिज्ञाय पुरुषाणां हि शृण्वताम् ॥

After V. 22

SK, SG, ST, SA, add:—

रथमारुह्य निर्यातवा किमर्थं नावबुध्यसे ।

After V. 25

ST adds.—

वायू रक्षति मर्माणि आयुरग्रं प्रयच्छति ।
एवं सति महाभाग वृथा याञ्चा पलायने ॥

After V 26

SK, SG, ST SA[2] add:—

संग्रामेण न मे कार्यं गावो गच्छन्तु चापिमे ।
नगरं च प्रवेक्ष्यामि पश्यतस्ते बृहन्नले ॥ १ ॥

*b* ST गमिष्यामि गृहानेव पश्यन्त्यास्ते बृहन्नले ।

After V. 30a

S. cl. adds:—

विक्रमंतं पदन्यासैर्नमयंतं च भूतलम् ।

After V. 31

S. cl. adds:—

कोऽयं धावत्यसंगेन पूर्वं मुक्त्वा रथोत्तमम्।

After V. 32

S. cl. adds:—

इत्येवं सैनिकाः प्राहुर्द्रोणस्तानिदमब्रवीत्।
आचार्यः कुरुपांडूनां मतौ शुक्रांगिरोपमः॥ १॥
किं विचारेण वः कार्यमेतेनानुस्रुतेन वा।
धावंतमनुधावंश्च निर्भया भयविप्लुतम्॥
वेणीकलापं निर्धूय प्रतिभातिनरर्षभः॥ २॥

After V. 33a

S cl. adds:—

रूपेण पार्थसदृशः स्त्रीवेषसमलंकृतः।

After V. 34a

S. cl. adds:—

अमरेष्विव देवेंद्रो मनुष्येषु धनंजयः।
एकः कोऽस्मानुपायायादन्यो लोके धनंजयात्।
द्रोणेन चैवमुक्तस्तु कर्णः प्रोवाच बुद्धिमान्॥

*a*, *b* om. in ST.

After V. 35a

S. cl. adds :—

क्लीबं वै सारथिं कृत्वा निर्यातो नगराद्बहिः।

After V. 35

SK, SG, ST, SA² add :—

ते हि नः प्रतिसंयातुं संग्रामे न हि शक्नुयुः।
कथमेकतरस्तेषां समस्तान्योधयेत्कुरून्॥ १॥

After V. 37a

S. cl. adds:—

सारथिं ह्युत्तरं कृत्वा स्वयं योद्धुमिहेच्छति।

SA² adds before this:—

एकोस्माननुयात्येष नान्यो लोके धनंजयात्।

After V. 38a

S. cl. adds :—

दुर्योधन उवाचेदं सैनिकान् रथसत्तमान्।
अर्जुनो वासुदेवो वा रामः प्रद्युम्न एव वा॥ १॥

ते हि नः प्रतिसंयातुं संग्रामे न हि शक्नुयुः ।
अन्यो वै क्लीबरूपेण यथा गच्छेद्गवां पदम् ॥ २ ॥

शस्त्रैस्तीक्ष्णैरर्पयित्वा पातयिष्यामि भूतले ।
कथमेकतरस्तेषां समस्तान्योधयेत्कुरून् ॥ ३ ॥

SA[1] omits 1 *a*. SA[2] reads 3 *b* before 2 *b*.

**After V. 38**

S. cl. adds:—

अर्जुनेति च नेत्येव न व्यवस्यंति ते पुनः ।
इति स्म कुरवः सर्वे विमृशंतः पुनः पुनः ॥ १ ॥

दृढवेधी महासत्वः शक्रतुल्यपराक्रमः ।
अथागच्छति चेद्योद्धुं सर्वं संशयितं बलं ॥
न चाप्यन्यतरं तत्र व्यवस्यंति धनंजयात् ॥ २ ॥

**After V. 39**

SK adds:—

मा मा गृहाण भद्रं ते दासोऽहं ते बृहन्नले ।
इति वादिनमेवाशु धावंतं तरसाग्रहीत् ॥ १ ॥

S. cl. further adds:—

विराटपुत्रं बीभत्सुर्बलवानरिमर्दनः ॥

**After V. 40**

ST adds:—

भीतः प्रस्विन्नसर्वांगो विव्हलांगो विषण्णवान् ।

**After V. 40**

S. cl. adds:—

उत्तर उवाच ।

सुवर्णमणिमुक्तानां यद्यदिच्छसि दद्मि ते ।
हस्तिनोऽश्वान् रथान् गावः स्त्रियश्च समलंकृताः ॥ १

**After V. 41 a**

S. cl. adds :—

षष्टिं स्वलंकृताः कन्याः ग्राममेकं ददामि ते ।
मुंच मां त्वं भृशं दीनं विव्हलं भयकंपितम् ॥

ST adds after *a*:—

ददामि केयूरवरान् मुंच मां त्वं बृहन्नले ।

SG, ST, SA. read this v. after our v. 42.

### After V. 42

S. cl. adds:—

गमिष्यामि पुरं षंड द्रष्टुं मातरमद्य ताम् ।

SK alone continues:—

एकोऽहमेव मे मातुः कुमारः किं ब्रुवे ततः ।
विधिरेवंविधे काले त्वद्वशं कुरुते हि माम् ॥ १ ॥

मात्स्यस्य पुत्रो बालोऽहं तेन चास्मि सुपोषितः ।
मातृपार्श्वशयानोऽहमस्पृष्टातपवायुमान् ॥ २ ॥

अदृष्टबालयुद्धोऽहं कुतस्ते कुरवः कुतः ।
मातृपार्श्वं गमिष्यामि मुंच मां त्वं बृहन्नले ॥ ३ ॥

प्रलयार्णवसंकाशं दृश्यते कौरवं बलम् ।
स्त्रीणां मध्येऽहमज्ञानाद्वीर्यशौर्यांकितां गिरं ॥ ४ ॥

उक्तो यौवनगर्वेण को जेतुं शक्नुयात्कुरून् ।
अमुक्त्वा मां यदि नयेर्मरिष्यामि तवाग्रतः ॥ ५ ॥

### After V. 44a

SK adds:—

अहं योत्स्यामि कौरव्यैर्हयान्संयच्छ मेति माम् ।
आददानः किमर्थं त्वं पलायनपरोऽभवः ॥ १ ॥

युध्यस्व कौरवैः सार्धं विजयस्ते भविष्यति ।
यस्य यंतास्म्यहं युद्धे संयच्छामि हयोत्तमान् ॥ २ ॥

राज्ञो वा राजपुत्रस्य तस्य युद्धे जयो ध्रुवम् ।
सर्वथोत्तर युध्यस्व यंत्रा सह मया कुरून् ॥ ३ ॥

जित्वा महीं यशः प्राप्य भोक्ष्यसे सकलामिमाम् ।
हतो वा प्राप्स्यसे स्वर्गं न श्रेयस्ते पलायनम् ॥ ४ ॥

अद्य सर्वान् कुरून् जित्वा यथा जयमवाप्स्यसि ।
तथाहं प्रयतिष्येऽत्र सहायोऽत्र मतो ह्यहम् ॥ ५ ॥

### After V. 46a

S. cl. adds:—

मा भैस्त्वं राजपुत्राद्य क्षत्रियोऽसि परन्तप ।
अहं तैः कुरुभिर्योत्स्ये प्रत्यानेष्यामि ते पशून् ॥
प्रविशैतद्रथानीकं अप्रधृष्यं दुरासदम् ॥ १ ॥

### After V. 46

S. cl. adds:—

शूरान् समरचंडांश्च नयिष्ये यमसादनम् ।

**After V. 48**

S cl. adds:—

तमारोप्य रथोपस्थे विलपंतं धनंजयः ।
गांडीवं धनुरादातुमुपायात्तां शमीं प्रति ॥
उत्तरं तं समाश्वास्य कृत्वा यंतारमर्जुनः ॥ १ ॥

---

## ADHYĀYA 36.

*[ NORTHERN RECENSION. ]*

**After V. 9**

Edns EFG add:—

नदीज लंकेशवनारिकेतुः ।
नगाह्वयो नाम नगारिसूनुः ॥
एषोंगनावेषधरः किरीटी ।
जित्वा वयं नेष्यति चाद्य गावः ॥

*[ SOUTHERN RECENSION. ]*

**After V. 9**

S. cl. adds:—

एतावदुक्त्वा वचनं भीष्ममालोक्य चाब्रवीत् ।
नदीज लङ्केशवनारिकेतुः
नगाह्वयो नाम नगारिसूनुः ।
गत्या सुरेशः कच्चिदङ्गनेव
गुरुर्वभाषे वचनं तदानीम् ॥ १ ॥

वैशंपायन उवाच ।

इत्युक्त्वा संज्ञया द्रोणस्तूष्णीमासीद्विशांपते ।
भारद्वाजवचः श्रुत्वा गांगेयः संज्ञयाब्रवीत् ॥ २ ॥
अतीतं चक्रमस्माकं विपर्यांतरमागताः ।
अतीतः समयश्चोक्त अस्माभिर्यः सभातले ॥ ३ ॥
न भयं शत्रुतः कार्यं शंकां त्यज नरर्षभ ।
देवव्रतेनैवमुक्ते वचने हितकारिणा ॥ ४ ॥
दुर्योधनमथालोक्य संज्ञया द्रोण अब्रवीत् ।

SG om. 4 *b*.

**After V. 10 a**

SK adds:—

ये जेतारो महीपानाममुना कुरवो हताः ।
यस्मिन् जाते मही कृत्स्ना निर्भरोच्छ्वासिताऽभवत् ॥ १ ॥

येन मे दक्षिणा दत्ता यद्धा द्रुपदमोजसा ।
विद्धा वियद्गतं लक्ष्यं विनिर्जित्य च पार्थिवान् ॥ २ ॥
निर्जिता येन पांचाली पुरा येन स्वयंवरे ।
खांडवे येन संतृप्तो वह्निर्जित्वा सुरासुरान् ॥ ३ ॥
परिणीता सुभद्रा च येन निर्जित्य यादवान् ।
निर्जितो येन युद्धेन त्रिपुरारिः स्मरार्दनः ॥ ४ ॥
गत्वा त्रिविष्टपं येन जितेंद्रा दानवा युधि ।
निवातकवचा राजन् दानवानां त्रिकोटयः ॥ ५ ॥
निर्जिताः कालकेयाश्च हिरण्यपुरवासिनः ।
येन त्वं मोचितो बद्धश्चित्रसेनेन तद्वने ॥ ६ ॥
येन गत्वोत्तरं मेरोरानिनाय महद्धनम् ।
याजितो धर्मसूनुश्च नृपान्सर्वान्विजित्य च ॥ ७ ॥
यस्मिन् शौर्यं च वीर्यं च तेजो धैर्यं पराक्रमः ।
औदार्यं चैव गांभीर्यं श्रीर्न्हीर्धर्मो दयार्जवम् ॥ ८ ॥
एवमादिगुणोपेतः सोऽयं पार्थो न संशयः ॥ ९ ॥

**After V. 12**

SK adds:--

इत्येवं वादिनं द्रोणं कर्णः क्रुद्धोऽभ्यभाषत ।

---

## ADHYĀYA 37.

[ *NO ADDITIONS IN THE NORTHERN RECENSION.* ]

[ *SOUTHERN RECENSION.* ]

**After V. 1**

S. cl. adds :—

एहि भूमिंजयारुह्य वैराटे महतीं शमीम् ।

**After V. 3**

S. cl. adds :—

नेच्छामि तैरहं कर्तुं कर्म वैजयिकं त्विह ।
अतिसूक्ष्माणि न्हस्वानि सर्वाणि च मृदूनि च ।
आयुधानि महाबाहो तवैतानि महाबल ॥ १ ॥

**After V. 8**

ST adds :—

न ह्यस्य सन्निधिं प्राप्य मर्त्यः कश्चन धारयेत् ।

**After V. 9**

S. cl. adds:—

प्रथितानि विशिष्टानि दुर्दर्शानि भवन्त्युत ।

ST continues after this line:—

वैशंपायन उवाच ।

अर्जुनेनैवमुक्तस्तु वैराटिर्भीत उत्तरः ।
नाशक्तो वृक्षमारोढुमिदं वचनमब्रवीत् ॥

**After V. 10**

S. cl. except ST adds:—

न मामेवंविधं कर्म कारयस्व बृहन्नले ।
कथं वा शक्यते कर्तुं बुद्ध्या त्वं मन्यसे कथम् ॥ १ ॥

**After V. 12**

SK, SG, SA add:—

वैशंपायन उवाच ।

तमुवाच ततः शूरः पार्थः परपुरंजयः ।
दायादं सर्व मत्स्यानां कुले जातं विशारदम् ॥
जानामि त्वां महाप्राज्ञ शुभं जात्या कुलेन च ।
कथं नु पापकं कर्म ब्रूयां त्वाऽहं परन्तप ॥ २ ॥

ST reads 1 *b* alone दायादं &c after v. 12, omitting वैशं &c. and adds after दायादं &c:—

विवृत्तं सर्वसंपन्नं तितिक्षार्जवमार्दवैः ।
ईदृग्विधमनाहार्यं सर्वं स्पर्शयसेद्य माम् ॥
कथमस्मान्व्रजेष्यन्वै मद्भगिन्याः कृतप्रियः ।

बृहन्नलोवाच ।

कथं तु चान्वितं कुर्यात्त्वामहं नृपनन्दन ।
व्यवहार्यश्च राजा च वृद्धश्चैव भविष्यति ।
कथमभ्यवहार्यं वै कारये मत्स्यनन्दन ।
त्वद्भुजेष्या भगिन्याश्च कृतसंस्कारलक्षितः ॥
अहं त्वा कार्यमेवैतदनिंद्यं च न वा शुचिः ।

**After V 13**

ST adds:—

व्यवसायान्वितो भूत्वा गृहाणैतानि निश्चयात् ।
समाहितमना भूत्वा धनूरत्नं समाहर ॥ १ ॥

### After V. 15 a

ST adds:—

अथारुह्य हि वृक्षाग्रे निहितानि महात्मभिः ।
धनूंषि पृथिवीपालैस्तानि सर्वाण्युपाहर ।
समाधाय मनस्तात समाश्वाय परामृश ॥

### After V. 18

ST adds:—

तत्तु संस्पृश्य संहृष्टो भयार्तोऽर्जुनचोदितः ।
तमन्वशासच्छत्रुघ्नो रथे तिष्ठन् धनञ्जयः ।
परिवेष्टनमेतेषां सर्वं मुञ्चस्व मा चिरम् ।
तेषां संनहनीयानि स विमुच्य नराधिपः ।
अपश्यत्तत्र गाण्डीवं चतुर्भिरपरैः सह ॥
( cf v. 18 of our text ).

### After 20 b[1]

SK adds:—

... ... ... प्रत्रेपिततनुस्तदा ।
अर्जुनेन समाश्वस्तः किंचिद्धृष्टो नृपात्मजः ।
तेषां संदर्शनाभ्यासं स्पर्शाभ्यासं पुनः पुनः ।
आमील्य पुनरुन्मील्य स्पृष्ट्वा स्पृष्ट्वा चकार सः ।
सम्यग्घृष्टस्तदाऽऽश्वस्तः क्षणेन समपद्यत ॥

SG, ST & SA omit the portion from किंचिद्धृष्टो &c. to आश्वस्तः &c. & read अर्जुनेन समाश्वस्तः क्षणेन समपद्यत । only.

---

## ADHYĀYA 38.

### [ *NORTHERN RECENSION.* ]

### Before V. 1

K adds:—

न दृष्टं न श्रुतं चित्रं धनुषो रूपमीदृशम् ॥

### Before V. 11

Edns CDLN add:—

गुरुभारसहो दिव्य शात्रवाणां भयंकरः ।

L reads:—

गुरुभार सहः कस्य सायकोयं शिलीमुखः ।
हेमपुंखो गार्ध्रपत्रः शात्रवाणां भयंकरः ॥

**After V. 15**

Edns CGK add:—

कस्यायमसितः खड्गः हेमबिंदुभिरावृतः ।
आशीविषसमस्पर्शः परकायप्रभेदनः ।
गुरुभारसहो दिव्यः सपत्नानां भयप्रदः ॥

[ *SOUTHERN RECENSION.* ]

S. cl. reads the corresponding Adh. ( SK 41 ) in a manner verbally differing much from our text; it is therefore given below.

विराट उवाच ।
सारथे किमिदं दिव्यं नागो वा यदि वा धनुः ।
सौवर्णान्यत्र पद्मानि शतपत्राणि भागशः ॥
कुशाग्निप्रतितप्तानि भानुमन्ति बृहन्ति च ॥ १ ॥

After this our 1 *a*.

शशिसूर्यप्रभाः पृष्ठे भान्ति रुक्मपरिष्कृताः ।
पुष्पाण्यत्र सुवर्णानि शतपत्राणि भागशः ॥ २ ॥
विस्मापनीयरूपं च भीमं भीमप्रदर्शनम् ॥ ३ ॥
नीलोत्पलनिभं कस्य शातकुम्भपरिष्कृतम् ।

After this our v. 2 *a*.

तालप्रमाणं कस्येदं मणिरुक्मविभूषितम् ।
हाटकस्य सुवर्णस्य यस्मिञ्शाखामृगा दश ॥ ५ ॥
दुरानमं महादीर्घं सुरूपं दुष्प्रधर्षणम् ।
कस्येदमीदृशं चित्रं धनुः सर्वे च दंशिताः ॥ ६ ॥
चन्द्रार्कविमलाभासः सुरूपाः सुप्रदर्शनाः ।
हंसाः पृष्ठं श्रिता यस्य कुशाग्निप्रतिमार्चिषः ।
शार्ङ्गगाण्डीवसदृशं कस्येदं सारथे धनुः ॥ ७ ॥
चतुर्थं काञ्चनवपुर्भाति विद्युद्गणोपमम् ।
नीलोपलिप्तमच्छिद्रं जातरूपमयं धनुः ।
मत्स्याश्चास्य हिरण्यस्य पृष्ठे तिष्ठन्ति दंशिताः ॥ ८ ॥
शक्रचापोपमं दिव्यं कस्येदं सारथे धनुः ।
उच्छ्रितं फणिवद्दिव्यं सारवत्वाद्दुरानमम् ॥ ९ ॥

After this our v. 1 *b*.

बर्हिणश्चात्र सौवर्णाः शतचन्द्रार्कभूषिताः ।
जाम्बूनदविचित्राङ्गं कस्येदं पञ्चमं धनुः ॥ १० ॥

After this our v. 6 *a*.

प्रक्षितास्तीक्ष्णतुण्डाग्रा उपासङ्गे हिरण्मये ॥ ११ ॥

After this our v. 7 *b.*

आशीविषसमस्पर्शाः शिलाश्याजिह्मगा दृढाः ॥ १२ ॥

After this our v. 7 *a.*

वराहकर्णास्तीक्ष्णाग्राः कस्येमे रुचिराः शराः ॥ १३ ॥
वज्राशनिसमस्पर्शा वैश्वानरशिखार्चिषः ।
सुवर्णपुङ्खास्तीक्ष्णाग्राः कस्य सप्तशतं शराः ॥ १४ ॥

After this our v. 13 *a.*

कस्य दण्डो दृढः श्लक्ष्णो रुचिरोऽयं प्रकाशते ॥ १५ ॥
वैयाघ्रकोशः कस्यायं दिव्यः शङ्खो महाप्रभः ।
कस्यार्थमसपश्चैते पञ्चशार्दूललक्षणाः ॥ १६ ॥
कस्यायं निर्मलः खड्गो द्वीपिचर्मनिवासितः ।
नीलोत्पलसवर्णोऽयं कस्य खड्गः पृथुर्महान् ॥ १७ ॥
मृगेन्द्रचर्मावसितस्तीक्ष्णधारः सुनिर्मलः ।
ऋषभाजिनकोशस्तु कस्य खड्गो महानयम् ॥ १८ ॥
यस्यापिधाने दृश्यन्ते सूर्याः पञ्च परिष्कृताः ।
कस्यायं विपुलः खड्गः शृङ्गत्सरुमनोहरः ॥ १९ ॥
निहितः पार्षते कोशे तैलधौतः समाहितः ।
प्रमाणवर्णयुक्तश्च कस्य खड्गो महानयम् ।
एतेन प्रतिविद्धः सन्नैतेकश्चिन्न कुञ्जरः ॥ २० ॥

After this our v 16 ॥ २१ ॥

---

## ADHYĀYA 39.

### [ *NORTHERN RECENSION.* ]

**After V. 4 a**

D adds:—

अलं भारं गुरुं वोढुं दारुणं चारुदर्शनम् ।

***After V. 6***

H adds:—

तस्मादादाय च शतमग्निरेतद्धनुः शुभम् ।
तस्मात्पार्थमिदं प्राप्तं सर्वशत्रुभयंकरम् ॥

### [ *SOUTHERN RECENSION.* ]

**Before V. 1**

SK adds:—

वैशंपायन उवाच ।
उत्तरेणैवमुक्तस्तु पार्थो वैराटिमब्रवीत् ।
मृद्वा प्रत्याययन्वाचा भीतं शंकावशं गतम् ॥ १ ॥

After this S. cl. reads our vv. 1, 4 *a*, 2 *a*, 3 *a*, 4 *b*, 3 *b*, 5 *a*, 6, 7 in order and then:—

नीलोत्पलसमं राज्ञः कौरव्यस्य महात्मनः ।
बिन्दवश्चात्र सौवर्णाः पृष्ठे साधु नियोजिताः ॥

After this comes our v 8 *a*.

सहस्रगोधाः सौवर्णा द्वीपिनश्च चतुर्दश ।
ऋषभा यत्र सौवर्णाः पृष्ठे तिष्ठन्ति शृङ्गिणः ॥

After this comes our v. 9 *b*.

पृष्ठे विभक्ताः शोभन्ते कुशाग्निप्रतिदीपिताः ।

After this comes our v. 8 *b*. ( The above ll. are omitted in SA[1].)

तालप्रमाणं भीमस्य रत्नरुक्मविभूषितम् ।
दुरानमं महद्दीर्घं सुरूपं दुष्प्रधर्षणम् ॥

After this comes our v. 11.

**After V. 11**

ST adds:—

बिन्दवश्चात्र सौवर्णाः पृष्ठे साधु नियोजिताः ।
तस्येदं भीमसेनस्य जातरूपग्रहं धनुः ॥
सहस्रगोधाः सौवर्णा द्वीपिनश्च चतुर्दश ।
पृष्ठे विभक्ता दृश्यंते कृशानुप्रतिदीपिताः ॥
पूजितं सुरमर्त्येषु विभाति धनुरुत्तमम् ।
तालप्रमाणं भीमस्य मणिरत्नविभूषितम् ॥
येन पार्थो जयत्कृत्स्नां दिशं प्राचीं परंतपः ।
शातकुंभस्य शुद्धस्य यस्मिन्शाखामृगा दश ॥
हंसाः पृष्ठाश्रिता यस्य कृशानुपरमार्चिषः
एतत् गांडीवसदृशं सहदेवस्य तद्धनुः ॥
यदेतत्कांचनवपुर्भाति विद्युद्वर्णोपमम् ।
नकुलस्य धनुर्दिव्यं माद्रीपुत्रस्य धीमतः ॥

S. cl. adds:—

एतेन सदृशं चित्रं धनुरेतद्यवीयसः ।
हारिद्रवर्णं राज्ञस्तु कौरव्यस्य महात्मनः ॥
विपाठा भीमसेनस्य गिरीणामपि दारणाः ।
सुप्रभाः सुमहाकायास्तीक्ष्णाग्राः सुतपं दृढाः ॥
भीमेन प्रहिता ह्येते वारणानां निवारणाः ।
सुपर्णदण्डरुचिराः कालदण्डोप ः शुभाः ॥

नकुलस्य शरा ह्येते वज्राशनिसमप्रभाः ॥
यांश्च त्वं पृच्छसे दीप्तान्समधारान्समाहितान् ।
वराहकर्णास्तीक्ष्णाग्राः सहदेवस्य ते शराः ॥

After this comes our V. 19.

यस्त्वयं निर्मलः खड्गो द्वीपि चर्मणि दंशितः ।

After this comes our v. 21 *b*, 20

धारणानां सुदृतानां शिक्षित. स्कन्धशातने ।
नीलोत्पलसवर्णाभः खड्गः पार्थस्य धीमतः ॥
मृगेन्द्रचर्मपिहितस्तीक्ष्णधारः सुनिर्मलः ।
दर्शनीयः सुतीक्ष्णाग्रः कुन्तीपुत्रस्य धीमतः ॥
अर्जुनस्यैषनिस्त्रिंशः परसैन्याग्रदूषणः ॥
यस्त्वयं पार्षते कोशे निक्षिप्तो रुचिरत्सरुः ।
नकुलस्यैष निस्त्रिंशो वैश्वानरसमप्रभः ॥

After this comes v. 23 ( *text* ).

भीमस्यायं महादण्डः सर्वामित्रविनाशनः ।

वैशंपायन उवाच ।

भेदतो ह्यर्जुनस्तूर्णं कथयामास तत्त्वतः ।
आयुधानि कलापांश्च निस्त्रिंशांश्चातुलप्रभान् ॥

After the above ST adds·—

क्वापि प्रछन्नवासानां पांडवानां महात्मनाम् ।
न्यस्तान्यत्र महार्हाणि व्रतसिद्धिमुपेयुषाम् ॥
इत्युत्तराय तत्सर्वमर्जुनस्तत्वतोऽब्रवीत् ॥

---

## ADHYĀYA 40.

[ *NORTHERN RECENSION.* ]

**After V. 8a**

Edns BCDEGK²N add:—

एकाग्रमानसो भूत्वा श्रृणु सर्वं समाहितः ।

**After V. 21**

D adds:—

अहं दुरापो दुर्धर्षो दमनः कामशासनिः ।

DK add:—

स्थितोस्मि यत्तः संग्रामे वैराटे व्येतु ते भयं ।
एतच्छ्रुत्वा प्रहृष्टात्मा विस्मयोत्फुल्ललोचनः ॥

After V. 24

Edns & MSS add:—

यदजानन्नवोचं त्वां क्षन्तुमर्हसि तन्मम ।

After V. 29a

Edns & MSS add :—

एकं चाहर निस्त्रिंशं जातरूपपरिष्कृतम् ।

Edns A²BCDEGHKN further add:—

वैशंपायन उवाच ।

अर्जुनस्य वचः श्रुत्वा त्वरावानुत्तरस्तदा ।
अर्जुनस्यायुधान्गृह्य शीघ्रेणावातरत्ततः ॥ १ ॥

DK add after *a*:—

गांडीवं देवदत्तं च तथाक्षय्ये महेषुधीः ।
रथमारोपयैतन्मे प्रत्यानेष्यामि ते पशून् ॥

Before V 42

K adds:—

एतासु पंचस्वश्वानां रथचर्यासु पांडव ।
न च शत्रवो द्रक्ष्यंति गच्छमानमितस्ततः ॥

After V. 48

AK add·—

सस्मार दिव्यान्यस्त्राणि सर्वाणि भरतर्षभः ।
अभ्युपेयुर्महाभागमस्त्राणि भरतर्षभम् ॥

After V. 49a

Edns & MSS add·—

अथासौ प्राङ्मुखो भूत्वा शुचिः प्रयतमानसः ।

After V. 54a

Edns CDGN add:—

पपात महती चोल्का दिशो न प्रचकाशिरे ।

After V. 57a

Edns & NSS except add —

अत एव महाबाहो भीतास्तिष्ठामि तेऽग्रतः ।

After V. 61a

K adds:—

समासाद्य तु वार्ष्णेयं योगानामीश्वरं प्रभुं ।
N adds this l before v. 61 *a*.

[ *SOUTHERN RECENSION.* ]

**Before V. 1**

S cl. adds:—

वैशंपायन उवाच ।

एतस्मिन्नन्तरे पार्थं न मूढात्मा व्यजानत ।
विराटपुत्रः प्रमुखे पप्रच्छ पुनरेव तम् ॥ १ ॥

**After V. 1**

S. cl. adds:—

क नु ते पाण्डवाः शूराः संग्रामेष्वपराजिताः ।
येषामिमानि दीप्तानि श्रिया दीप्यन्ति भान्ति च ।
कस्मिन्वसन्ति देशे च धर्मज्ञा बन्धुवत्सलाः ॥ १ ॥

**After V. 2a**

SK adds:—

धर्मशीलश्च धर्मात्मा धर्मवान्धर्मवित्सुधीः ।
धर्माध्यक्षो धर्मपुत्रो धर्मज्ञो धर्ममूर्तिमान् ॥ १ ॥
धर्मनिष्ठो धर्मकर्ता धर्मगोप्ता सुधर्मकृत् ।
सत्यार्जवक्षमाधारो घृणी धर्मपरायणः ॥ २ ॥

**After V. 4**

S. cl. adds:—

उत्सृज्य राज्यं धर्म्यं ते नः श्रूयंते वनं गताः ॥ १ ॥
पाण्डवान्यदि जानीषे क नु ते धर्मचारिणः ।
क नु वा निवसन्तीति सत्यं ब्रूहि बृहन्नले ॥ २ ॥
किमर्थमागतान्यत्र शस्त्रास्त्राणि महात्मनाम् ।
कथं ज्ञातानि भवता तथा मे ब्रूहि शोभने ॥ ३ ॥

वैशंपायन उवाच ।

ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ।
उवाच राजपुत्रं तमुत्तरं शृणु मे वचः ॥ ४ ॥
मा भैस्त्वं राजशार्दूल सर्वं ते वर्णयाम्यहम् ।
नात्र भेतव्यमद्यापि राजपुत्र यथातथा ॥ ५ ॥
वयं ते पाण्डवा नाम वनवासस्य पारगाः ।
अतीते द्वादशे वर्षे च्छन्नवासमिहोषिताः ॥
तस्मादशङ्कितमनाः शृणुष्वावहितोत्तर ॥ ६ ॥

vv. 2 & 3 omitted in SA[1], SΓ. v. 3 only omitted in SG & SA[2] also; and ST reads for these vv:—

क्व च ते निवसन्तीति यदि जानासि सारथे।
पूर्वं ब्रूहि न मे श्रद्धा तेषामायुधलंबने ॥
सर्वज्ञ इव चावोचस्त्वमेवात्र बृहन्नले।

vv. 5 & 6 omitted in SG, SA. After 6 ST adds:—

सुखमत्रोपिता राज्ञो त्वत्पित्रा परिपालिताः।

**After V. 6**

S. cl. adds:—

भीमसेनेन दुर्वृत्तः सह भ्रातृभिराहवे ॥
श्रुत्वैतद्वचनं जिष्णोर्विस्मयस्फारितेक्षणः।
पश्यन्ननिमिषः पार्थं शनैर्वाचमुवाच ह ॥

*b*, *c* omitted in SG, ST, SA. ST reads *a* as भीमसेनेन भीमेन भीमविक्रमकर्मणा। and adds

द्रौपदीमर्षजात् क्रोधात्कीचकाः सानुजा हताः।

**After V. 8**

S. cl. adds:—

ईशानो विदधे देवस्त्रिदिवस्येश्वरो दिवि।

ST continues:—

तानि लोके प्रवृत्तानि वैराटे शृणु तत्वतः।

**After V. 9**

S cl. adds:—

एतानि मम नामानि स्थापितानि सुरोत्तमैः।

उत्तर उवाच

गुणतो दश नामानि समवेतानि पाण्डवे।
चरन्ति लोके ख्यातानि विदितानि ममानघ

ST further adds:—

त्वं तु तानपि मे ब्रूयाः श्रद्दध्यां तव सारथे।

**After V. 12a**

SK, SG add:—

इतस्ततश्चलत्येतन्मनो मे चञ्चलं त्वयि।
अर्जुनो वा भवाम्रेति वद शीघ्रं बृहन्नले ॥

ST adds:—

उत्तरेण तथा भूयः सन्नियुक्तो धनंजयः।
हेतुभिर्नामधेयानि प्रबूपज्जनमेजय ॥

After V.

S. cl. adds:—

यो ममाङ्गे व्रणं कुर्याद्भ्रातुर्ज्येष्ठस्य पश्यतः ।
युधिष्ठिरस्य रुधिरं दर्शयेद्वा कदाचन ।
पराभवमहं तस्य कुले कुर्यां न संशयः ॥ १ ॥

After V. 21

S. cl adds:—

माता मम पृथा नाम तेन मां पार्थमब्रुवन् ।
देवदानवगन्धर्वपिशाचोरगराक्षसान् ॥ १ ॥
अहं पुरा रणे जित्वा खाण्डवेऽग्निमतर्पयम् ।
हुताशनं तर्पयित्वा सहितः शार्ङ्गधन्वना ॥ २ ॥
त्रिविष्टपगतौ दृष्ट्वा पितामहमहेश्वरौ ।
मूर्च्छया पतितं भूमावागतौ देवसत्तमौ ॥ ३ ॥
दृष्ट्वा तौ वरदौ देवौ संज्ञां लब्ध्वोत्थितः पुनः ।
मूर्ध्ना हि प्रणतं भूमौ तौ देवौ वरदौ वरौ ॥ ४ ॥

After V. 22

S. cl. adds:—

सर्वदेवैः परिवृतौ भूयो मां स्वयमूचतुः ।
वरं तात वृणीष्वेति यं प्रार्थयसि पाण्डव ॥ १ ॥
ततोहमस्त्राण्यलभं दिव्यानि च दृढानि च ।
ब्राह्मं पाशुपतं चैव स्थूणाकर्णं च दुर्जयम् ॥ २ ॥
ऐन्द्रं वारुणमाग्नेयं वायव्यमथ वैष्णवम् ।
ततोहमजयं भूयो रथेनैन्द्रेण दुर्जयान् ।
मातलिं सारथिं कृत्वा निवातकवचान् रणे ॥ ३ ॥
अवध्यकवचान्देवैर्वरदृप्तान्महासुरान् ।
तिस्रः कोटीर्दानवानां संयुगेष्वनिवर्तिनाम् ॥ ४ ॥
एको निर्जित्य संग्रामे भूयो देवानतोषयम् ।
ततो मे भगवानिंद्रः किरीटमददात्स्वयम् ॥ ५ ॥
देवाश्च शंखमददुः शत्रुसैन्यनिवारणम् ।
अहं पारे समुद्रस्य हिरण्यपुरवासिनाम् ॥ ६ ॥
हत्वा षष्टिं सहस्राणि जयं संप्राप्तवान् रणे ।
असंभ्रान्तो रथे तिष्ठन् सहस्रेषु शतेषु च ॥ ७ ॥
शत्रुमध्ये दुराधर्षो न मुह्यंति च मे दिशः ।
अहं गन्धर्वराजेन ह्रियमाणं सुयोधनम् ॥ ८ ॥
भ्रातृभिः सहितं तात गन्धर्वैः समरे जितम् ।
चतुर्दश सहस्राणि हत्वा चैनममोचयम् ॥ ९

एतानि मम नामानि योऽहन्यहनि कीर्तयेत् ।
तं न पश्यन्ति सत्वानि न तं निघ्नन्ति शत्रवः ॥ १० ॥
अद्य पश्य महाबाहो मम वीर्यं सुदुःसहम् ।
मा भैर्विगतसंत्रासः कुरूनेतान्समागतान् ॥ ११ ॥
सुयोधनस्य मिषतः कर्णस्य च कृपस्य च ।
पितामहस्य भीष्मस्य द्रौणेर्द्रोणस्य च स्वयम् ।
सर्वानेव कुरूञ्जित्वा प्रत्यानेष्यामि ते पशून् ॥ १२ ॥

4 *a* omitted in SG. v 14, 15 *a* omitted in SG, ST, SA. After v. 9 above ST adds:—

मन्नाममथनं कीर्तिं प्राप्यान्यच्च प्रकीर्तितम् ।

**Before V. 23**

ST adds:—

तस्य तद्वचनं श्रुत्वा वैराटिः पार्थिवोत्तमः ।
प्रहृष्टरोमा हृष्टो भूद्विस्मयोत्फुल्ललोचनः ॥
तं प्रेक्ष्य वै महात्मानमर्जुनं मत्स्यनन्दनः ।
प्रांजलिश्चाभिवाद्याथ इदं वचनमब्रवीत् ॥

**After V. 24**

S. cl. adds:—

यदज्ञानादवोचं त्वां प्रमादेन नरोत्तम ।
अकृत्वा हृदये सर्वं क्षन्तुमर्हसि तन्मम ॥

**After V. 25**

S. cl. adds:—

दासोहं ते भविष्यामि पश्य मामनुकंपया ॥ १ ॥
या प्रतिज्ञा कृता पूर्वं तव सारथ्यकारणात् ।
सेयं प्रतिज्ञा पूर्णा मे हर्षश्चार्जुन जायते ॥ २ ॥
देवेन्द्रतनयस्येह सारथिः स्यां महामृधे ।
इति पूर्वं कृतास्माभिः प्रतिज्ञा युद्धदुर्मद ॥ ३ ॥
प्रतिज्ञा मम संपूर्णा तव सारथ्यकारणात् ।
मनःस्वास्थ्यं च मे जातं जातं भाग्यं च मे महत् ॥ ४ ।

After v. 1 of the above ST adds:—

यदज्ञानादवोचं त्वां विस्मर त्वं धनंजय ।
यावदर्वागहं विद्यां त्वां न तत्वेन भारत ॥
तावन्मेभूद्भयं तात कुरुभ्यो नात्र संशयः ।
यथा त्वंज्ञासिपमहं छन्नं तत्वेन भारत ॥

विस्मितोस्मि महासत्व सर्वशत्रुन्विनाशय।
तद्वाक्यजलसंसिक्तमुत्फुल्लहृदयं मम॥
मर्माभितप्तविजले म्लानपद्ममिव ह्रदे।

2 *b* omit. in SG, SA. v. 3 *a* omit in SA, SG.
v. 3 *b* omitted in SG, SA. 4 *a* omitted in SG, SA

**After V. 26a**

S cl. adds:—

दुर्योधनं च जित्वाजौ निवर्तय पशून्मम।

**After V. 28**

S. cl. adds:—

गाण्डीवं देवदत्तं च शराग्कनकभूषणान्।

**After V. 29a**

S. cl. adds:—

एकं चाहर निस्त्रिंशं जातरूपपरिष्कृतम्।

**After V. 29**

S. cl. adds:—

तोषयिष्यामि राजानं प्रवेक्ष्यामि पुरं पुनः'

**After V. 31a**

S. cl. adds:—

शरजालवितानाढ्यमास्फोटितमहास्वनम्।

**Before V. 33**

SK adds:—

बहुना किं प्रलापेन शृणु मे परमं वचः।
नाहं बिभेमि कौंतेय साक्षादपि शतक्रतोः॥
यमवायुकुबेरेभ्यो द्रोणभीष्मशतादपि॥

**After V. 33**

ST adds:—

कस्य हि स्याद्भयं वीर त्वत्सहायस्य भारत।
देवसेनामपि रणे जेष्यां यानात्रसंशयः॥

**After V. 38a**

SK adds:—

उर्वशीशापसंभूतं क्लैब्यं समुपसंस्थितम्।
पुराहमाज्ञया भ्रातुर्ज्येष्ठस्यास्मि सुरालयम्॥
मातवानुर्वशी दृष्टा सुधर्मायां मया तदा।
नृत्यंती परमं रूपं बिभ्रती वज्रिसन्निधौ॥

अपश्यं तामनिमिषं कूटस्थामन्वयस्य मे ।
रात्रौ समागता मह्यं शयनं रन्तुमिच्छया ॥
अहं तामभिवाद्यैव मातृसत्कारमाचरम् ।
सा च मामशपत्क्रुद्धा शिखंडी त्वं भवेति वै ॥
श्रुत्वा तमिंद्रो मामाह माभैस्त्वं पार्थ षण्डता ।
उपकारो भवेत्तुभ्यमज्ञातवसतौ पुरा ॥
इतींद्रो मामनुग्राह्य ततः प्रेषितवान्नृपा ।
तदिदं समनुप्राप्तं व्रतं चीर्णं मयानघ ॥

ST has the first line only.

**After V. 42**

S. cl. adds —

अश्वा ह्येते महाबाहो तवैवाहवदुर्जयाः ।
योग्या रथवरे युक्ताः प्राणवन्तो जितश्रमाः ॥

**After V. 45**

ST adds:—

एतैरश्वैरभिमतैर्युक्तः संग्रामजिन्महान् ।

**After V. 47**

S. cl. adds:—

सर्वशत्रुभिरायातो देवराज इवासुरैः ।

वैशंपायन उवाच ।

ततो रथादवस्कन्द्य वीर्यवानरिमर्दनः ।
प्रणम्य देवान्गाण्डीवमादाय रुरुचे श्रिया ॥

After *a*, ST completes this Adh. and begins a new one from वैशं०।

**After V 48**

S cl. adds:—

इन्द्रदत्ते च ते दिव्ये उद्धृत्यामुच्य कुण्डले ।

**After V. 49a**

SK adds:—

अथासौ प्राङ्मुखो भूत्वा शुचिः प्रयतमानसः ।

**After V. 55a**

S. cl. adds:—

तार्क्ष्यं शब्दमिव श्रुत्वा विनेशुर्दीनमानसाः ।
यथेन्द्रो व्याक्षिपद्वीमं विस्फोटमशनेर्भुवि ॥

After V. 55

SK, ST add:—

महाशनिमहाशब्दसदृशो ज्यास्वनो महान् ।
शत्रून्वीरांश्च संतर्ज्य निग्रहस्थो रथे स्थितः ॥

After V. 57a

SK adds:—

अत एव महाबाहो भीतांस्तिष्ठामि तेऽग्रतः ।

---

## ADHYĀYA 41.

*[ NORTHERN RECENSION. ]*

After V. 5a

Edns BCDEGN add:—

समुत्पपात रथे तूर्णं दिव्यरूपं मनोरमम् ।
रथं तमागतं दृष्ट्वा दक्षिणं प्राकरोत्तदा ॥ १ ॥

After V. 15

Edns CDGKN add:—

अमानुषाणां शब्देन भूतानां ध्वजवासिनाम् ॥

After V. 17

Edns GHN add:—

स मुहूर्तं प्रयातं तु पार्थो वैराटिमब्रवीत् ।

Before V. 19

Edns BCDEGHKN add:—

ततः शंखमुपाध्मासीद्दारयन्निव पर्वतान् ॥
गुहागिरीणां च तदा दिशः शैलांस्तथैव च ।
उत्तरश्चापि संलीनो रथोपस्थ उपाविशत् ॥ १ ॥

K[2] adds before this v.:—

ततः स पुनरेवाथ तं शंखं प्राधमद्बली ।
द्विषतां दुःखजननं सुहृदां प्रीतिवर्धनम् ॥

Edn[1] D read the second line after 1 *b.* above.

After V. 19

Edns BCDEGN add:—

तं समाश्वासयामास पुनरेव धनंजयः ।

BE have before the above·—

ततस्ते पवना धुर्या जानुभ्यामगमन्महीम् ।
सरथा संस्तुतस्तेन उपायाद्वानरध्वजः ॥ १ ॥

N has :—

उत्तरं तु रथे दृष्ट्वा शंखशब्देन मोहितम् ॥

### Before V. 20

BDEHKK²LM add:—

ततो द्रोणो महाबुद्धिः सर्वशस्त्रभृतां वरः ॥
उवाच ह कुरोर्मध्ये सर्वं संबोधयन्निव ॥ १ ॥
नदीजलंकेशवनारिकेतुर्नगाव्हयो नाम नगारिसूनुः ।
एषोंगनावेषधरस्तरस्वी विजेष्यते सर्वकुरुप्रवीरान् ॥ २ ॥
एषा न योषा यदि योषिदेषा तत्सैव या शुंभनिशुंभहन्त्री ।
मायामयस्त्रीव पुरातनोति लीलायितं वा पुरुषः पुराणः ३ ॥

v. 1 omitted in DHKK²LM. v. 2 omitted in BEK². v. 3 omitted in BDEH.

### After V. 21

Edns and MSS add:—

प्रत्यादित्यं च नः सर्वे मृगा घोरप्रवादिनः ।

[ *SOUTHERN RECENSION.* ]

### After V. 4

S. cl. adds:—

रथे वानरमुच्छ्रित्य गांडीवं व्याक्षिपद्धनुः ॥

### After V. 5 a

SK adds:—

ससातपपात रथे तूर्णं दिव्यरूपं मनोरमम् ॥

### After V. 6

SK, ST add:—

सैन्याभ्याशं स संप्राप्य गृहीत्वा शंखमुत्तमम् ।

### After V. 7

S. cl. adds:—

शशांककुन्दधवलं मुखे विक्षिप्य वासविः ।
उच्छ्वसद्गण्डयुगलं सिरालयाचितफालकम् ॥ १ ॥
आरक्तनिम्ननयनं न्हस्वस्थूलशिरोधरम् ।
अतिश्लिष्टोदरोरस्कं तिर्यगाननशोभितम् ॥ २ ॥

यावत्स्वशक्तिसामग्र्यं त्रैलोक्यं क्षोभयन्निव ।
मरुद्भिर्दशभिश्चैव प्राध्मापयदरिंदमः ॥ ३ ॥
शङ्खशब्दोऽस्य सोऽत्यर्थं श्रूयते कालमेघवत् ।
तस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ॥ ४ ॥
वानरस्य निनादेन रथनेमिस्वनेन च ।
जङ्गमस्य भयं घोरमकरोत्पाकशासनिः ॥ ५ ॥

First 3 vv. in SK only.

### After V. 9a

S. cl adds:—

अभ्राजत रथोपस्थे भानुर्मेराविवोत्तरे ॥
शङ्खघोषेण वित्रस्तं ज्याघातेन च मूर्च्छितम् ॥ १ ॥

### After V. 15

SK adds:—

अमानुषाणां शब्देन भूतानां ध्वजवासिनाम् ।

### After V. 17

S. cl. adds:—

वैशंपायन उवाच ।

पुनर्ध्वजं पुनः शङ्खं धनुश्चैव पुनः पुनः ॥
स मूढचेता वैराटिरर्जुनं समुदैक्षत ॥ १ ॥
स मुहूर्तं प्रयातं तु पार्थो वैराटिमब्रवीत् ॥
स्थिरो भव महाबाहो संज्ञां चात्मानमानय ॥ २ ॥

v. 2 *a* omitted in SG, ST, SA.

### After V. 18

S. cl. adds:—

एवमुक्त्वा महाबाहुः सव्यसाची परन्तपः ।
[ ST, SA add प्रदध्मौ च महाशङ्खं देवदत्तं धनंजयः । ]
ततः शङ्खमुपाध्मासीद्दारयन्निव पर्वतान् ॥ १ ॥
गुहा गिरीणां च तदा दिशः शैलांस्तथैव च ।
ज्याघोषं तलघोषं च एतया भूतान्यमोहयत् ॥ २ ॥
उत्तरश्चापि संलीनो रथोपस्थ उपाविशत् ।
तं समाश्वासयामास पुनरेव धनञ्जयः ॥ ३ ॥

1 *b* omitted in SA. 2 *a* omitted in SG, SA. V. 3 omitted in SG, ST, SA.

### After V. 19

ST adds:—

शङ्खशब्दं च तं श्रुत्वा मेघस्य निनदं यथा ।
गांडीवज्यास्वनं चैव विस्मयोत्फुल्ललोचनः ॥

And further S. cl. adds:—

वैशंपायन उवाच ।

भारद्वाजस्ततो द्रोणः सर्वशस्त्रभृता वरः ।
राजानं चाह संप्रेक्ष्य दुर्योधनमरिंदमः ॥ १ ॥

### After V. 20

S. cl. adds:—

औत्पत्तिकमिदं राजन् निमित्तं भवतीह नः ।
न हि पश्यामि विजयं सैन्येऽस्माकं परंतप ॥

### After V. 21

S. cl adds:—

प्रत्यादित्यं च नः सर्वे मृगा घोरा नदंति च ।

### After V. 24a

S. cl. adds:—

अनुष्णाङ्गाश्च संस्विन्ना जृम्भन्ते चाप्यभीक्ष्णशः ।
विष्कम्भन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः ॥ १ ॥
सदा मूत्रं पुरीषं च उत्सृजन्ति पुनः पुनः ।
लोहिताद्रा च पृथिवी दिशः सर्वाः प्रधूमिताः ॥ २ ॥
न च सूर्यः प्रतपति महद्वेदयते भयम् ।
हस्तिनश्चापि वित्रस्ता योधाश्चापि वितत्रसुः ॥ ३ ॥
After this comes our v. 28*b* and 29 *a*.
दिशं ते दक्षिणां सर्वे विप्रेक्षन्ते पुनः पुनः ।
मृगाश्च पक्षिणश्चैव सव्यमेव पतन्ति नः ॥ ४ ॥
धार्दिग्रोद्घुष्टघोषाश्च न च गाढं स्वनन्ति च ॥ ५ ॥
After this comes our v. 22 *a*.
यथा मेघस्य निनदो गम्भीरस्तूर्णमायतः ।
श्रूयते रथनिर्घोषो नायमन्यो धनञ्जयात् ॥ ६ ॥

अश्वाना स्वनतां शब्दो वहतां पाकशासनिम् ।
वानरस्य रथे दिव्यो निस्वनः श्रूयते महान् ॥ ७ ॥
शङ्खशब्देन पार्थस्य कर्णौ मे वधिरीकृतौ ।
सर्वसैन्यं च वित्रस्तं नायमन्यो धनञ्जयात् ॥ ८ ॥
राजानमग्रतः कृत्वा दुर्योधनमरिंदमम् ॥ ९ ॥

After this comes our v. 29 *b.*

प्रविभज्य त्रिधा सेनां समुच्छ्रित्य ध्वजानपि ।
शितैर्बाणैः प्रताप्येमां चमूमेष धनञ्जयः ॥ १० ॥
मूर्ध्नि सर्वनरेन्द्राणां वामपादं करिष्यति ।
न ह्येष शक्यो बीभत्सुर्जेतुं देवासुरैरपि ॥ ११ ॥
दिक्षु गुल्मा निवेश्यंतां यत्ता योत्स्यामहेऽर्जुनम् ॥ १२ ॥

After the above verses ST adds:--

सुयत्नः क्रियतामद्य यत्नाद्योत्स्यामहेऽर्जुनम् ॥

v. 2 *b* omitted in SG, SA. v. 3 & 4 *a* omitted in SG. v. 10 *b* & 11 omitted in SG, SA.

---

## ADHYĀYA 42.

### [ *NORTHERN RECENSION.* ]

**Before V. 3**

H adds:—

प्रच्छन्नैश्च वियस्तव्यं त्रयोदश विवत्सरम् ॥

**After V. 7 a**

N adds:—

स्वार्थे सर्वे विमुह्यंति येपि धर्मविदो जनाः ॥

Edn[1] D add this line after v. 7

**After V. 20**

Edns BCEG add:—

दुर्योधनवचः श्रुत्वा राधेयस्त्वब्रवीद्वचः ॥

**Before V. 23b**

Edn[1] adds:—

दृष्टा हि पांडवा नित्यमाचार्यस्य विशेषतः ।

**After V. 24**

Edn[2] CG add:—

दृष्टा हि पांडवा नित्यमाचार्यस्य विशेषतः ।
भासयप्रपरार्थश्च कथ्यते स्म स्वयं तथा ॥ १ ॥

G omits the second line.

**After V. 31a**

Edns CGH add:—

हस्त्यश्वरथचर्यासु खरोष्ट्राजाविकर्मणि।
गोधनेषु प्रतोलीषु वरद्वारमुखेषु च ॥ १ ॥
H गोधामुखप्रतोलीषु द्वारादिप्रमुखेषु च ॥ for *b*,

H further adds:—

स्वपक्षरक्षणे चैव पंडितास्तत्र शोभनाः ॥

**After V. 31**

H adds:—

यत्र कर्मसु सर्वेषु पंडितास्तत्र शोभनाः ॥

[ *SOUTHERN RECENSION.* ]

**After V. 1**

ST adds:—

अमर्षमाणस्तदाद्राक्यमाचार्यमिदमब्रवीत्।

**After V. 12a**

S. cl. adds:—

इत्येवं निश्चयोऽस्माकं मंत्रोऽभून्नागसाह्वये।
पाण्डवानां परिज्ञाने सर्वेषां नः परस्परम् ॥ १ ॥

**After V. 14a**

ST adds:—

नान्यत्र युद्धाच्छ्रेयोस्ति तथा नीतिरियं मम।

**After V. 18**

S. cl. adds:—

सर्वलोकेन वा युद्धं देवैर्वास्तु सवासवैः।

**After V. 23**

ST adds:—

जानाति च बलं तेषां ह्रसतां चाप्युपशृणु।

**After V. 23a**

ST adds:—

आदेशिका ह्यरण्येस्मिन्प्रीद्दशाः शत्रुभिर्जिताः।
विनाशयेमः सर्वे वै सर्वथा नात्र संशयः ॥ १ ॥

### After V. 26

S, cl. adds:—

भीषयन्पाण्डवेयेभ्यो भवान्सर्वानिमाञ्जनान् ।
प्रमुखे सर्वसैन्यानामयुद्धं बहु भाषते ॥ १ ॥
यथैवाश्वान्मार्गमाणांस्तानेवाभिपरीप्सवः ।
हेषितानीव शृण्वन्ति तदिदं भवतस्तथा ॥ २ ॥

For 2 *a* ST reads:—

यथाश्वान्मार्गमाणा वै नरवाजिपरीप्सवः ।

### After V. 30a

ST adds:—

पदवाक्यार्थकुशलाः पण्डितास्तत्र शोभनाः ।
विध्यन्ति वितता बालानाचार्यजनसंसदि ॥ १ ॥

### After V. 31

ST adds:—

न वारुणं च नाग्नेयं वायव्यं याम्यमेव च ।
अस्त्रं ब्रह्मास्त्रमेतानि सत्यहीनस्य ते वृथा ॥ १ ॥
मित्रकार्यमिदं तावत्पितापुत्रैर्महारथैः ।
भर्तृपिण्डं च निर्विष्टं गन्तुमर्हदभीक्षवः ॥ २ ॥
बिडालवद्भुङ्क्ष्व नित्यं नित्यं यज्ञाननुस्मरन् ।
आमंत्रणानि भुङ्क्ष्वाथ नास्मानेव विमर्षय ॥ ३ ॥
आगमिष्यन्ति पदवीं मत्स्याः पाण्डवमाश्रिताः ।
तानहं योधयिष्यामि भवता गम्यतां गृहम् ॥ ४ ॥
इष्टा वै पाण्डवा नित्यमाचार्यस्य विशेषतः ।
आहवे भक्तिदर्श्चैव वक्ष्यते तत्र शोभनम् ॥ ५ ॥
लक्षयेयं तथाचार्ये भयं भक्तिं च पाण्डवे ।
भीतेन तैर्न योद्धव्यं वयं योत्स्यामहे परैः ॥ ६ ॥

### After V. 33

SA, SG, ST add:—

यथास्माकं जयो वीर चिंतनीयस्तथा त्वया ॥

---

## ADHYĀYA 43.

### [ *NORTHERN RECENSION.* ]

### After V. 10

BEKN add:—

मत्कार्मुकविमुक्तानां शराणां नतपर्वणाम् ।
कः सहेदग्रतः स्थातुमपि सर्वः सुरासुरः ॥ १ ॥

After V. 12

Edns CG add :—

रथादतिरथं शूरं सर्वशस्त्रभृतां वरम् ।
विवशं पार्थमादास्ये गरुत्मानिव पन्नगम् ॥

After V. 22

K adds :—

पश्यंतु वीर्यमिह मामकमद्य नाम ।
मन्ने जने समनुजाः सुरसिद्धसंघाः ॥
शक्रात्मजस्य समरे विरथीकृतस्य ।
एवं पुनः स विरराम कृपो बभाषे ॥

[ *SOUTHERN RECENSION.* ]

After V. 1

S. cl. adds:—

यद्येष जामदग्न्यो वा यदि वेंद्रः पुरंदरः ।

After V. 5

S. cl. adds:—

एकैकं चतुरः पंच कचित्पष्टिं कचिच्छतं ।
हतान्पश्यत मात्स्यानामिषुभिर्निहतान् रथान् ॥ १ ॥

ST, SA read for this:—

एकं द्वौ चतुरः पंच कचित्पष्टिं कचिच्छतं ।
हतान्पश्यत मातंगान् कीर्णानेकेषुणा मया ॥

S. cl. further adds:—

मद्बाहुमुक्तैरिषुभिस्तैलधौतैः पतत्रिभिः ।
खद्योतैरिव संपृक्तमंतरिक्षं विराजताम् ॥ २ ॥

Before V. 6

SK, ST, SA add:—

क्रुद्धेनास्त्रं मया मुक्तं निर्दहेत्पृथिवीमिमां ।
स्थितं संग्रामशिरसि पार्थमेकाकिनं किमु ॥

After V. 8

S cl. adds: —

मम हस्तप्रमुक्तानां शराणां नतपर्वणाम् ।
निवृत्तिर्गच्छतां नास्ति वैश्वानरशिखार्चिषाम् ॥ १ ॥
इतश्चेतश्च मुक्तानां शराणां नतपर्वणाम् ।
तुमुलः श्रूयतां नादः षट्पदां गायतामिव ॥ २ ॥

SA[1] omits verse 2.

After V. 13a

S. cl. adds:—

निर्दहंतमनीकानि शमयिष्येऽर्जुनानलम् ।
रथादतिरथं लोके सर्वशस्त्रभृतां वरम् ॥
विवशं पार्थमादास्ये गरुत्मानिव पन्नगम् ॥ १ ॥
क्षुद्रकैर्विविधैर्भल्लैर्निपतद्भिश्च मामकैः ।
संमूढचेताः कौंतेयः कर्तव्यं नाभिपद्यताम् ॥ २ ॥

After V. 15

S. cl. adds:—

बर्हिबर्हिणराजानां बर्हिणां बर्हिणामिव ।
पततां पततां घोषः पततां पततामिव ॥ १ ॥

After V. 20

SK adds:—

अद्य मत्कार्मुकोत्सृष्टैर्भल्लैश्च नतपर्वभिः ।

After V. 21

ST adds:—

अनर्जुनमकर्णं वा युद्धं पश्यंतु कौरवाः ।
एष मे व्यवसायोऽद्य हृदि संपरिवर्तते ॥

SK adds:—

ध्वजाग्रे वानरस्तिष्ठन्भल्लेन निहतो मया ।
अद्यैव पततां भूमौ विनदन्भैरवान् रवान् ॥

---

ADHYĀYA 44.

[ NORTHERN RECENSION. ]

After V. 8a

A adds:—

एको देवेश्वरं जित्वा अस्त्रराजमवाप्तवान् ।

[ SOUTHERN RECENSION. ]

Before V. 1

S. cl. adds:—

वैशंपायन उवाच ।

कर्णं श्रुत्वा नीतिशास्त्रविशारदः ।
यः कुरुवीराणां रूपः शारद्वतोऽब्रवीत् ॥ १ ॥

### After V. 5

S. cl. adds:—

एको हि शत्रून्समरे समर्थः प्रतिबाधितुम् ।

ST adds after the above:—

त्रिलोकीमेकमेवायं संग्रान् जेतुं शरैः प्रभुः

### After V. 9

ST adds:—

पार्थोऽयमस्त्रवीर्येण दुर्योधनममोचयत् ।

S. cl. adds:—

पांचाली श्रीमती प्राप्ता क्षत्रं जित्वा स्वयंवरे ।
आदाय गतवान् पार्थो भवान्क नु गतस्तदा ॥ १ ॥

### After V. 18

ST adds:—

को हि गांडीवधन्वानमृषभं सर्वधन्विना ।
क्षेप्तुमुत्सहते लोके साक्षादपि पुरंदरः ॥ १ ॥

### After V. 19

S. cl. adds:—

उत्सृष्टं तूलराशौ तु एकोऽग्निं शमयेत्कथम् ।

### After V. 20

S. cl. adds:—

युद्धायावस्थितं पार्थमागतं पाकशासनिं ।
यत्ताः सर्वे रथश्रेष्ठं परिवार्य समंततः ॥
षड्रथाः परिकीर्यंतां वज्रपाणिमिवासुराः ॥ १ ॥

### After V. 21

*S. cl.* adds:—

न ह्यसंगत्य समरे पार्थं जेष्यामहे वयम् ।

SK adds after the above:—

संगत्य समरे पार्थं सर्वे जेष्यामहे वयम् ।

---

## ADHYĀYA 45.

### [ *NORTHERN RECENSION.* ]

### After V. 6

Edns and MSS add:—

चन्दनायोगविधिभिर्यंतसीं धृतिमाश्रितः ।

### After V. 20

$K^2$ adds:—

एवमाभाष्य राधेयं दुर्योधनमथाब्रवीत् ।

### Before V. 27

EdnsG add:—

यथा सभायां वृतं त्वं मातुलेन सहाक्षरैः ।
तथा युध्यस्व संग्रामे सौबलेन सुरक्षितः ॥ १ ॥

### After V. 27a

$N^2$ adds:—

क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः ॥

## [ *SOUTHERN RECENSION.* ]

### Before V. 1

S. cl. adds:—

कृपस्य वचनं श्रुत्वा कर्णो राजन्युधां पतिः ।
पुनः प्रोवाच संरब्धो गर्हयन् ब्राह्मणं कृपम् ॥ १ ॥

कर्ण उवाच ।

लक्षयाम्यहमाचार्यं भयाक्रान्तं गतं रिपौ ।
भीतेन हि न योद्धव्यमहं योत्स्ये धनंजयम् ॥ २ ॥
ननु वारुणमाग्नेयं याम्यं वायव्यमेव च ।
अस्त्रं ब्रह्मशिरश्चैव सत्वहीनस्य ते वृथा ॥ ३ ॥
मित्रकार्यं कृतमिदं पितापुत्रैर्महारथैः ।
भर्तृपिण्डश्च निर्विष्टो यथेष्टं गन्तुमर्हथ ॥ ४ ॥
भिक्षां हरस्व नित्यं त्वं यज्ञाननुचरस्व च ।
आमंत्रणानि भुङ्क्ष्वाद्य मास्मान् युद्धेन भीषय ॥ ५ ॥
भार्गवास्त्रं मया मुक्तं निर्दहेत्पृथिवीमिमाम् ।
किं पुनः पाण्डुपुत्राणामेकमर्जुनमाहवे ॥ ६ ॥
आगमिष्यन्ति पश्चात् मात्स्याः पाण्डवमाश्रिताः ।
कीचकानां तु बलिनां शत्रुसेनावमर्दिनाम् ॥ ७ ॥
तानहं निहनिष्यामि भवता गम्यतां गृहम् ।
किं वेदवादिनां कार्यं परक्षेत्रानुभाषिणाम् ॥ ८ ॥
तस्य तद्वचनं श्रुत्वा अश्वत्थामा प्रतापवान् ।
उवाच वदतां श्रेष्ठो दुर्योधनमवेक्ष्य च ॥ ९ ॥

## ADHYĀYA 46

### [ *NORTHERN RECENSION* ]

DK have here an additional Adh. as under —

कर्ण उवाच ।

सदैव द्रोणपुत्रोऽद्य पापात्मा पापपूरुष ।
किमत्र कार्यं पार्थेन कथ वा सम्प्रशस्यते ॥ १ ॥
अन्यत्र कामान्मोहाद्वा लोभाद्वा स च केवलात् ।
प्रशसति दुरात्मान पाडव पापपूरुषम् ॥ २ ॥
मा चापि निंदिते नित्य त्वा द्विषन्स्वैरमायया ।
तस्मादद्य सुदुर्बुद्धि पश्यता मम पौरुषम् ॥ ३ ॥

अश्वत्थामोवाच ।

वाक्शूरा ब्राह्मणा प्रोक्ता बाहुशूराश्च क्षत्रिय ।
धनुषा चार्जुन शूरो कर्ण शूरा मनोरथैः ॥ ४ ॥

कर्ण उवाच ।

सदा भीष्मस सर्वा वाहिनीं ब्राह्मणो गुरु ।
प्रीत्या च पाडुपुत्राणा दर्शयन्नहित तव ॥ ५ ॥
सदा च वायवो वाति नित्य वर्षति वासव ।
अर्जुन समरे जित्वा लब्ध्वा च विजय महत् ॥
तत छेत्स्यामि खड्गेन शिरस्ते ब्राह्मणाधम ॥ ६ ॥

वैशपायन उवाच ।

एवमुक्ते तु वचने कर्णेनामित्रसूदन ।
अश्वत्थामा ततो राजन्क्रुद्धोऽत्पतत नरेश्वर ॥ ७ ॥
द्रोणपुत्रस्तु तच्छ्रुत्वा खड्ग जग्राह चर्म च ।
गृहीत्वा निमल खड्ग चर्म चादाय सुप्रभम् ॥ ८ ॥
दुद्राव योद्धु त कर्ण सिंह क्षुद्रमृग यथा ।
तस्मिन्गृहीते खड्गे तु कर्णोऽपि रथिनावर ॥ ९ ॥
उत्ततार रथात्तूर्णं गृण्हात्खड्ग स वीर्यवान् ।
ततस्तौ तु महावीर्यौ कृतास्त्रौ युद्धदुर्मदौ ॥ १० ॥
सयत्तौ शाधसयुक्तौ युद्धप्रेप्सू समीयत ॥ ११ ॥
अन्योन्यस्य वध प्रेप्सू सिंहाविव मदोत्कटौ ।
तौ दृष्ट्वा सुमहावीर्यौ युद्धाय समवस्थितौ ॥ १२ ॥
दुर्योधनो रथात्तूर्णं प्रेक्ष्य तूर्णं समागतौ ।
कौरवेंद्रो महाराज रथादुत्तीर्य वेगवान् ॥ १३ ॥

SG, ST, SA omit v. 7 *b* & 8 *b*. ST repeats the passage.

**After V. 1**

S. cl. adds:—

बहूनि धर्मशास्त्राणि पठन्ति द्विजसत्तमाः ।
तेषु किं स्विदिदं दृष्टं द्यूते जीयेत यन्नृपः ॥ १ ॥

**After V. 6a**

ST adds:—

न चानृतेयोगविधिश्चरेद्वैतंडिको यथा ।

**After V. 6**

SK, ST add:—

वन्दनायोगविधिभिर्वैतसीं वृत्तिमाश्रितः ।

**After V. 7**

SK, ST, SG add:—

का जातिस्तेषु सूतेयं केपि मंत्राः क्रियाश्च काः ।
कोयं वर्णेषु या राज्ञो वक्तृमोक्तृनियन्तृषु ॥ १ ॥

वैशंपायन उवाच ।

दुर्योधनमभिप्रेक्ष्य कर्णं च कुरुसंसदि ।
अश्वत्थामा भृशं क्रुद्धो दुर्योधनमतर्जयत् ॥ २ ॥

v. 1 omitted in SG.

**After V. 22**

ST adds:—

अवोचस्त्वं यथा क्षुद्र पांडवान्परुषं गिरः ।
अथ युध्यस्व युध्यर्थे सौबलेयेन पालितः ।

**After V. 26**

SK, ST add:—

यथा सभायां यूतं त्वं मातुलेन सहाकरोः ॥
तथा युद्ध्यस्व संग्रामे सौबलेन सुरक्षितः ॥ १ ॥

## ADHYĀYA 46.

[ *NORTHERN RECENSION.* ]

DK have here an additional Adh. as under :—

कर्ण उवाच ।

सदैव द्रोणपुत्रोऽयं पापात्मा पापपूरुषः ।
किमत्र कार्यं पार्थेन कथं वा संप्रशस्यते ॥ १ ॥
अन्यत्र कामान्मोहाद्वा लोभाद्वा स च केवलात् ।
प्रशंसंति दुरात्मानं पांडवं पापपूरुषम् ॥ २ ॥
मां चापि निंदिते नित्यं त्वां द्विपन्स्वैरमायया ।
तस्मादयं सुदुर्बुद्धिः पश्यतां मम पौरुषम् ॥ ३ ॥

अश्वत्थामोवाच ।

वाक्शूरा ब्राह्मणाः प्रोक्ता बाहुशूराश्च क्षत्रियः ।
धनुषा चार्जुनः शूरो कर्णः शूरो मनोरथैः ॥ ४ ॥

कर्ण उवाच ।

सदा भीषयसे सर्वां वाहिनीं ब्राह्मणो गुरुः ।
प्रीत्या च पांडुपुत्राणां दर्शयन्नहितं तव ॥ ५ ॥
सदा च वायवो वांति नित्यं वर्षति वासवः ।
अर्जुनं समरे जित्वा लब्ध्वा च विजयं महत् ॥
ततः छेत्स्यामि खड्गेन शिरस्ते ब्राह्मणाधम ॥ ६ ॥

वैशंपायन उवाच ।

एवमुक्ते तु वचने कर्णेनामित्रसूदन ।
अश्वत्थामा ततो राजन्क्रुद्धोऽत्यर्थं नरेश्वर ॥ ७ ॥
द्रोणपुत्रस्तु तच्छ्रुत्वा खड्गं जग्राह चर्म च ।
गृहीत्वा विमलं खड्गं चर्म चादाय सुप्रभम् ॥ ८ ॥
दुद्राव योद्धुं तं कर्णं सिंहः क्षुद्रमृगं यथा ।
तस्मिन्गृहीते खड्गे तु कर्णोऽपि रथिनांवरः ॥ ९ ॥
उत्ततार रथात्तूर्णं गृण्हात्खड्ग स वीर्यवान् ।
ततस्तौ तु महावीर्यौ शूराग्र्यौ युद्धदुर्मदौ ॥ १० ॥
सम्रद्धौ क्रोधसंयुक्तौ युद्धप्रेप्सू समीयतुः ॥ ११ ॥
अन्योन्यस्य वधं प्रेप्सू सिंहाविव मदोत्कटौ ।
तौ दृष्ट्वा सुमहावीर्यौ युद्धाय समवस्थितौ ॥ १२ ॥
दुर्योधनो रथात्तूर्णं प्रेक्ष्य तूर्णं समागतौ ।
कौरवेंद्रो महाराज रथादुत्तीर्य वेगवान् ॥ १३ ॥

अभिद्रुत्य गुरोः पुत्रमश्वत्थामानमब्रवीत् ।
अश्वत्थामन् गुरोः पुत्र क्षम्यतां द्विजसत्तम ॥ १४ ॥
कर्णो वक्तुं न जानाति ब्राह्मणश्चातिकोपनः ।
त्वयि सन्निहितो भारो युद्धस्यैव विनिश्चयः ॥ १५ ॥
स तथाभिहितो राजन् राज्ञा चैव निवारितः ।
स्वरथं प्राप्य तूर्णं वै न च किंचिदुवाच ह ॥ १६ ॥
कर्णोऽपि स्वं रथं चैव समारुह्य नृपाज्ञया ।
निवारितो नैव तदा वाक्यं किंचिदुवाच ह ॥ १७ ॥
श्री महाभारते विराटपर्वण्युत्तरगोग्रहे ।
कर्णवाक्यं नाम पंचाशत्तमोऽध्यायः ॥

K omits vv. 11, 13 *b* and 17 *b*.

**After V. 8**

D adds:—

जिव्हाग्रे चतुरो वेदाः कराग्रे सशरं धनुः ।
उभयोर्द्रोणसामर्थ्यं शापादपि शरादपि ॥

**After V. 9**

Edns CG add:—

वेदांताश्च पुराणानि इतिहासं पुरातनम् ।
जामदग्न्यमृते राजन्को द्रोणादधिको भवेत् ॥ १ ॥

Edns and MSS further add:—

ब्रह्मास्त्रं चैव वेदाश्च नैतदन्यत्र दृश्यते ।

**After V. 11**

Edns BCDEGHKN add:—

नैव न्याय्यमिदं वाच्यमस्माकं पुरुषर्षभ ।
किंतु रोषपरीतेन गुरुणा भाषिता गुणाः ॥ १ ॥
शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि ।
सर्वथा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत् ॥ २ ॥

**After V. 15a**

D adds:—

तथा दुर्योधने नेदमारा स्पृशाति सैनिकान् ।

Edn[1] adds:—

यथा दुर्योधनो राजा न गच्छेत् द्विषतां वशम् ।

[ *SOUTHERN RECENSION.* ]

**Before V. 1**

SK, SG, ST add:—

वैशंपायन उवाच ।

ततः शांतनवस्तत्र धर्मार्थकुशलं हितम् ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ १ ॥

**After V. 1a**

SK, SG, ST add:—

आचार्यपुत्रः सहजं निश्चितं साधु भाषते ।

**After V. 4a**

S cl. adds:—

तस्मात्तत्त्वं न जानाति यत्तु कार्यं नराधिपः ।
धार्तराष्ट्रोऽपि दुर्बुद्धिः पश्यन्नपि धनंजयम् ॥
नैव पश्यति नाघ्राति मंदः क्रोधवशं गतः ॥ १ ॥

वैशंपायन उवाच ।

एवमुक्त्वा तु राजानं पुनर्द्रौणिमुवाच ह ।
प्रांजलिर्भरतश्रेष्ठः साम्ना बुद्धिमतां वरः ॥ २ ॥

SA[1] omits 1*c*. and SA omits v. 2.

**After V. 9**

SK adds:—

वेदांताश्च पुराणानि इतिहासं पुरातनम् ।
जामदग्न्यमृते राजन्को द्रोणादधिको भवेत् ॥ १ ॥

S. cl. adds:—

ब्रह्मास्त्रं चैव वेदाश्च नैतदन्यत्र दृश्यते ।

**After V. 10**

ST adds:—

आचार्यं योऽप्यतिक्रांतो ह्यस्त्रेषु च सांप्रतम् ।
जामदग्न्यमृते तेषु न द्रोणात्कोऽपि चाधिकः ॥

**After V. 11**

ST adds:—

आचार्यमुख्यः क्षमतां शांतिरत्र प्रधीयताम् ।
.... ... ... ... ... ... सहपुत्रेण धीमता ।
प्रशान्ते हि गुरौ मे स्यान्निवृत्तिः पापनाशिनी ॥ १ ॥

वैशंपायन उवाच ।

भीष्मवाक्ये ततो धीरस्तोपितः कतिचिच्छ्रुतौ ।
अश्वत्थामा ततो भीष्मं प्रत्युवाच कुरूत्तमम् ॥ २ ॥

**After V. 11**

SK adds:—

अश्वत्थामोवाच ।

नैवं न्याय्यमिदं वाच्यमस्माकं पुरुषर्षभ ।
किं तु रोषपरीतेन गुरुणा भाषिता गुणाः ॥ १ ॥
शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि ।
सर्वथा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत् ॥ २ ॥

---

## ADHYĀYA 47.

[ *NORTHERN RECENSION.* ]

**After V. 4**

K² adds:—

गते वर्षद्वये चैव पंचपक्षे दिनद्वये ।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः ॥ १ ॥

**After V. 10**

Edns & MSS add:—

प्रतियुध्येम समरे सर्वशस्त्रभृतां वरम् ।

**After V. 11a**

DN add:—

आगतं फाल्गुनं राजन् सर्वैस्तत्र न संशयः ।

**After V. 19**

Edns C add:—

अहमावारयिष्यामि वेलेव मकरालयम् ।

[ *SOUTHERN RECENSION.*

**After V. 4**

S. cl. adds:—

पूर्वेद्युरेव निर्वृत्तस्ततो बीभत्सुरागतः ॥

ST adds before this:—

ते चापि मासा निर्वृत्ता कुपथापि च सर्वदाः ।
त्रयोदशं च निर्वृत्ता इति मन्यन्नृपोत्तमः ॥ १ ॥
त्रयोदशानामुपरि निर्दिष्टं सं ... योजनम् ।
सर्वैः सुचरितं तेषां यदेभिरभिसंवृतम् ॥ २ ॥

After V. 6

SK adds:—

कामात्क्रोधाच्च लोभाच्च कामक्रोधभयादपि ।
स्नेहाद्वा यदि वा मोहाद्धर्मं नात्येति धर्मजः ॥ १ ॥

After V. 10

S. cl. adds:—

प्रतियुध्येम समरे सर्वशस्त्रभृतां वरम् ।

After V. 14

S. cl. adds:—

एको हि समरे पार्थः पृथिवीं निर्दहेच्छरैः ।
भ्रातृभिः सहितो भूत्वा किं पुनः कौरवान् रणे ।
तस्मात्संधिं कुरुश्रेष्ठ कुरुष्व यदि मन्यसे ॥ १ ॥

After V. 15a

SK, ST add:—

ग्रामं सेनां च दासांश्च स्वल्पं द्रव्यमपि प्रभो ।

After V. 15

S. cl. adds:—

वैशंपायन उवाच ।

भीष्मस्योपरते वाक्ये तथा दुर्योधनस्य च ।
प्रासमर्थ्यं च यद्वाक्यं द्रोणश्चाह द्विजोत्तमः ॥ १ ॥
यत्तु युद्धोपचरितं भवेद्वा धर्मसंहितम् ।
कस्त्वया सदृशो लोके भूयस्त्वं वक्तुमर्हसि ॥ २ ॥

ST adds द्रोणउवाच after v. 1 above.

After V. 19a

SK adds:—

एवं राजा सुगुप्तः स्यान्न दैन्यं गन्तुमर्हति ।

After V 19

SK adds :—

अहमावारयिष्यामि वेलेव मकरालयम् ।

SA, SG, ST have for this line:—

युध्याम सह संगम्य पाकशासनिमागतम् ।

### After V. 21

S. cl. adds:—

द्रोणस्योपरते वाक्ये भीष्मः प्रोवाच बुद्धिमान् ।

SA, SG have वैशंपायन उ० before this line.

### After V. 22

S. cl. adds:—

विकर्णश्च महावीर्यो दुर्मुखश्च परंतपः ।
शकुनिः सौबलश्चैव दुःसहश्च महाबलः ।
द्रोणस्य पार्श्वमजिताः पालयन्तु महाबलाः ॥ १ ॥

ST omits 1*c*.

### After V. 23

S. cl. adds:—

सर्वे महारथाः शूरा महेष्वासा महाबलाः ।
युद्धयन्तु पाण्डवश्रेष्ठमागतं यत्नतो युधि ॥ १ ॥
वैशंपायन उवाच ।
अभेद्यं परसैन्यानां व्यूहं व्यूह्य कुरूत्तमः ।
वज्रगर्भं व्रीहिमुखं पद्मचन्द्रार्धमण्डलम् ॥ २ ॥
तस्य व्यूहस्य पश्चार्धे भीष्मश्चाथोद्यतायुधः ।
सौवर्णं तालमुच्छ्रित्य रथे तिष्ठन्नशोभत ॥ ३ ॥

---

## ADHYĀYA 48.

[ *NORTHERN RECENSION.* ]

### After V. 4

Edn[1] adds:—

वानरः सर्वसेनायां करोति भयमुत्तमम् ।

M[2] adds:—

एष उदार आयाति रथे च रथिनां वरः ।

### After V. 6

BEK[2] add:—

कुशलं परिपृष्ट्वा न गतास्ते कंकवाससः ।

### After .V 7

Edns CDGHK[2]MN add:—

चिरदृष्टोयमस्माभिः प्रज्ञावान् बान्धवप्रियः ।
अतीव ज्वलितो लक्ष्म्या पाण्डुपुत्रो धनंजयः ॥ १ ॥

रथी शरी चारुतली निषंगी।
शंखी पताकी कवची किरीटी॥
खड्गी च धन्वी च विभाति पार्थः।
शिखी वृतः स्रुग्भिरिवाज्यसिक्तः॥ १॥

Edn[1] further adds:—

वैशंपायन उवाच।
ततोऽर्जुनः कुरून्दृष्ट्वा संग्रामे समवस्थितान्।
तत्कालसदृशं वाक्यं मत्स्यपुत्रमभाषत॥ १॥

After V, 8a

H adds:—

रथं स्थापय मे वीर कुरुसेनासमीपतः।

After V. 12a

Edns &MSS add:—

तत्रैव योत्स्ये वैराटे नास्ति युद्धं निरामिषम्।

After V. 12

N adds:—

पश्चादेते प्रयातव्या इति मे वर्तते मतिः।

After V. 13a

Edns &MSS add:—

निम्यय च ततो रश्मीन्यत्र ते कुरुनन्दनाः।

After V 16

Edns CGHKK[2] add:—

आचार्याच्च सपुत्राद्वा भारद्वाजान्महारथात्।

After V 17

BE add:—

नदीज लंकेशवनारिकेतुर्नगान्दयो नाम नगारिसूनुः।
एषोऽङ्गनावेषधरः प्रमाथी जित्वा वयं नेष्यति चाद्य गावः॥ १॥

After V 22a

Edns and MSS add:—

गाण्डीवस्य च घोषेण पृथिवी समकम्पत।

[ *SOUTHERN RECENSION.* ]

**After V. 2**

S cl. adds:—

त्रिक्रोशमात्रं गत्वा तु पाण्डवः श्वेतवाहनः।
सेनामुखमभिप्रेक्ष्य पार्थो वैराटिमब्रवीत् ॥ १ ॥
राजानं नात्र पश्यामि रथानीके व्यवस्थितम्।
दक्षिणं पक्षमादाय कुरवो यान्त्युदङ्मुखाः ॥ २ ॥
उत्सृज्यैतद्रथानीकं महेष्वासाभिरक्षितम्।
गवाग्रमभितो याहि यावत्पश्यामि मे रिपुम् ॥ ३ ॥
गवाग्रमभितो गत्वा गाश्चैवाशु निवर्तय।
यावदेते निवर्तन्ते कुरवो जवमास्थिताः।
तावदेव पशून्सर्वान्निवर्तिष्ये तवाभिभो ॥ ४ ॥
वैशंपायन उवाच।
इत्युक्त्वा समरे पार्थो वैराटिमपराजितः।
सव्यं पक्षमनुप्राप्य जवेनाश्वानचोदयत् ॥ ५ ॥
ततोऽभ्यवादयत् पार्थो भीष्मं शान्तनवं कृपम्।
द्वाभ्यां द्वाभ्यां तथाचार्यं द्रोणं प्रथमतः क्रमात्।
द्रोणं कृपं च भीष्मं च पृषत्कैरभ्यवादयत् ॥ ६ ॥

3*b* omitted in SA[1]. 6*c* omitted in SG, ST and SA.

**After V. 3**

S. cl. adds:—

न कश्चिद्योद्धुमिच्छेत न च गुप्तं स्वजीवितम्।
अयं वीरश्च शूरश्च दुर्धर्षश्चैव संयुगे ॥ १ ॥

**After V. 4**

S cl. adds:—

आस्थाय च रथं याति गाण्डीवं विक्षिपन्धनुः।
अश्वानां स्तनतां शब्दो वहतां पाकशासनिम् ॥ १ ॥
रथस्याम्बुधरस्येव श्रूयते भृशदारुणः।
दारयन्निव तेजस्वी वसुधां वासवात्मजः ॥ २ ॥

**After V. 5 a**

S cl. adds:—

एष दृष्ट्वा रथानीकमस्माकमरिमर्दनः।
श्रीमान्वदान्यो धृतिमान्सत्करोति च पाण्डवः ॥ १ ॥

**After V. 6 a**

S. cl. adds:—

रथस्याग्रे निपातौ मे चित्रपुंखावजिह्मगौ।

### After V. 6

S. cl. adds:—

संस्पृशन्तावतिक्रान्तौ पृष्ठ्यानामयं भृशम् ।
चिरदृष्टोऽयमस्माभिर्धर्मज्ञो बान्धवप्रियः ॥
अतीव ज्वलते लक्ष्म्या पाण्डुपुत्रः प्रतापवान् ॥ १ ॥

### After V. 7

S. cl. adds:—

अमर्षेण हि संपूर्णो दुःखेन प्रतिबोधितः ।
अद्येमां भारतीं सेनामेको नाशयते ध्रुवम् ॥ १ ॥

द्व्यधिकं दशामुष्य वत्सराणाम् ।
स्वजनेनाविदितस्त्रयोदशं च ॥

ज्वलते रथमास्थितः किरीटी ।
तम इव रात्रिजमभ्युदस्य सूर्यः ॥ २ ॥

रथी शरी चारुमाली निषंगी ।
शंखी पताकी कवची किरीटी ॥

खड्गी च धन्वी च विराजतेयम् ।
शिखीव यज्ञेषु घृतेन सिक्तः ॥ ३ ॥

वैशंपायन उवाच ।

तमदूरमुपायान्तं दृष्ट्वा पाण्डवमर्जुनम् ।
नारयः प्रेक्षितुं शेकुस्तपन्तं हि यथा रविम् ॥
स तं दृष्ट्वा रथानीकं पार्थः सारथिमब्रवीत् ॥ ४ ॥

### After V. 8

S. cl. adds:—

रक्तवैडूर्यविकृतं मणिप्रवरभूषितम् ।
परं जानाम्यहं तस्य ध्वजं दूरात्समुच्छ्रितम् ॥ १ ॥

यद्येनमिह पश्यामि दुर्बुद्धिमतिमानिनम् ।
यमाय प्रेषयिष्यामि सहायः स्याद्यदीश्वरः ॥ २ ॥

SA[1] omits 2 *b*.

### After V. 9

S. cl. adds—

हनिष्यामि तमेवाद्य शरैर्गाण्डीवनिःसृतैः ।
तस्मिन्हते भविष्यन्ति सर्वे एव पराजिताः ॥ १ ॥

### After V. 9

S. cl. adds:—

शरैश्च शमयिष्येऽहं धार्तराष्ट्रं ससौबलम्।
असभ्यानां च वक्तारं कुरूणां किल किल्बिषम्॥ १॥
राजानं नेह पश्यामि निरामिषमिदं बलम्।
अभिद्रवे ह राजानं व्यक्तमिन्यत्र निर्भयः॥ २॥

SG omits 1*b* and 2*a*.

### After V. 10

S. cl adds:—

भूरिश्रवाः सोमदत्तो बाल्हीकश्च जयद्रथः।
दक्षिणं पक्षमाश्रित्य स्थिता युद्धविशारदाः॥ १॥
साल्वराजो द्युमत्सेनो वृषसेनश्च सौबलः।
दशार्णश्चैव कालिंगो वामं पक्षं समाश्रितः॥ २॥
पृष्ठतः कुरुमुख्यश्च भीष्मस्तिष्ठति दंशितः।
सोऽर्धसैन्येन बलवान् सर्वेषां नः पितामह॥ ३॥

v. 1 *b* & 2 omitted in SA[1].

### After V. 12a

ST adds:—

तत्र योत्स्ये च वैराटे नास्ति युद्धं निरामिषम्।

### After V 12

S. cl. adds:—

गवाग्रमभितो याहि यत्र राजा भविष्यति॥ १॥

वैशंपायन उवाच।

इत्युक्त्वा समरे पार्थो वैराटिमपराजितः।
संस्पृशानो धनुर्दिव्यं त्वरमाणोऽगमत्तदा॥ २॥
ततो भीष्मोऽब्रवीद्वाक्यं कुरुमध्ये परंतपः।
चिरदृष्टोऽयमस्माभिर्धर्मज्ञो बांधवप्रियः॥ ३॥
अतीव ज्वलते लक्ष्म्या पाकशासनिरागतः।
एष दुर्योधनं पार्थो मार्गते निकृतिं स्मरन्॥ ४॥
सेनामत्यर्थमालोक्य त्वरते ग्रहणेऽस्य च।
मृगं सिंह इवादातुमीक्षते पाकशासनिः॥ ५॥

### After V. 16

SK adds:—

आचार्याच्च सपुत्राद्वा भारद्वाजान्महारथात्।

### After V. 17

S. cl. adds:—

वैशंपायन उवाच ।

इत्युक्त्वा समरे भीष्मः सेनया सह कौरवः ।
अन्वधावत्तदा पार्थं धार्तराष्ट्रस्य रक्षणे ॥ १ ॥
विक्रोशमात्रं यात्वा तु पार्थो वैराटिमब्रवीत् ।
इषुपातमात्रे सेनायाः स्थापयाश्वानरिन्दम ॥ २ ॥
एतदग्रं गवां दृष्टं मन्दं वाहय सारथे ।
याह्युत्तरेण सेनाया गाश्चैव प्रविभज्य च ॥ ३ ॥
परिक्षिप्य गवां यूथमत्र योत्स्ये सुयोधनम् ।
गच्छन्ति सत्वरा गावः सगोपाः परिमोचय ॥ ४ ॥
तत्र गत्वा पशून्वीर सगोपान्परिमोचय ।
अन्तरेण च सेनायाः प्राङ्मुखो गच्छ चोत्तर ॥ ५ ॥
इमे त्वतिरथाः सर्वे मम वीर्यपराक्रमम् ।
पश्यन्तु कुरवो युद्धे महेन्द्रस्येव दानवाः ॥ ६ ॥

SA, SG omit 5 *a*. After v. 5 ST adds:—

यावदेते निवर्तन्ते कुरवो जयमास्थिताः ।
तथैतानागतान्सर्वाल्लुद्धरिष्यामि सायकैः ॥

### After V. 18a

S. cl. adds:—

निशिताग्रान्छरांस्तीक्ष्णान्मुमोचान्तकसंनिभान् ॥

### After V. 19a

S. cl. adds:—

गाश्चैव न च पश्यन्ति पार्थमुक्तैरजिह्मगैः ।
सा चापि बहुला सेना पार्थबाणाभिपीडिता ॥ १ ॥

### After V. 19

S. cl. adds:—

अर्जुनस्तु तदा हृष्टो दर्शयन्वीर्यमात्मनः ।
पीडयामास सैन्यानि गाण्डीवप्रसृतैः शरैः ॥ १ ॥

### After V. 20

S cl. adds:—

चन्द्रावदातं सामुद्रं कुरुसैन्यभयंकरम् ।

### After V. 22

S. cl. adds:—

वियद्गतानां देवानां मानुषाणां रवेण च ।

### After V. 23

S. cl. adds:—

ततः स समरे शूरो बीभत्सुः शत्रुपूगहा ।
गोपालांश्चोदयामास गावश्चोदयतेति च ॥ १ ॥
उत्तरं चाह बीभत्सुर्हर्षयन्पांडुनंदनः ।
गवामग्रं समीक्षस्व गाश्चैवाशु निवर्तय ॥ २ ॥
यावदेतेनिवर्तन्ते कुरवो जवमास्थिताः ।
याह्युत्तरेण गाश्चैताः सैन्यानां च नृपात्मज ॥
पश्यन्तु कुरवः सर्वे मम वीर्यपराक्रमम् ॥ ३ ॥

वैशंपायन उवाच ।

ते लाभमिव मन्वानाः कुरवोऽर्जुनमाहवे ।
दृष्ट्वायान्तमदूरस्थं क्षिप्रमभ्यपतन्रथैः ॥ ४ ॥
हस्त्यश्वपरिवारेण महताभिविराजता ।
योधैः प्रासासिहस्तैश्च चापबाणोद्यतायुधैः ॥ ५ ॥
तान्यनीकान्यशोभन्त कुरूणामाततायिनाम् ;
संसर्पन्त इवाकाशे विद्युत्वन्तो बलाहकाः ॥ ६ ॥
तानि दृष्ट्वाप्यनीकानि निवर्तितरथानि च ।
पार्थोऽपि वायुवद्घोरं सैन्याग्रं व्यधुनोच्छरैः ॥ ७ ॥

v. 5*b* & 6 omitted in ST. v. 7*a* omitted in ST, SA.

---

## ADHYĀYA 49.

### [ *NORTHERN RECENSION.* ]

### After V. 2a

K adds:—

दुर्योधनस्याभिमुखं प्रयांतं वैराटिरित्यर्जुनमाह दृष्टः ।

उत्तर उवाच ।

पुरं प्रति निवर्तस्व पार्थ प्रहरतां वर ॥
गावस्त्वया जिताश्चेमाः किं युध्यनेति नो वृथा ।
संदिग्धेयें न युद्धयेन पृष्टे चापि बले सति ॥
त्वयैकेन बहूनां हि विग्रहेण तु किं वृथा ।

वैशंपायन उवाच ।

श्रुत्वैतदर्जुनो वाक्यं वैराटेर्भीतवत्तदा ॥
प्रहस्य प्राह तं भूयो मा वै पश्येह कौतुकम् ।
बहूनि दृष्टपूर्वाणि प्राग्युद्धान्युत्तर त्वया ॥
पश्येमपि संग्रामं बहूनामेककेन यत् ।
ततो दुर्योधनं यांतमर्जुनं तरसा तदा ॥
रथाग्रयाः कौरवेंद्रस्य निपेतुः सहसा शिलाः ।

After V. 15b

Edns & MSS add:—

वसुप्रदा वासवतुल्यवीर्याः ।
पराजिता वासवजेन संख्ये ॥

After V. 20

Edns BCDEGHK²MN add:—

तमापतन्तं सहसा किरीटी वैकर्तनं वै तरसाभिपत्य ।
प्रगृह्य वेगं न्यपतज्जवेन नागं गरुत्मानिव चित्रपक्षः ॥ १ ॥
तावुत्तमौ सर्वधनुर्धराणां महाबलौ सर्वसपत्नसाहौ ।
कर्णस्य पार्थस्य निशम्य युद्धं दिदृक्षमाणाः कुरवोऽभितस्थुः ॥ २ ॥
स पाण्डवस्तूर्णमुदीर्णकोपः कृतागसं कर्णमुदीक्ष्य हर्षात् ।
क्षणेन साश्वं सरथं ससारथिमंतर्दधे घोरशरौघवृष्ट्या ॥ ३ ॥
ततः सुविद्धाः सरथाः सनागा योधा विनेदुर्भरतर्षभाणाम् ।
अंतर्हिता भीष्ममुखाः सहाश्वाः किरीटिना कीर्णरथाः पृषत्कैः ॥ ४ ॥
स चापि तानर्जुनबाहुमुक्तान्शरान्शरौघैः प्रतिहत्य वीरः ।
तस्थौ महात्मा सधनुः सबाणः सविस्फुलिंगोऽग्निरिवाशु कर्णः ॥ ५ ॥
ततस्त्वभूद्वै तलतालशब्दः सशंखभेरीपणवप्रणादः ।
प्रक्ष्वेडितज्यातलनिस्वनं तं वैकर्तनं पूजयतां कुरूणां ॥ ६ ॥
उद्धूतलांगूलमहापताकध्वजोत्तमांसाकुलभीषणांतम् ।
गाण्डीवनिर्ह्रादकृतप्रणादं किरीटिनं प्रेक्ष्य ननाद कर्णः ॥ ७ ॥
स चापि वैकर्तनमर्दयित्वा साश्वं ससूतं सरथं पृषत्कैः ।
तमाववर्ष प्रसभं किरीटी पितामहं द्रोणकृपौ च दृष्ट्वा ॥ ८ ॥
स चापि पार्थं बहुभिः पृषत्कैर्वैकर्तनो मेघ इवाभ्यवर्षत् ।
तथैव कर्णं च किरीटमाली संछादयामास शितैः पृषत्कैः ॥ ९ ॥
तयोः सुतीक्ष्णान्सृजतोः शरौघान्महाशरौघास्त्रविवर्द्धने रणे ।
रथे विलग्नाविव चंद्रसूर्यौ घनान्तरेणानुददर्श लोकः ॥ १० ॥

अथाशुकारी चतुरो हयांश्च विव्याध कर्णो निशितैः किरीटिनः।
त्रिभिश्च यंतारममृष्यमाणो विव्याध तूर्णं त्रिभिरस्य केतुम्॥ ११॥
ततोभिविद्धः समरावमर्दी प्रबोधितः सिंह इव प्रसुप्तः।
गाण्डीवधन्वा ऋषभः कुरूणामजिह्मगैः कर्णमियाय जिष्णुः॥ १२॥
शरास्त्रवृष्ट्या निहतो महात्मा प्रादुश्चकारातिमनुष्यकर्म।
प्राच्छादयत्कर्णरथं पृषत्कैर्लोकानिमान्सूर्य इवांशुजालैः॥ १३॥

DN add before v. 6, above :—

अंतर्दधे पार्थमिषुप्रवर्षैर्भृशं तदा चुक्रुशुराशु योधाः।

[ *SOUTHERN RECENSION.* ]

**Before V. 3**

S. cl. adds:—

सकर्णं कर्णिनाविध्य पीतेन निशितेन च।
वासविर्विपतां मध्ये विव्याध परमेषुणा॥ १॥
स कर्णं सतनुत्राणं निर्भिद्य निशितः शरः।
अगच्छद्दारयन्भूमिं चोदितो दृढधन्वना॥ २॥
ततोऽस्य वाहान्व्यहनच्चतुर्भिश्चतुरः क्षुरैः।
सारथेश्च शिरः कायादपाहरदरिंदमः।
अर्धचन्द्रेण चिच्छेद चापं तस्य करे स्थितम्॥ ३॥
तस्मिन्विद्धे महाभागे कर्णे सर्वास्त्रपारगे।
हताश्वसूते विरथे ततोऽनीकमभज्यत॥ ४॥

वैशंपायन उवाच।

तत्प्रभग्नं बलं सर्वं विपुलौघस्वनं तथा।
भीष्ममासाद्य संतस्थौ वेलामिव महोदधिः॥ ५॥
तानि सर्वाणि गाङ्गेयः समाश्वास्य परंतपः।
ततो व्यूह्य महाबाहुः समरेष्वपराजितः॥ ६॥
रथनागाश्वकलिलं युयुजे युद्धकोविदः।
अभेद्यं परसैन्यानां शूरैरपि समीक्षितम्॥ ७॥
आचार्यदुर्योधनसूतपुत्रैः कृपेण भीष्मेण च पालितानि।
अवध्यकल्पानि दुरासदानि रथाश्वमातङ्गसमाकुलानि च।

v. 1 omitted in ST, SA, SG. v. 3 omitted in ST,

**After V. 3**

S. cl. adds:—

सुसंगृहीतैरथ रश्मिभिस्त्वं हयान्नियम्य प्रसमीक्ष्य यत्तः॥
संप्रेषयाशु प्रतिवीरमेनं वैकर्तनं योधयितुं वृणोमि॥ १॥

यां हस्तिकक्ष्यां बहुधा विचित्रां स्तम्भे रथे पश्यसि दर्शनीयाम्।
विवर्तमानां ज्वलनप्रकाशां वैकर्तनस्यैतदनीकमग्र्यम् ॥२॥

SA, ST add अर्जुन उवाच । before v. 1.

### After V. 5a

SA[2] adds:—

तदद्य युद्धं कुरुवीरमध्ये करोमि तं याहि तथा प्रवृत्तः।

### After V. 5

S. cl. adds:—

तं पातयिष्यामि रथस्य मध्ये सहस्रनेत्रोऽशनिनेव वृत्रं।

### After V. 6

S. cl. adds:—

तमापतन्तं परमेण तेजसा समीक्ष्य वैकर्तनमभ्यरक्षन्।
अभ्यद्रवंस्ते रथवीरवृन्दा व्याघ्रेण चाक्रान्तमिवर्षभं रणे ॥ १ ॥
चित्राङ्गदश्चित्ररथश्च वीरः संग्रामजिद्दुःसहचित्रसेनौ।
विविंशतिर्दुर्मुखदुर्जयौ च विकर्णदुःशासनसौबलाश्च।
शोणो निषधश्च तमन्वयुस्ते वैकर्तनं शीघ्रतरं युवानः ॥ २ ॥
पुत्रा ययुस्ते सह सोदराश्च वैकर्तनं पार्थगतं समीक्ष्य।
प्रगृह्य चापानि महाबला रणे धनंजयं पर्यकिरञ्छरार्चिभिः ॥ ३ ॥
तेषां धनुर्ज्याकृतनैकतंत्रीं प्रासोपवीणां शरसङ्घकोणाम्।
कराग्रयन्त्रां स्थिरचापदण्डां वीणामुपावादयदाशु पार्थः ॥ ४ ॥

### After. V 15b

S. cl. adds:—

वसुप्रदा वासवतुल्यवीर्याः।
पराजिता वासवजेन संख्ये ॥

### After V. 20

S. cl. adds:—

तमापतन्तं समरे किरीटी वैकर्तनं सर्वसमृद्धतेजाः।
प्रच्छादयामास महाधनुष्मान्प्रयपेषयच्छ्रुगणाश्च वीरः ॥ १ ॥
निहत्य कर्णस्य ततः किरीटी पुरश्चरांश्चापि च पृष्ठगोपान्।
समीपमभ्यागमदप्रमेयो वितत्य पक्षौ गरुडो यथोरगम् ॥ २ ॥
तावुत्तमौ सर्वधनुर्धराणां महाबलौ सर्वसपत्नसाहौ।
कर्णं च पार्थं च निशम्य युद्धे दिदृक्षमाणाः कुरवोऽप्यतस्थुः ॥ ३ ॥
तं पाण्डवः स्पष्टमुदीर्णकोपं कृतागसं कर्णमुदीक्ष्य कोपात्।
क्षणेन साश्वं सरथं ससूतमन्तर्दधे मेघ इवातिवृष्ट्या ॥ ४ ॥

ततः सयुग्याः सरथाः सनागा योधा विनेदुर्भरतर्षभाणाम् ।
अन्तर्हितं भीष्ममुखाः समीक्ष्य किरीटिना कर्णरथं पृषत्कैः ॥ ५ ॥
स चापि तानर्जुनबाहुयुक्तान्छरान्छरौघैः प्रतिहत्य तूर्णम् ।
बभौ महात्मा सधनुः सबाणः सविस्फुलिंगोऽग्निरिवाथ कर्ण ॥ ६ ॥
ततस्तु जज्ञे करतालघोषः सशङ्खभेरीपणवाकुलस्तु ।
प्रक्ष्वेलितास्फोटितसिंहनादैर्वैकर्तनं पूजयतां कुरूणाम् ॥ ७ ॥
आधूतलाङ्गुलमहापताकं रथोत्तमं श्रेष्ठतमं कुरूणाम् ।
ततः स गाण्डीवकृतप्रणादं किरीटिनं प्रेक्ष्य ननाद कर्णः ॥ ८ ॥
पार्थोपि वैकर्तनमर्दयित्वा साश्वं सकेतुं सरथं ससूतम् ।
ननाद हर्षात्सहसा किरीटी पितामहं द्रोणकृपौ च दृष्ट्वा ॥ ९ ॥
सिषेच पार्थं बहुभिः शरौघैर्वैकर्तनः संयतितीक्ष्णवेगैः ।
वैकर्तनश्चापि किरीटमाली प्रच्छादयामास शितैः शरौघैः ॥ १० ॥
तयोरमोघान्सृजतोः शरौघानत्रत्रयोरास महान्विमर्दः ।
राहुप्रमुक्ताविव चन्द्रसूर्यौ क्षणान्तरेणानुददर्श लोकः ॥ ११ ॥
हतास्तु पार्थेन रथप्रवीरा भूमौ युवानः सुषुपुः सुकेशाः ।
सुवर्णलोहायसवर्मगात्रा वृक्षा यथा हेमवते निकृत्ताः ॥ १२ ॥
तथा स शत्रून्समरे विनिघ्नन्गाण्डीवधन्वा व्यधमत्सपत्नान् ।
चचार सङ्ख्ये विदिशो दिशश्च दहन्निवाग्निर्वनमातपान्ते ॥ १३ ॥
सुशीर्णपर्णानि यथा वसन्ते विधूनयन्वायुरिवाल्पसारान् ।
तथा सपत्नान्विधमन्किरीटी चचार सङ्ख्येऽतिरथो रथेन ॥ १४ ॥
शत्रूनिवेन्द्रः समरे किरीटी विद्रावयंस्तद्रथवीरवृन्दम् ।
प्राच्छादयच्चार्किरीटमाली वरेषुभिः शत्रुगणाननेकान् ॥ १५ ॥

vv 14, 15 omitted in SG.

**Before V. 21**

S. cl. adds:—

अदीरत्तावृस्य मही समग्रा पार्थेषुमार्गे निहता द्विपेन्द्राः ।
हिरण्यकक्ष्याः शरजालचित्रा यथा नगाः पावकजालनद्धाः ॥ १ ॥
तं शत्रुसेनाङ्गनिबर्हणानि कर्माणि कुर्वाणममानुषाणि ।
वैकर्तनः पूर्वममृष्यमाण समार्पयल्लक्ष्यमिवाशु पार्थम् ॥ २ ॥
ततश्चतुर्भिस्तुरगान्विकृष्य विव्याध कर्णोऽथ धनंजयस्य ।
षड्भिश्च सूतं दशभिर्हयाश्च षष्ट्या च पार्थं त्रिभिरस्य केतुम् ॥ ३ ॥
सविस्फुलिङ्गोज्ज्वलभीमघोषः कोपेन्धनः केतुशिखः शरार्चिः ।
कर्णाग्निरस्त्रानिलभीमवातो बभौ दिधक्षन्निव पार्थकक्षम् ॥ ४ ॥
स्वनेमिशङ्खस्वनभीमघोषश्चलत्पताकोज्ज्वलभीमविद्युत् ।
पार्थाम्बुदः शस्त्रशराम्बुधारः कर्णानलं संशमयांचकार ॥ ५ ॥

तेनातिविद्धः समरे किरीटी प्रबोधितः सिंह इव प्रसुप्तः ।
गाण्डीवधन्वा प्रवरः कुरूणां प्रतत्वरे कर्णवधाय जिष्णुः ॥ ६ ॥
स ब्राह्ममस्त्रं समरे किरीटी प्रादुश्चकाराद्भुतवीर्यकर्मा ।
सन्तापयन्कर्णरथं शरौघैर्लोकानिमान्सूर्य इवांशुमाली ॥ ७ ॥

---

## ADHYĀYA 50.

[ *NORTHERN RECENSION.* ]

### After V. 2a

Edns CDGHN add:—

अधारयत वेगं स वेलेव तु महोदधेः ।
ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ॥ १ ॥
दिव्यमस्त्रं प्रकुर्वाणः प्रत्यायाद्रथसत्तमः ।
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीं ॥ २ ॥
तथा गांडीवनिर्मुक्तैः शरैः पार्थो दिशो दश ।
न रथानां न चाश्वानां न गजानां न वर्मणाम् ॥ ३ ॥
अनिविद्धं शितैर्बाणैरासीत् द्व्यंगुलमंतरम् ।

Edns DGH continue :—

दिव्ययोगाश्च पार्थस्य हयानामुत्तरस्य च ॥ ४ ॥
शिक्षा शिल्पोपपन्नत्वादस्त्राणां च परिक्रमात् ।
वीर्यवत्त्वं द्रुतं चाग्र्यं दृष्ट्वा जिष्णोरपूजयन् ॥ ५ ॥
कालाग्निमिव बीभत्सुं निर्दहंतमिव प्रजाः ।
नारयः प्रेक्षितुं शेकुर्ज्वलंतमिव पावकम् ॥ ६ ॥
तानि ग्रस्तान्यनीकानि रेजुरर्जुनमार्गणैः ।
शैलं प्रति बलाभ्राणि व्याप्तानीवार्करश्मिभिः ॥ ७ ॥
अशोकानां वनानीव च्छन्नानि बहुशः शुभैः ।
रेजुः पार्थशरैस्तत्र तदा सैन्यानि भारत ॥ ८ ॥

Edns GH continue:—

स्रजोर्जुनशरैः शीर्णं शुष्यत्पुष्पं हिरण्मयम् ।
छत्राणि च पताकाश्च खे दधार सदागतिः ॥ ९ ॥
स्वबलत्रासनात् त्रस्ताः परिपेतुर्दिशो दश ।
रथाङ्गदेशानादाय पार्थच्छिन्नयुगा हयाः ॥ १० ॥
कर्णकक्षविषाणेषु अंतरोष्ठेषु चैव ह ।
मर्मस्वंगेषु चाहत्य पातयत्समरे गजान् ॥ ११ ॥
कौरवाग्र्यगजानां तु शरीरैर्गतचेतसाम् ।
क्षणेन संवृता भूमिर्मेघैरिव नभस्तलम् ॥ १२ ॥

युगान्तसमये सर्वं यथा स्थावरजंगमम् ।
कालक्षयमशेषेण दहत्यग्रशिखः शिखी ॥
तद्वत्पार्थो महाराज ददाह समरे रिपून् ॥ १३ ॥
ततः सर्वास्त्रतेजोभिर्धनुषो निःस्वनेन च ।
शब्देनामानुषाणां च भूतानां ध्वजवासिनाम् ॥ १४ ॥
भैरवं शब्दमत्यर्थं वानरस्य च कुर्वतः ।
दैत्यारिपाञ्चच बीभत्सुः तस्मिन्दौर्योधने बले ॥
भयमुत्पादयामास बलवानरिमर्दनः ॥ १५ ॥
रथशक्तिममित्राणां प्रागेवनिपतद्भुवि ।
सोपयात्सहसापश्चात्साहसाच्चाभ्युपेयिवान् ॥ १६ ॥
शरघातैः सुतीक्ष्णाग्रैः समादिष्टैः खगैरिव ।
अर्जुनस्तु खमावव्रे लोहितप्राशनैः खगैः ॥ १७ ॥
अत्र मध्ये यथार्कस्य रश्मयस्तिग्मतेजसः ।
दिशासु च तथा राजन्नसंख्याताः शरास्तदा ॥ १८ ॥
सकृदेवानतं शक्रुरथमभ्यसितुं परे ।
अक्षय्यः पुनरश्वैस्तु रथात्सोऽतिप्रपादयेत् ॥ १९ ॥
ते शरा द्विद्शरीरेषु यथैव न ससज्जिरे ।
छिद्दर्नीकेषु बीभत्सोर्न ससज्जे रथस्तदा ॥ २० ॥
स तद्विक्षोभयामास ह्यरातिबलमंजसा ।
अनंतभोगो भुजगः क्रीडन्निव महार्णवे ॥ २१ ॥
अस्यतो नित्यमत्यर्थं सर्वमेवातिगस्तथा ।
अश्रुतः श्रूयते भूतैर्धनुर्घोषः किरीटिनः ॥ २२ ॥
संततास्तत्र मातंगा बाणैरल्पांतरांतरे ।
संवृतास्तेन दृश्यंते मेघा इव गभस्तिभिः ॥ २३ ॥
दिशोनुभ्रमतः सर्वाः सव्यदक्षिणमस्यतः ।
सततं दृश्यते युद्धे सायकासनमण्डलम् ॥ २४ ॥
पतेत्यरूपेषु यथा चक्षूंषि न कदाचन ।
नालक्ष्येषु शराः पेतुस्तथा गांडीवधन्वनः ॥ २५ ॥
मार्गो गजसहस्रस्य युगपद्गच्छतो वने ।
यथा भवेत्तथा जज्ञे रथमार्गः किरीटिनः ॥ २६ ॥
नूनं पार्थजयैषित्वाच्छक्रः सर्वामरैः सह ।
हंत्यस्मानित्यमन्यंत पार्थेन निहताः परे ॥ २७ ॥
घ्नंतमत्यर्थमहितान् विजयं तत्र मेनिरे ।
कालमर्जुनरूपेण संहरंतमिव प्रजाः ॥ २८ ॥

कुरुसेनाशरीराणि पार्थेनैवाहतान्यपि ।
सेदुः पार्थहतानीव पार्थकर्मानुशासनात् ॥ २९ ॥
ओषधीनां शिरांसीव द्विपच्छीर्षाणि सोन्वयात् ।
अवनेशुः कुरूणां हि वीर्याण्यर्जुनजाद्भयात् ॥ ३० ॥
अर्जुनानिलभिन्नानि वनान्यर्जुनविद्विषाम् ।
चक्रुर्लोहितधाराभिर्धरणीं लोहितांतराम् ॥ ३१ ॥
लोहितेन समायुक्तैः पांसुभिः पवनोद्धतैः ।
बभूवुर्लोहितास्तत्र भृशमादित्यरश्मयः ॥ ३२ ॥
सार्कं खं तत्क्षणेनासीत्संध्यायामिव लोहितम् ।
अप्यस्तं प्राप्य सूर्योपि निवर्तेत न पाण्डवः ॥ ३३ ॥
तान्सर्वान्समरे शूरः पौरुषे समवस्थितान् ।
दिव्यैरस्त्रैरचिंत्यात्मा सर्वानार्च्छद् धनुर्धरान् ॥ ३४ ॥
स तु द्रोणं त्रिसप्तत्या क्षुरप्राणां समार्पयत् ।
दुःसहं दशभिर्बाणैः द्रौणिमष्टाभिरेव च ॥ ३५ ॥
दुःशासनं द्वादशभिः कृपं शारद्वतं त्रिभिः ।
भीष्मं शान्तनवं षष्ट्या राजानं च शतेन ह ॥ ३६ ॥
कर्णं च कर्णिना कर्णे विव्याध परवीरहा ।
तस्मिन्विद्धे महेष्वासे कर्णे सर्वास्त्रकोविदे ॥ ३७ ॥
हताश्वसूते विरथे ततोनीकमभज्यत ।
तत् प्रभग्नं बलं दृष्ट्वा पार्थमाजिस्थितं पुनः ॥ ३८ ॥

### After V. 7

Edns and MSS add:—

अत्रैव चावरोहेयमेष धर्मः सनातनः ।

### [ *SOUTHERN RECENSION.* ]

S. cl. reads the following Adh. ( SK 56 and 57 ) corresponding with our Adh. 50 agreeing in sense but differing in text:—

ST begins:—

दृष्ट्वा निवर्तिता गावः पार्थेनाक्लिष्टकर्मणा ।
प्रहस्य नरसिंहेन जिष्णुना तु महीपते ॥ १ ॥
महामना मन्दबुद्धिर्निश्वसन् धृतराष्ट्रज ।
उवाच सुमहाप्राज्ञो राजा दुर्योधनो वचः ॥ २ ॥
तं विमृश्यार्जुनं वीरं विराटनगरोषितम् ।
तेनैव मात्स्यमत्स्यानां प्रगृहीम धनं बहु ॥ ३ ॥

सर्व एव न गच्छामो विसृज्य च धनंजयम्।
अयशो नोभिवर्तेत लोकयोरुभयोरपि ॥ ४ ॥
न युद्धादधिकः कश्चित्प्राप्ते ह्यभिभवे महान्।
तस्मात्पार्थेन संग्रामं कुरुध्वममरप्रियाः ॥ ५ ॥

S. cl. has:—

[ SK Adh. 56. ]

वैशंपायन उवाच ।

ततस्त्रीणि सहस्राणि रथानां च धनुष्मताम्।
घोराणि कुरुवीराणां पर्यकीर्यन्त भारत ॥ १ ॥

( ST, SG add:—

वर्मिता वाजिनो तिष्ठन्समारूढाः प्रहारिणः। )
कर्णो रथसहस्रेण प्रत्यगृह्णाद्धनंजयम्।
भीष्मः शान्तनवो धीमान् सहस्रेण पुरस्कृतः ॥ २ ॥
तथा रथसहस्रेण भ्रातृभिः परिवारितः।
पश्चाद्दुर्योधनोऽतिष्ठद्यशसा च श्रिया ज्वलन् ॥ ३ ॥
अतिष्ठन्नवकाशेषु पादाताः सह वाजिभिः।
भीमरूपाश्च मातंगास्तोमरांकुशचोदिताः ॥ ४ ॥

( ST adds:—

तान्यनीकान्यदृश्यन्त कुरूणामाततायिनाम्।
विसर्पन्त इवोष्णान्ते विद्युद्वातो वलाहकाः ॥ १ ॥)
तानि दृष्ट्वा ह्यनीकानि विततानि महात्मनाम्।
वैराटिमुत्तरं तं तु प्रत्यभाषत पाण्डवः ॥ ५ ॥

( ST adds:—

ध्वजे कमण्डलुर्यस्य शातकुम्भमयः शुभः।)
जाम्बूनदमयी वेदी ध्वजाग्रे यस्य दृश्यते।
शोणाश्वाश्वा रथे युक्ता द्रोण एष प्रकाशते ॥ ६ ॥
आचार्यो निपुणो धीमान् ब्रह्मविच्छूरसत्तमः।
आहवे चाप्रतिद्वन्द्वो दूरपाती महारथः ॥ ७ ॥
सुप्रसन्नो महावीरः कुरुष्वैनं प्रदक्षिणम्।
अत्रैव चाविरोधेन एष धर्मः सनातनः ॥ ८ ॥
यदि मे प्रहरेद्द्रोणः शरीरे मे प्रहृष्यतः।
ततोऽस्मिन् प्रहरिष्यामि नान्यथा बुद्धिरस्ति मे ॥ ९ ॥

[ cf. our vv. 7&8 ]

भारताचार्यमुख्येन ब्राह्मणेन महात्मना।
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ १० ॥
ध्वजाग्रे सिंहलाङ्गूलो दिक्षु सर्वासु शोभते।
भारताचार्यपुत्रस्तु सोऽश्वत्थामा विराजते ॥ ११ ॥

ध्वजाग्रं दृश्यते यत्र बालसूर्यसमप्रभम् ।
दुर्जयः सर्वसैन्यानां देवैरपि सवासवैः ॥
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ १२ ॥

ध्वजाग्रे गोवृषो यस्य काञ्चनोऽभिविराजते ।
आचार्यवरमुख्यस्तु कृप एष महारथः ॥ १३ ॥
द्रोणेन च समो वीर्ये पितुर्मे परमः सखा ।
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ १४ ॥
यस्य काञ्चनकम्बूभिर्हस्तिकक्ष्या परिष्कृतः ।
ध्वजः प्रकाशते दूराद्रथे विद्युद्गणोपमः ॥ १५ ॥
एष वैकर्तनः कर्णः प्रतिमानं धनुष्मताम् ।
दृढवैरी सदास्माकं नित्यं कटुकभाषणः ॥ १६ ॥
यस्याश्रयबलादेव धार्त्तराष्ट्रः ससौबलः ।
अस्मान्निरस्य राज्याच्च पुनरद्यापि योत्स्यति ॥ १७ ॥
एष वै स्पर्धते नित्यं मया सह सुदुर्जयः ।
जामदग्न्यस्य रामस्य शिष्यो ह्येष महारथः ॥ १८ ॥
सर्वास्त्रकुशलः कर्णः सर्वशस्त्रभृतां वरः ।
युद्धेऽप्रतिमवीर्यश्च दृढवेधी पराक्रमी ॥ १९ ॥
अद्याहं युद्धमेतेन करिष्ये सूतबन्धुना ।
द्रष्टा त्वमावयोर्युद्धं बलिवासवयोरिव ॥ २० ॥
महारथेन शूरेण सूतपुत्रेण धन्विना ।
तेन मे युध्यमानस्य शीघ्रं वाहय सारथे ॥ २१ ॥
यस्य चैव रथोपस्थे नागो मणिमयो ध्वजः ।
एष दुर्योधनस्तत्र कौरवो यशसा वृतः ॥ २२ ॥
लब्धलक्षो दृढं वेधी लघुहस्तः प्रतापवान् ।
तेन मे युध्यमानस्य शीघ्रं वाहय सारथे ॥ २३ ॥

यस्तु श्वेतावदातेन पंचतालेन केतुना ।
वैडूर्यमयदण्डेन तालवृक्षेण राजते ॥ २४ ॥

हस्तावापी बृहद्धन्वा सेनां तिष्ठति हर्षयन् ।
रामेण जामदग्न्येन द्वैरथेनाजितः पुरा ॥ २५ ॥

शीघ्रश्च लघुवेधी च लघुहस्तः प्रतापवान् ।
एष शान्तनवो भीष्मः सर्वेषां नः पितामहः ॥ २६ ॥

ककुदः सर्वसैन्यानां सर्वशस्त्रभृतां वरः ।
जयश्रियायवद्धस्तु सुयोधनवशानुगः ॥
पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत् ॥ २७ ॥

इत्येतांस्त्वरितः पार्थः कथयित्वा तु चोत्तरे।
रूपतश्चिन्हतश्चैव शुद्धाय त्वरते पुनः ॥ २८ ॥

SA[1] omits vv. 13, 14 above.

ST further has:— ( Cf our v. 2 *b* & ff )

लोहिताश्वं महाबाहुं सर्वशस्त्रभृतांवरम् ।
नीलं पताकमुच्छ्रित्य रथे तिष्ठन्तमुत्तर॥
नृपस्यैतदनीकाग्रं प्रापयस्वैतदेव माम् ।
एतत्ते दर्शयिष्यामि शीघ्रास्त्रं दृढधन्विनम् ॥
लब्धलक्ष्यो धनुर्वेदी लघुहस्तः प्रतापवान्।

S. cl. has:—

[ SK Adh. 57 ]

वैशंपायन उवाच ।

अश्वत्थामा ततस्तत्र कर्णं संप्रेक्ष्य वीर्यवान्।
उवाच स्मयमानोऽसौ सूतपुत्रमरिंदमम् ॥ १ ॥
कर्ण यस्त्वं सभामध्ये बह्वबद्धं विकत्थसे।
न मे युधि समोस्तीति तदिदं प्रत्युपस्थितम् ॥ २ ॥
एषोऽन्तक इव क्रुद्धः सर्वभूतावमर्दनः।
संग्रामशिरसो मध्ये जृम्भते केसरी यथा ॥ ३ ॥
शूरोसि यदि संग्रामे दर्शयस्व सभां विना।
यद्यशक्तोसि संग्रामे पार्थेनाद्भुतकर्मणा ॥ ४ ॥
पुनरेव सभां गत्वा धार्तराष्ट्रेण धीमता।
मातुलं परिगृह्याशु मंत्रयस्व यथासुखम् ॥ ५ ॥

SA[2] omits from दर्शयस्व to मन्त्रयस्व।

वैशंपायन उवाच।

एवमुक्तस्तथा कर्णः क्रोधादुद्वृत्य लोचने।
द्रोणपुत्रमिदं वाक्यमुवाच कुरुसन्निधौ ॥ ६ ॥
नाहं बिभेमि बीभत्सोर्न कृष्णाद्देवकीसुतात्।
पाण्डवेभ्योपि सर्वेभ्यः क्षत्रधर्ममनुव्रतः ॥ ७ ॥
सत्वाधिकानां पुंसां तु धनुर्वेदोपजीविनाम्।
गर्जतां जायते दर्पः स्वरश्च न विषीदति ॥ ८ ॥
पश्यत्वाचार्यपुत्रो मामर्जुनेनातिरंहसा।
युध्यमानं सुसंयुक्तं जयो वै मय्यवस्थितः ॥ ९ ॥

वैशंपायन उवाच ।

ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः।
दिव्यमस्त्रं विकुर्वाणः प्रत्ययाद्रथिसत्तमः ॥ १० ॥
महात्मानं मन्दबुद्धिर्निश्वसन्धृतराष्ट्रजः।
उवाच स महाराज राजा दुर्योधनस्तदा ॥ ११ ॥

न विद्मो ह्यर्जुनं तत्र वसन्तं मत्स्यवेश्मनि।
तेनेदं कर्ण मत्स्यानामग्रहीष्म धनं बहु ॥ १२ ॥
एवं चेत्तर्हि गच्छामो विसृजन्तो धनं बहु।
अयशो नातिवर्तेत लोकयोरुभयोरपि ॥ १३ ॥
किं च युद्धात्परं नास्ति क्षत्रियाणां सुखावहम्।
तस्मात्पार्थेन संग्रामं कुर्महे न पलायनम् ॥ १४ ॥
एतावदुक्त्वा राजा वै ह्यभियानमियेष सः।
तथा दशसहस्राणि वीराणां हि धनुष्मताम् ॥ १५ ॥
अभ्यद्रवंस्तदा पार्थं शलभा इव पावकम्।
वर्मिता वाजिनस्तत्र संभृताश्च पदातिभिः ॥ १६ ॥
भीमरूपाश्च मातङ्गास्तोमराङ्कुशपाणिभिः।
अधिष्ठिताः सुसंयत्तैर्हस्तिशिक्षाविशारदैः ॥ १७ ॥
अभ्यद्रवन्सुसंक्रुद्धाश्चापहस्तोद्यतायुधाः।
एवं चैनं रथोदग्रास्त्वरिताः पर्यवारयन् ॥ १८ ॥
द्रोणो भीष्मश्च कर्णश्च कुरुराजश्च वीर्यवान्।
अश्वत्थामा महाबाहुर्धनुर्वेदपरायणः ॥ १९ ॥
इषूंश्च सम्यगस्यन्तो जीमूता इव वार्षिकाः।
ते लाभमिव मन्वानाः प्रत्यगृह्णन्धनंजयम् ॥ २० ॥
शरौघानभिवर्षन्तो नादयन्तो दिशो दश।
ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ॥ २१ ॥
दिव्यमस्त्रं प्रकुर्वाणः प्रत्ययाद्रथिसत्तमान्।
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ॥ २२ ॥
तथा गाण्डीवनिर्मुक्तैः शरैराच्छादयद्दिशः।
न रथानां न चाश्वानां न ध्वजानां न वर्मिणाम् ॥ २३ ॥
आतिविद्धैः शितैर्बाणैरासीद्व्यङ्गुलिरन्तरम्।
दैवयोगाद्धि पार्थस्य हयानामुत्तरस्य च ॥ २४ ॥
शिक्षाबलोपपन्नत्वादस्त्राणां वै परिक्रमात्।
ध्वजगाण्डीवयोश्चापि दैव्या शक्त्या च मायया ॥ २५ ॥
इतस्ततश्च संयाने दूरे वाप्यथवाऽन्तिके।
दुर्गे विषमजाते वा स्थले निम्ने तथा क्षितौ ॥ २६ ॥
न च शक्येद्गतिस्तस्य रथस्य मनसो यथा।
समरेषु तु विद्वांसस्तस्य तांस्तान्परिक्रमान् ॥ २७ ॥
वीर्यमत्यद्भुतं दृष्ट्वा तथा पार्थस्य तद्बलम्।
मेनुरेवं परे भीताः पराङ्मुखरथा अपि ॥ २८ ॥

कालाग्निमिव बीभत्सुं निर्दहन्तमिव प्रजाः ।
नारयः प्रेक्षितुं शेकुर्ज्वलन्तमिव पावकम् ॥ २९ ॥
तानि भिन्नान्यनीकानि रेजुरर्जुनमार्गणैः ।
तिग्मांशोश्च घनाभ्राणि व्यात्तानीव गभस्तिभिः ॥ ३० ॥
अशोकानां वनानीव संचितैः कुसुमैः द्रुमैः ।
पार्थः संरंजयामास रुधिरेणाकुलं बलम् ॥ ३१ ॥
सहस्रशोऽर्जुनशरैश्छिन्नान्युच्चावचानि च ।
छत्राणि च पताकाश्च खेऽभ्युवाह सदागतिः॥ ३२ ॥
ये ह्यर्जुनबलत्रस्ता परिपेतुर्दिशो दश ।
रथात्त्वं देशमुत्सृज्य पार्थच्छिन्नयुगा हयाः ॥ ३३ ॥
निकृत्तपूर्वचरणास्ते निपेतुः शितैः शरैः ।
शिरोभिः प्रथमं जग्मुर्मेदिनीं जघनैर्हयाः ॥ ३४ ॥
चक्षुर्नासाविषाणेषु दन्तवेष्टेषु च द्विपान् ।
ममर्स्वन्येषु चाहत्य तथा निघ्नन्गजोत्तमाः ॥ ३५ ॥
कौरवाणां गजानां च शरीरैर्गतचेतसाम् ।
क्षणेन संवृता भूमिर्मेघैरिव नभस्थलम् ॥ ३६ ॥
अस्त्रैर्दिव्यैर्महाबाहुरर्जुनः प्रहसन्निव ।
वडवामुखसंभूतः कालाग्निरिव संवृतः ॥ ३७ ॥
यथा युगान्तसमये सर्वं स्थावरजंगमम् ।
कालपक्वमशेषेण धक्ष्येदुग्रशिखः शिखी ॥ ३८ ॥
तद्वत्पार्थोऽस्त्रतेजोभिर्धनुषो निस्वनेन च ।
दैवाद्वीर्याच्च बीभत्सुस्तस्मिन्दोर्योधने बले ॥ ३९ ॥
रणे शक्तिममित्राणां प्रणीयोपनिनाय सः ।
चेष्टां प्रायेण भूतानां रात्रिः प्राणभृतामिव ॥ ४० ॥
सोऽतीयात्सहसा शत्रून्सहसा तेऽभिपेदिरे ।
शीघ्राद्दूरं दृढामोघमस्त्रमस्यातिमानुषम् ॥ ४१ ॥
दृष्ट्वा ते कौरवा भीता अतिमानुषविक्रमम् ।
खगपत्राभिसंवीतैः खाविष्टैः खगमैरिव ॥ ४२ ॥
अर्जुनस्य खमावव्रे लोहितप्राणपैः खगैः ।
अर्जुनेन विनिर्मुक्ताः शरा गाण्डीवधन्वना ॥ ४३ ॥
तार्क्ष्यवेगा इवाकाशे ससञ्जुः परमर्मसु ।
वर्माणि सारथींश्चैव हेमजालानि वाजिनाम् ॥ ४४ ॥
किरीटं सूर्यसंकाशं वैयाघ्रमथ चर्म च ।
तत सर्वाणि गात्राणि रथस्य द्विषतां शरैः ॥ ४५ ॥

नीहारेणेव भूतानि छन्नानीह चकाशिरे ।
सकृदेव न तं शेकुः कथमभ्यसितुं परे ॥ ४६ ॥
अनभ्यस्तः पुनस्तैर्हि रथः सोभिपपात तान् ।
तच्छरा द्विट्शरीरेषु यथा च न ससञ्जिरे ॥ ४७ ॥
द्विषानीकेषु बीभत्सोर्न ससञ्ज रथस्तथा ।
स तद्धि क्षोभयामास विगाह्याखिलं रथी ॥ ४८ ॥
अनन्तवेगो भुजगः क्रीडन्निव महार्णवे ।
अस्यतो नित्यमत्यर्थं सर्वघोषाधिकस्तथा ॥ ४९ ॥
संनादः श्रूयते भूतैर्धनुषश्च किरीटिनः ।
संछिन्नास्तत्र मातंगा बाणैरल्पान्तरान्तरैः ॥ ५० ॥
संस्यूतास्तत्र दृश्यन्ते मेघा इव गभस्तिभिः ।
दिशोऽनुभ्रमतः सर्वा सव्यदक्षिणमस्यतः ॥ ५१ ॥
सततं दृश्यते युद्धे सायकासनमण्डलम् ।
पतन्त्यरूपेषु यथा चक्षूंषि न कदाचन ॥ ५२ ॥
नालक्ष्येषु शराः पेतुस्तस्य गाण्डीवधन्वनः ।
महागजसहस्रस्य युगपन्मृद्नतो वनम् ॥ ५३ ॥
कौन्तेयरथमार्गस्तु रणे घोरतरोऽभवत् ।
नूनं पार्थजयैषित्वाच्छक्रः सर्वामरैः सह ॥ ५४ ॥
हन्त्यस्मानिति मन्यन्ते पार्थेनैवार्दिताः परे ।
घ्नन्तमत्यर्थमहितान्सव्यसाचिनमाहवे ॥ ५५ ॥
कालमर्जुनरूपेण ग्रसन्तमिव च प्रजाः ।
कुरुसेनाशरीराणि पार्थेनानाहतान्यपि ॥ ५६ ॥
पेतुः पार्थहतानीव पार्थकर्मानुदर्शनात् ।
ओषधीनां शिरांसीव कालपक्तिसमन्वयात् ॥ ५७ ॥
अवनेमुः कुरूणां हि शिरांस्यर्जुनजाद्भयात् ।
चकार चार्जुनः क्रोधाद्विमुखान्हषितानपि ॥ ५८ ॥
अर्जुनेनापि भिन्नानि बलाग्राणि पुनः क्वचित् ।
चक्रुर्लोहितधाराभिर्धरणीं लोहितोत्तराम् ॥ ५९ ॥
लोहितेनापि संपृक्तैः पांसुभिः पवनोद्धतैः ।
तेनैव च समुद्भूतैः सूक्ष्मैर्लोहितबिन्दुभिः ॥ ६० ॥
लोहितार्द्रैः प्रहरणैः प्रभग्ना लोहितोक्षिताः ।
लोहितेषु निमग्नास्ते निहताश्च किरीटिना ॥ ६१ ॥
बभूवुर्लोहितास्तत्र भृशमादित्यरश्मयः ।
आकाशं तत्क्षणेनासीत्सन्ध्याभ्रमिव लोहितं ॥ ६२ ॥

वैशंपायन उवाच ।

ततः सुदर्शनं नाम प्रासादं हरिवाहनः ।
सर्वान्देवान्समारोप्य प्रययौ यत्र पाण्डवः ॥ १ ॥

स्थूणाराजिसहस्रं तु यत्र मध्ये प्रतिष्ठितम्।
तत्र सूर्यपथेऽतिष्ठद्विमला महती सभा ॥ २ ॥

आदित्या वसवो रुद्रा अश्विनौ च मरुद्गणाः ।
तत्र श्वेतानि चक्राणि काञ्चनस्फाटिकानि च ॥ ३ ॥

तथा चित्राणि छत्राणि दिव्यरूपाणि भारत ।
मणिरत्नविचित्राणि नानारूपाणि भागशः ॥
आकाशे सह दृश्यन्ते भानुमन्ति शुभानि च ॥ ४ ॥

अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च ।
तथा धातुर्विधातुश्च मित्रस्य धनदस्य च ।
रुद्रस्य विष्णोः सवितुस्त्रिदशानां तथैव च ॥ ५ ॥

काञ्चनानि च दामानि विविधाश्चोत्तमस्रजः ।
दिव्यपुष्पाभिसंवीतास्तत्र चित्राणि भेजिरे ॥ ६ ॥

तस्मिंस्तु राजन्प्रासादे दिव्यरत्नविभूषिते ।
दिव्यगन्धसमायुक्ताः स्रजो दिव्याश्चकाशिरे ॥ ७ ॥

दिव्यश्च वायुः प्रववौ गन्धमादाय सर्वशः ।
ऋतवः पुष्पमादाय समतिष्ठन्त भारत ॥ ८ ॥

प्रजानां पतयः सप्त सप्त चैव महर्षयः ।
तत्र देवर्षयश्चैव देवराजं दिवौकसः ।
इन्द्रेण सहिताः सर्वे त्रिदशाश्च व्यवस्थिताः ॥ ९ ॥

न पङ्को न रजस्तत्र प्रविवेश कथंचन ।
आदित्यश्च विरूक्षोत्र नातिवेलमिवातपत् ॥ १० ॥

दिव्यगन्धं समादाय वायुस्तत्राभिगच्छति ।
आकाशं च दिशः सर्वा दर्शनीयमदृश्यत ॥ ११ ॥

तत्र देवाः समारुह्य तं दिव्यं सर्वतः प्रभम् ।
अम्बरे विमलेऽतिष्ठन्प्रासादं कामगामिनम् ॥ १२ ॥

तत्र राजर्षयश्चैव समारुह्य दिवौकसः ।
श्वेतो राजा वसुमनास्तथा भद्रः प्रदर्शनः ॥ १३ ॥

नृगो ययातिर्नहुषो मान्धाता भरतः कुरुः ।
अष्टकश्च शिबिश्चोभौ स च राजा पुरूरवाः ॥ १४ ॥

डम्भोद्भवः कार्तवीर्यो ह्यर्जुनः सगरस्तथा ।
दिलीपः केरलः पूरुः शर्यातिः सोमकस्तदा ॥ १५ ।

हरिश्चन्द्रश्च तेजस्वी रघुर्दशरथस्तथा ।
भगीरथश्च राजर्षिः सर्वे च जनमेजय ॥ १६ ॥

पाण्डुश्चैव महाराजश्चामरव्यजनोज्ज्वलः ।
छत्रेण ध्रियमाणेन राजसूयश्रिया वृतः ॥ १७ ॥

एते चान्ये च बहवः पुण्यशीलाः शुचिव्रताः ।
कीर्तिमन्तो महावीर्यास्तत्रैवासन्दिवि स्थिताः ॥ १८ ॥

गणाश्चाप्सरसां सर्वे गन्धर्वाश्चापि सर्वशः ।
दैत्यराक्षसयक्षाश्च सुपर्णाः पन्नगास्तथा ॥ १९ ॥

वासवप्रमुखाः सर्वे देवाश्च सगणेश्वराः ।
आसंस्तत्र समारूढाः संग्रामं तं दिदृक्षवः ॥ २० ॥

इत्यम्बरे व्यवस्थाय प्रासादस्था दिवौकसः ।
एकस्य च बहूनां च युद्धं द्रष्टुं व्यवस्थिताः ॥ २१ ॥

---

## ADHYĀYA 52.

[ *NORTHERN RECENSION.* ]

After V. 12

Edn² C add:—

अर्जुनं प्रति संरब्धः कृपः परमदुर्जयः ।

After V. 22

Edns DH add :—

धनुरादाय विव्याध पार्थं दशभिराशुगैः ।

After V. 30

Edns & MSS add —

स तदप्यस्य कौन्तेयश्चिच्छेद नतपर्वणा ।

After V 33

Edns ABDGHKLMN add —

सा पतद्दशधा छिन्ना भूमौ पार्थेन धीमता ॥ १ ॥

After V. 43

L adds:—

विबुधपतिसुतेन निर्जितो [illegible] गुरुः [illegible] न तथा [illegible] ।
परिभवमपि चात्मनो न मेने हृदि न ममौ गुरुशिष्ययोर्विशेषः ॥

अप्यस्तं प्राप्य चादित्यो निवर्तेत न पाण्डवः ।
निवर्तन्ते न जित्वारिं नित्यजल्पाविचक्षणाः ॥ ६३ ॥
तान्सर्वान्समरे शूरान्पौरुषे पर्यवस्थितान् ।
दिव्यैरस्त्रैरमोघात्मा सर्वानाच्छेद्धनुर्धरान् ॥ ६४ ॥
स तु द्रोणं त्रिसप्तत्या नाराचानां समर्पयत् ।
अशीत्या शकुनिं चैव द्रौणिमप्याशु सप्तभिः ॥ ६५ ॥
दुःसहं दशभिर्बाणैरर्जुनः समविध्यत ।
दुःशासनं द्वादशभिः कृपं शारद्वतं त्रिभिः ॥ ६६ ॥
भीष्मं शान्तनवं षष्ट्या प्रत्यविध्यत्स्तनान्तरे ॥ ६७ ॥

Before v. 1 ST adds :—

ध्वजा हयास्तदाज्ञाय उत्तरस्याथ सन्निधौ ।
यथानुपूर्व्यं सर्वेषां द्रोणादीनां महात्मनाम् ॥ १ ॥
आख्याय सर्वं बीभत्सुः कुरूणामिषतां रणे ।
प्रायायुद्धमनाः पार्थो यतः सा भारती चमूः ॥ २ ॥
आदधान रथान्सर्वान् महतां च सुधीं रणे ।
संस्पृश्याशु च गाण्डीवं द्वैरथे कर्णमभ्ययात् ॥ ३ ॥

ST adds before v. 10:—

अथ याते तु राधेये दुर्योधन पुरोगमाः ।
अनीकेन यथा स्वेन शरैरर्दन्त पाण्डवम् ॥ १ ॥
बहुधा तस्य सैन्यस्य व्यूढस्यापततः शरैः ।
अवारयत वेगं स वेलेव तु महोदधेः ॥ २ ॥

After 19*b* SG adds:—

कृपप्रभृतयश्चान्ये शकुनिर्धृतराग्रजः ।

SA[1] omits the portion form जीमूता in v. 20*a* to अभिवर्षन्तः in 21*a*.

After 39*a* ST adds:—

शब्देनामानुषाणां च भूतानां ध्वजवासिनाम् ।
भैरवं शब्दमत्यर्थं वानरस्य च कुर्वतः ॥ १ ॥

After v. 39*b* ST adds:—

भयमुत्पादयामास बलवानरिमर्दनः ।

ST adds after v. 24 *a*:—

सर्वतो दिशमत्युग्रैः प्रभूतैश्च सतेजसैः ।
प्रच्छादयन्त दिशः सर्वाः शरैः पार्थसमीरितैः ॥ १ ॥
सर्वे शांतिपरा योधाः स्वचित्तं नाभिजज्ञिरे ।
हास्तिनोऽश्वाश्च सम्भ्रान्ता व्यपासीदन्त सर्वशः ॥ २ ॥

गाण्डीवस्य च घोषेण पृथिवीमनुनादयन् ।
मनांसि धार्तराष्ट्राणां समकृन्तद्धनंजयः ॥ ३ ॥

After v. 43a ST adds:—

अभ्रमध्ये यथार्कस्य रश्मयस्तिग्मतेजसः ।
दिशासु च तदा राजन्नसंख्याताः शरास्तथा ॥ १ ॥

After v. 58a SG ST SA add:—

धाव्हेरथास्फोटयते प्रध्माते शंखमर्जुने ।

v. 4 b & 5 omitted in SA[2] v 22, 23a omitted in SA[1]
v.42a omitted in SG, ST, SA v. 66 omitted in SG.
v 67 omitted in SG, ST

---

## ADHYĀYA 51.

[ *NORTHERN RECENSION.* ]

**After V. 2**

Edns BCEGHMN add:—

महामात्रैः समारूढा विचित्रकवचोज्वलाः ।

K adds:—

आरूढा युद्धकुशलैः शिक्षितैर्गजसादिभि ।

**After V. 3a**

HMN add:—

सर्वान्देवान्समारोप्य वैडूर्यफलयंत्रितम् ।

**After V. 4**

K adds:—

दर्शनार्थं तदा सर्वे समेता वासवादयः ।

**Before V. 5a**

*Edns & MSS add* —

णां च यत्नं तेषां मानुषेषु प्रयुज्यताम् ।

**After V 18**

Edns BCDEGHK[2]N add:—

विमम्माला महातेजाः पद्मोत्पलसमायुतां ।
विप्रेक्ष्यमाणो बहुभिर्नार्युष्यत्सु महाद्युम ॥ १ ॥

[ *SOUTHERN RECENSION.* ]

The following Adh ( SK 53 ) corresponds with our Adh 51, the subject and the sense is the same, the text however differing altogether.

[ *SOUTHERN RECENSION.* ]

**After V. 2**

ST adds:—

निवृत्तः सहसा राजन्नर्जुनस्य रथो महान्।
तमायांतं पार्थरथं दृष्ट्वाप्याचार्यसत्तमः॥
न तस्मिन् यत्नमकरोद्योद्धुं वा यातुमेव वा॥ १॥

**Before V. 15**

S. cl. adds:—

वैशंपायन उवाच।

एतस्मिन्नंतरे तत्र महावीर्यपराक्रमः।
आजगाम महाबाहुः कृपः शस्त्रभृतां वरः॥ १॥
अर्जुनं प्रतियोद्धुं वै युद्धकामो महारथः।
अथ द्रौणे रथं त्यक्त्वा कृपस्य रथमुत्तमम्॥ २॥
आजगामार्जुनस्तूर्णं सूर्यवैश्वानरप्रभम्॥ ३॥

1 *b* omitted in SA[2] 3 v. omitted in ST.

**After V. 17a**

S. cl. adds:—

अभ्ययाद्धरतश्रेष्ठो विनिघ्नञ्छरमालया।
कृपश्च धनुरादाय तथैवार्जुनमभ्ययात्॥ १॥

Instead of this v. ST adds:—

विस्फारयंस्तदा धीरः फाल्गुनः कृपमभ्ययात्।

**After V. 18**

S. cl. adds.—

जीमूत इव घर्मांते शरवर्षं विमुंचति।
नंदयन्सुहृदः सर्वान्प्रत्ययुध्यत फल्गुनम्।
विकृष्य बलवच्चाप पांडवोऽमितविक्रमः॥ १॥

ST adds instead —

नाराचान्विसृजन्घोरान्विकृष्य धनुरुत्तमम्।

**After V. 20**

SK, SG, SA add—

उद्गतः समरे मेघो धाराभिरिव पर्वतम्।

**After V. 21a**

S. cl. adds:—

कृपो बभूव समरे विधूमोऽग्निरिव ज्वलन्।

After V. 22

S. cl. adds:—

विभेद समरे पार्थः कृपस्य ध्वजमुत्तमम् ।
ततः पश्चान्महातेजा नाराचान्सूर्यसन्निभान् ॥ १ ॥
जग्राह समरे पार्थो भूयो बहुशिलीमुखान् ।
तैस्तदानीं महाबाहुः कृपस्य रथरक्षिणः ॥ २ ॥
जघान क्षत्रियश्रेष्ठो युद्धमानान्महारथान् ।
चंद्रकेतुः सुकेतुश्च चित्राश्वो मणिमांस्तदा ॥ ३ ॥
मुंजमौलिश्च विक्रांतो हेमवर्णो भयावहः ।
सरथोऽतिरथश्चैव सुषेणोऽरिघ्न एव च ॥ ४ ॥
नृकेतुश्च सहानीकास्ते निपेतुर्गतासवः ॥ ५ ॥

After V. 31

ST adds:—

तानि सर्वाणि चिच्छेद पाण्डवः परवीरहा ।

After V. 33a

SK adds:—

रुरोध सायकैस्तीक्ष्णैरर्धचन्द्रमुखैश्च ताम् ।

After V. 33

S. cl. adds:—

सापतद्दशधा भूमौ पार्थेन निहता शरैः ।
शक्त्यां तु विनिकृत्तायां विरथः शरपीडितः ॥ १ ॥

After V. 40

S. cl. adds:—

अथ खड्गं समुद्धृत्य शतचन्द्रं च भानुमत् ।
इयेष पाण्डवं हन्तुं कृपो लघुपराक्रमः ॥ १ ॥
स शारद्वतसुतस्तूर्णं महाचार्यः सुशिक्षितः ।
खेचरेव चचारैकः स्माचर्मासिधृग्भुवि ॥ २ ॥
ततः क्षुरप्रैः कौन्तेयो दशभिः खड्गचर्मणी ।
निमेषादेव चिच्छेद तदद्भुतमिवाभवत् ॥ ३ ॥
विषण्णवदनस्तत्र धिनाशात्खड्गचर्मणोः ।
दन्तैर्दन्तच्छदान्दष्ट्वा चुकोप हृदि दीर्घवत् ॥ ४ ॥
मयत्वितिपुनश्चोक्त्वा युद्धापगमनोद्यतः ।
अश्वत्थामस्तु सरथं कृप समभिपुप्लुवे ॥ ५ ॥
स्वस्त्रीयस्य महातेजा जग्राह च धनुः पुनः ॥ ६ ॥

v. 4&5a omitted in SG, ST, SA.

---

## ADHYĀYA 53.

### [ *NORTHERN RECENSION.* ]

**After. V. 27a**

AKL add:—

अर्जुनं वा विना द्रोणात् कोऽन्यो योद्धुं रणेऽर्हति।

**After V. 51a**

Edns & MSS add:—

आचार्यमुख्यः समरे द्रोणः शस्त्रभृतां वरः ।

**After V. 57**

*DN add:—*

अशोकानां वनानीव छिन्नानि कुसुमैर्नरैः।
रेणुः पार्थशरैस्तत्र तदा सं[illegible]ानि भारत ॥ १ ॥

**After V. 60**

N adds:—

छादयेतामथान्योन्यं प्राणद्यूते प्रवर्तिते।

**After V. 67a**

Edns CGN add:—

दृष्ट्वा ते विस्मिताः सर्वे साधु साध्वित्यपूजयन्।

### [ *SOUTHERN RECENSION.* ]

**Before V. 3**

S. cl. adds:—

जितं वैकर्तनं दृष्ट्वा पार्थो वैराटिमब्रवीत्।
स्थिरो भव त्वं संग्रामे जयोऽस्माकं नृपात्मज ॥ १ ॥

यावच्छङ्खमुपाध्मास्ये द्विषतां रोमहर्षणम्।
अविक्लवमसंभ्रान्तमव्यक्तहृदयेक्षणम् ॥ २ ॥

याहि शीघ्रं यतो द्रोणो ममाचार्यो रणे स्थितः।
तथा संक्रीडमानस्य अर्जुनस्य रणाजिरे ॥ ३ ॥

बलं सत्त्वं च तेजश्च लाघवं च व्यवर्धत।
तच्चाद्भुतमभिप्रेक्ष्य भयमुत्तरमाविशत् ॥ ४ ॥

उत्तर उवाच ।

अस्त्राणां तव दिव्यानां शरौघान्क्षिपतः शितान्।
मनो मे मुह्यतेऽत्यर्थं तव दृष्ट्वा पराक्रमम् ॥ १ ॥

द्वैधी भूतं मनो मह्यं भयाद्गुरुतलत्तम ।
अदृष्टपूर्वं पश्यामि तव गाण्डीवनिः स्वनम् ॥ ६ ॥

तव बाहुबलं चैव धनुः कर्षयतो बहु ।
तव तेजो दुराधर्षं यथा विष्णोस्त्रिविक्रमे ॥ ७ ॥

वैशंपायन उवाच ।

तमुत्तरश्चित्रमवेक्ष्य गाण्डिवं ।
शरांश्च मुक्तान्सहसा किरीटिना ॥
भीतोऽब्रवीदर्जुनमाजिमध्ये ।
नाहं तवाश्वान्विषहे नियंतुम् ॥ ८ ॥

तमब्रवीत्किंचिदिव प्रहस्य
गाण्डीवधन्वा द्विपतां निहन्ता ।
मया सहायेन कुतोऽस्ति ते भयम्
प्रेह्युत्तराश्वाननुमन्त्र्य वाहय ॥ ९ ॥

वैशंपायन उवाच ।

आश्वासितस्तेन धनंजयेन ।
वैराटिरश्वान्प्रतुतोद शीघ्रम् ।
धनंजयश्चापि विकृष्य चापं
विष्फारयामास महेन्द्रकल्पः ॥ १० ॥

उत्तरं चैव बीभत्सुरब्रवीत्पुनरर्जुनः ।
न भेतव्यं मया सार्धं तात संग्राममूर्धनि ॥ ११ ॥

राजपुत्रोऽसि भद्रं ते कुले महति मात्स्यके ।
जातस्त्वं क्षत्रियकुले न विषीदितुमर्हसि ॥ १२ ॥

धृतिं कृत्वा सुविपुलां राजपुत्र रथं मम ।
युध्यमानस्य संग्रामे राजभिः सह वाहय ॥ १३ ॥

उक्त्वा तमेवं बीभत्सुरर्जुनः पुनरब्रवीत् ।
पाण्डवो रथिनां श्रेष्ठो भारद्वाज समीक्ष्यत ॥ १४ ॥

vv. 11, 12, 13 omitted in SG. v. 14 omitted in ST. v. 14*b* omitted in SA[1]. ST adds after v. 13:—

एवमुक्त्वा पुनः प्राह भारद्वाजं समीक्ष्य तु ।

After V. 4a

S. cl. adds:—

भारद्वाजेन योत्स्येऽहमाचार्येण महात्मना ।

After V. 5

S. cl. adds:—

यतो रथवरे शूरः सर्वशस्त्रभृतां वरः।

After V. 8

S cl. adds:—

पुराणमितिहासश्च अर्थविद्या च मानवम्।

After V. 9

S. cl. adds:—

यस्याहमिष्टः सततं मम चेष्टः सदा च सः।

After V. 10

S. cl. adds:—

अपरं पश्य संग्राममद्भुतं मम तस्य च।

After V. 16

S. cl adds:—

तत्तु युद्धं प्रववृते ह्याचार्यस्यार्जुनस्य च।

After V. 28

ST adds:—

योधयन्ति गुरुं चापि शिष्याः कथमभीप्सतः।

After V. 29

S. cl. adds:—

संयुगे संचकाशेतां कालसूर्याविवोदितौ।

After V 33

S. cl. adds:—

कालमेघ इवोष्णान्ते फल्गुनः समवाकिरत्।
तस्य जाम्बूनदमयैश्चित्रैश्चापच्युतैः शरैः॥ १॥
प्राच्छादयद्रथश्रेष्ठं भारद्वाजोऽर्जुनस्य वै॥ २॥

After V. 33

S. cl. adds:—

शोभते स्म महाबाहुर्गाण्डीवं विक्षिपन्धनुः।

After V. 36a

S. cl. adds:—

आददानं शरान्घोरान्संदधानं च पाण्डवम्।
विसृजन्तं च कौन्तेयं न स्म पश्यन्ति लाघवात्॥ १॥

**After V 37a**

S cl adds —

मरीचिविकचस्येव राजन्भानुमतो वपु ।
आसीत्पार्थस्य सुमहद्वपु शरशतार्चितम् ॥ १ ॥
क्षिपत शरजालानि कौन्तेयस्य महात्मन ।

after this comes our v 40a

बभासे तिमिरं व्योम्नि विधूय सविता यथा ॥ २ ॥

after this comes our v 39

असकृन्मुञ्चतो बाणान्ददृशु कुरवो युधि।
दिक्षु सर्वासु विपुल शुश्रुवेऽथ जनैस्तदा ॥ ३ ॥
द्रोणस्यापि धनुर्घोषो विद्युत्स्तनितनिस्वन ।
अभवद्विस्मयकर सैन्याना भरतर्षभ ॥ ४ ॥

ST adds before v 1

तस्याभवत्तदारूप रम्य तस्य रथोत्तमे।

v 3 & 4 omitted in SA

ST further adds —

व्यशातयच्छरास्तास्तु द्रोण समितिशोभन ।
महानभूत्तत॰ शब्दो वशानामिव दह्यताम्।

**After V 43**

S cl. adds —

आकाशे समदृश्यन्त हसानामिव पङ्क्तय ।

**After V 51c**

S cl. adds —

विव्याध निशितैर्द्रोण शरै सन्नतपर्वभि ।
हृष्टः समभवद्द्रोणा रणशौण्ड प्रतापवान् ॥ १ ॥

**Before V 52b**

S cl. adds —

पार्थस्तु समरे शूरा दर्शयन्वीर्यमात्मन ।
स महास्त्रैर्महात्मान द्रोण प्राच्छादयच्छरै ॥ १ ॥

**After V 53**

S cl adds —

दर्शयेता महास्त्राणि भारद्वाजार्जुनौ रणे।

**After V 60**

ST adds —

तयो समभवद्युद्धं तुमुलं भरतर्षभ।
द्रोणकौन्तेययोस्तत्र बलिवासवयोरिव ॥ १ ॥

अथ पूर्णायतोत्सृष्टैः शरैः सन्नतपर्वभिः ।
व्यदारयेतामन्योन्यं प्राणद्यूते प्रवर्तिते ॥ २ ॥

After V. 65

S. cl. adds:—

तत्प्रवृत्तं चिरं घोरं तयोर्युद्धं महात्मनोः ।
अवर्तत महारौद्रं लोकसंक्षोभकारकम् ॥ १ ॥

After V. 72

S. cl. adds:—

द्रोणं युद्धार्णवे मग्नं दृष्ट्वा पुत्रः प्रतापवान् ।

After V. 77

S. cl. adds:—

पराजिते तदा द्रोणे द्रोणपुत्रः समागतः ।
सदण्ड इव रक्ताक्षः कृतान्तः समरे स्थितः ॥ १ ॥

---

ADHYĀYA 54.

[ *NORTHERN RECENSION.* ]

After V. 1a

Edns & MSS add:—

तं पार्थः प्रतिजग्राह वायुवेगमिवोद्धतम् ।

After V. 7

Edns CDGM add:—

साधु साध्विति भाषन्तो पूजयन्कर्म तस्य तत् ।

[ *SOUTHERN RECENSION.* ]

Before V. 1b

S. cl. adds:—

तं पार्थः प्रतिजग्राह वायुवेगमिवाचलः ।

After V. 7a

S. cl. adds:—

न शक्तोऽन्यः पुमान्स्थातुमृते द्रौणेर्धनंजयम् ॥ १ ॥

ST repeats:—

न शक्नोति पुरः स्थातुं गुरुपुत्रमृते रणे ॥ १ ॥

### After V 9

S cl adds —

> तं दृष्ट्वा युद्धमायान्तं प्रभिन्नमिव कुञ्जरम् ।
> क्रुद्धः समाह्वयामास द्रौणिर्युद्धाय भारत ॥ १ ॥

omitted in $SA^1$

### After V 10a

SK adds.—

> चिच्छेद तस्य चापं च सूतं चाश्वांश्च तेजसा ।
> विव्याध निशितैश्चापि शरैराशीविषोपमैः ॥
> सोऽन्यं रथं समास्थाय प्रत्ययाद्रथिपुंगवः ॥ १ ॥

### After V 15

ST adds —

> अश्वत्थामा तु विव्याध शरैः पञ्चभिरर्जुनम् ।
> ध्वजमेकेन बाणेन द्वाभ्यां वैराटिमेव च ॥ १ ॥
>
> चतुर्भिरश्वान् विव्याध पार्थं पञ्चभिरेव च ।
> तस्य पार्थो ध्वजं छित्वा धनुश्चिच्छेद पत्रिणा ॥ २ ॥
>
> अष्टभिश्चैवमुरसि बिभेद युधि मार्गणैः ।
> तेन विद्धो रथो नगे मूर्छितश्च पपात च ॥ ३ ॥
>
> मूर्छितं पतितं दृष्ट्वा सारथिः शीघ्रमाहवे ।
> व्यपोहयत्ततः पार्थात् हतं नच्छत्तथागतम् ॥ ४ ॥

---

## ADHYĀYA 55

[ *NORTHERN RECENSION* ]

### After V 6

Edns BCDEGHMN add —

> वने द्वादश वर्षाणि यानि सोढानि दुर्मते ।
> तस्याद्य प्रतिकोपस्य फलं प्राप्नुहि सम्प्रति ॥ १ ॥

### *Before V 14*

D adds —

> खद्योतो द्योतते तावद्यावन्नोद्यते शशी ।
> उदिते च सहस्रांशौ न खद्योतो न चन्द्रमाः ।
> प्राग्नान्पुण्यात् निन्दा वृथा ते कर्ण गर्जितम् ॥ १ ॥

After V. 26

K adds:--

दृष्ट्वा कर्णं तदाराजन्नपयांतं रणाजिरात्।

[ *SOUTHERN RECENSION.* ]

Before V. 1

S. cl. adds:—

कर्णं तदोवाच किरीटमाली।
शूरः कुरूणां प्रवरो हि गर्जन्॥

After V. 7

ST[2] adds:--

कर्ण यत्तदिदं वाक्यं कुरुमध्ये क्षितीभृतां।
अर्जुनेन सहाहं तु युध्यामि च महारणे॥ १॥

कर्ण मा साहसं कार्षीराचार्यं माचमन्यथाः।
क्षत्रियाणामिमं धर्मं मामाक्षः कर्ण मां प्रति॥ २॥

पश्य मे वीर्यमुत्साहं बलं चापि पराक्रमम्।
अर्दितश्चापि वीर्येण कर्ण मां बहु भाषसे॥ ३॥

कर्ण मे तव वीर्यं च स्त्रात्मशक्तिं च कर्म च।
चिरं जानीमहे युद्धे यद्यदिच्छामहे पुनः॥ ४॥

After V. 17

S. cl. adds:--

अभीयाय हि बीभत्सुर्गांडीवं विक्षिपन्धनुः।
जिघांसुः समरे कर्ण विससर्ज शरान् बहून्॥ १॥
तान् कर्णः प्रतिजग्राह वायुवेगमिवाचलः।
तयोर्देवासुरसमः संनिपातोऽभवन्महान्।
किरतोः शरजालानि कृत्स्नं व्योम निरंतरम्॥ २॥

our 17 *b* repeated in SA[1] after 2 *a*. ST[2] omits the 2 above *vv*.

After V. 18a

S. cl. adds:—

ववर्ष च रजो भौमं कर्णपार्थसमागमे।
न स्म सूर्यः प्रतपति न च वाति समीरणः॥ १॥

शरप्रच्छादितं व्योम छायाभूतमिवाभवत्।
गांडीवस्य च निर्घोषः कर्णस्य धनुषस्तथा।
दह्यतामिव वेणूनामासीत्परमदारुणः॥ २॥

अर्जुनस्तु हयान्नागान् रथांश्च विनिपातयन्।
क्षोभयामास तत्सैन्यं कर्णं विव्याध चासकृत् ॥ ३ ॥

After V. 26

ST[2] adds:—

लज्जावान्विरथः शांतो भग्नो भग्नश्च सारथिः।
सिंहपातादिवोन्मत्ताद्गजो याति विषण्णवान् ॥ १ ॥

---

## ADHYĀYA 56.

### [ *NORTHERN RECENSION.* ]

After V 19

Edns & MSS except M *add:*—

सुवर्णपृष्ठं गाण्डीवं द्रक्ष्यन्ति कुरवो मम ।

After V. 32b

K adds:—

गारुडं गरुडात्पाशुपतं पशुपतेरहम् ।
नागास्त्रं वासुकेश्चापि सर्पेभ्यः सार्पबंधनं ॥ १ ॥
गंधर्वगुह्यकेभ्यश्च मयास्त्रं चापि शिक्षितं ।
*श्रीसूर्याच्चाग्नेयं विद्यां ब्रह्मास्त्रं ब्रह्मणो मुखात्॥*
ग्रहास्त्राणि ग्रहेभ्योऽहं मोक्षं तत्तद्गुरोरपि ॥ २ ॥
आदानसंधानाविकर्षणादि ।
मोक्षोपसंहारमुखास्तु पंच ॥
दिव्यास्त्रयोगे खलु ये प्रकाराः ।
तत्तद्गुरोर्मुखतः शिक्षिता मे । ३ ॥
प्रस्वापनं च दिव्यास्त्रं तथा संमोहनं परम् ।
वैकल्यकरणादीनि दिव्याण्यस्त्राण्यनेकशः ॥ ४ ॥
पश्य मां शत्रुसैन्येषु प्रयुंजंतं प्रयोगतः ।
प्राप्ते त्ववसरे तेषां यथायोगं युंजताम् ॥ ५ ॥

vv. 3, 4, 5 are noted on the margin.

After V. 33

K adds on the margin—

दिक्पालान् लोकपालादीन् प्रसादाच्चैनसेवया ।
तपोभिश्चोग्ररूपैर्हि चिरकालं जितेंद्रियः ॥ १ ॥
तन्निगृह्य निराहारः स्थाणुभूतो निराश्रयः ।
घर्मशीतातपसहः मानयानस्त्रसंचयम् ॥ २ ॥

## [ *SOUTHERN RECENSION.* ]

*N. B.*—Verses 3-18 of this Adh. ( 56 ) are not found in the corresponding Adh. of S. cl. These verses describe the second fright of uttara. Verses to this effect in the S. cl. are seen elsewhere ( beginning of SK Adh. 59 = our Adh. 53 ) which are accordingly noted in the App. of that Adh.

**After V. 2**

SK, SG, SA add :—

तालो वै कांचनो यत्र वज्रवैडूर्यभूषितः ।
अतीव समरे भाति मातरिश्वप्रकंपितः ॥
दारुणं प्रहरिष्यामि रथवृंदानि धन्विनाम् ॥ १ ॥

**Before V. 18b**

ST adds:—

एवमुक्त्वा महाबाहुर्मातलिं च मदोद्धतः ।
विधमिष्याम्यनीकानि परेषां पश्यतामिह ॥ १ ॥

**After V. 22**

S. cl. adds:—

तूणीशयाः सुपुंखाग्रा विशिखा दुंदुभिस्वनाः ।
मया प्रमुक्ताः संग्रामे कुरून्धक्ष्यंति सायकाः ॥ १

ST reads this after v. 24.

**After V 26a**

SK, SG, SA add :—

मातलिं सारथिं कृत्वा निवातकवचान् रणे ।
हतवान्सर्वतः सर्वान् धावतो युध्यतस्तदा ।
निवातकवचान् हत्वा गांडीवास्त्रैः सहस्रशः ॥

**After V. 26b**

SK, SG, SA add :—

असुरानहनं घोरान् रौद्रेणास्त्रेण सारथे ।

**After V. 30a**

SK, SG, SA add:—

रथसिंहगणैर्युक्तं धनुर्वल्लिसमाकुलम् ।

**After V. 32**

SK adds:—

सौर्यं सूर्यादहं वेद्मि याम्यं दण्डधरादपि ।

After V. 33a

S. cl. adds:—

अन्यैर्दैवैरहं प्रातः को मां विपहते पुमान्।
अद्य गाण्डीवनिर्मुक्तैः शरौघै रोमहर्षणैः।
कुरूणां पातयिष्यामि रथवृन्दानि धन्विनाम् ॥

ST omits *a*, and adds after the above:—

यतः सर्वानखिलान् योत्स्येऽग्रानवस्थितान्।
एकः संक्षालयिष्यामि वज्रपाणिरिवासुरान् ॥

After V. 36

SK, SG, SA add:—

दुःशासनोऽभ्ययात्तूर्णमर्जुनं भरतर्षभ।
अन्येऽपि चित्राभरणा युवानो मृष्टकुंडलाः ॥

After V. 37

ST adds:—

अगच्छत्त्वरितं गृह्य परिष्वज्य च बाहुभिः।
तं चित्रमाल्याभरणं युवानो मृष्टकुंडलाः ॥

After V 39

SK, SG, SA add—

तस्य दुःशासनः पत्रिं वामपार्श्वे समार्पयत्
अस्यतः प्रतिसंधाय कुंतीपुत्रस्य धीमतः ॥

After V. 47a

ST adds:—

रणमध्यादपक्रांते युवराजे तु भारत।

After V. 47

S. cl. adds:—

व्यद्रावयदशेषांश्च धृतराष्ट्रसुतांस्तदा।
विद्राव्य च रणे पार्थो रणभूमिं व्यराजयत् ॥

ST omits line *a*

After V 48

ST adds:—

सर्वां सेनां निहत्याजौ महेश्वर इव स्थितः।

SK, SG, SA[2] add:—

पातयन्नुत्तमांगानि बाहूंश्च परिघोपमान्।
अशेरत महावीरा शतशो रुक्ममालिनः ॥ १ ॥

कमलदिनकरेन्दुसन्निभैः ।
सितदशनैः सुमुखाक्षिनासिकैः ॥
रुचिरमकरकुण्डलैर्मही ।
पुरुषशिरोभिरथास्तृता बभौ ॥ २ ॥

सुनसं चारुदीप्ताक्षं क्लृप्तश्मश्रु स्वलंकृतम् ।
अदृश्यत शिरश्छिन्नमनेकं हेमकुण्डलम् ॥ ३ ॥

एवं तत्प्रहतं सैन्यं समंतात्प्रद्रुतं भयात् ॥ ४ ॥

After v. 1a SA adds:—

सर्वा दिशश्चानुदिशः कौन्तेयस्याभितो रथम् ।

SA[2] reads v. 3 after v. 1 and adds after v 3:—

धावन्त इव पार्थस्य निरमित्रं चिकीर्षवः ।
ययुः पुङ्खाग्रसंसक्ताः फल्गुनस्य पतत्रिणः ॥ १ ॥

SA[2] adds after v. 2:—

अर्जुनस्य शरास्तीक्ष्णा गाण्डीवात्तस्य निःसृताः ।
आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ॥ १ ॥

क्षिपतो लघु चित्रं च सव्यं दक्षिणमस्यतः ।
पार्थस्य विशिखा जग्मुः शतशोऽथ सहस्रशः ॥ २ ॥

प्रमथन्नुत्तमाङ्गानि सोत्सेधानि धनुष्मताम् ।
प्राहिणोत् त्रिशतं योधान् कुरूणामाततायिनाम् ॥ ३ ॥

पातयन् रथनीडेभ्यः क्षत्रियान्क्षत्रियर्षभः ।
प्रगाढधन्वा कौन्तेयो लब्धलक्षः प्रतापवान् ॥ ४ ॥

---

## ADHYĀYA 57.

[ *NORTHERN RECENSION.* ]

**After V. 13**

Edns & MSS add:—

दर्शयित्वा तथात्मानं रौद्रं रुद्रपराक्रमः ।

**After V. 21**

Edns & MSS add:—

चकार च तदा पार्थो नदीं दुस्तरशोणिताम् ।

## [ *SOUTHERN RECENSION* ]

*Note*:-Upto v. 6 of Adh. 57, the text in ST is according to the Southern Recension. After this it contains the text of vv. 20, 21 of Adh. 54 and that of the whole of Adhyāyas 55, 56, 57, 58, 59 whieh resembles more the Northern than the Southern Recension. The text then agrees with the Southern Recension; i. e in the arrangement of its Adhyāyas, it approaches here the N. Recension more closely than the S. Recension.

### Before V. 1

SK adds:—

एतस्मिन्नन्तरे क्रुद्धो भीष्मो द्रोणमथाब्रवीत् ।
दृष्ट्वा कृपं फल्गुनेन पीडितं चोर्जितं च तम् ॥ १ ॥
एकैकमस्मान्संग्रामे पराजयति फल्गुनः ।
अहं द्रोणश्च कर्णश्च द्रौणिर्गौतम एव च ॥
अन्ये च बहवः शूरा वयं जेष्याम वासविम् ॥ २ ॥

### After V. 5

S. cl. adds :—

अविषह्य शरान्सर्वे पार्थचापच्युतान् रणे ।

### After V. 9

SK, SG, SA. add:—

शिरांस्यपातयत्संख्ये क्षत्रियाणां नरर्षभः ।

ST adds:—

रथे तिष्ठन्नरव्याघ्रः प्रत्यदृश्यत सर्वतः ।

### After V. 13

S. cl. adds:—

दर्शयित्वा तदात्मानं रौद्रं रौद्रपराक्रमः ।

SK, SG, SA further add:—

जघान समरे शूरान् शतशोऽथ सहस्रशः ।

### After V. 14

ST adds:—

धनंजयः क्षत्रियवंशजातः ।
सर्वारिसेनां प्रममाथ शौर्यात् ॥
दुर्योधनादीन् कुरुवीरसिंहान् ।
निर्जित्य योधाभिजयान सर्वान् ॥ १ ॥

## After V. 15

SK, SG, SA add:—

यथा नलवनं नागः प्रभिन्नः षाष्टिहायनः ।
एवं सर्वानपामृद्नादर्जुनः शस्त्रतेजसा ॥ १ ॥

## After V. 16

SK, SG add:—

तस्य मार्गान्विचरतो निघ्नतश्च रणाजिरे ।

## After V. 18a

SK, SG, SA add:—

करवालासिपाठीनां चामरोष्णीपफेनिलां ।
अश्वग्रीवामहावर्तां कबंधजलमानुपाम् ॥
काककंकरुतां तीव्रां सारसक्रौंचनादितां ॥ १ ॥

## After V. 21

SK, SG, SA add:—

वीरोत्तमागपद्माढ्यां शरचापमहानलां ।
पदातिमत्स्यकलुषां गजशीर्षककच्छपां ॥ १ ॥
गोमायुमृगसंघुष्टां मांसमज्जाभिकर्दमां ।
प्रावर्तयन्नदीं घोरां पिशाचगणसेवितां ॥
अपारामनिवारां च रक्तोदां सर्वतो वृतां ॥ २ ॥

S. cl. adds further:—

अभीक्ष्णमकरोत्पार्थो नदीमुत्तमशोणिताम् ।

SK further adds:—

गजवर्ष्ममहाद्वीपामश्वदेहमहाशिलां ।
पदातिदेहसंघाटां रथावलिमहातरुम् ॥ १ ॥
केशशाद्वलसंच्छन्नां सुतरां भीतिदा नृणां ।
अगाधरक्तोदवहा यमसागरगामिनीम् ॥ २ ॥
दुस्तरां भीरुमर्त्यानां शूराणां सुतरां नृप ।
प्रावर्तयन्नदीमेवं भीषणां पाकशासनिः ॥ ३ ॥

## ADHYĀYA 58.

[ *NORTHERN RECENSION.* ]

**After V. 13a**

D adds:—

एवं ते सैनिकास्तत्र धार्तराष्ट्रस्य पश्यतः।

[ *SOUTHERN RECENSION* ]

**After V. 4**

SK, SG, SA add:—

अभ्यवर्षन्सुसंक्रुद्धा महामेघा इवाचलम्।

**After V. 6**

SA adds:—

नोत्तरस्य च गात्राणां चक्रयोर्न च वाजिनाम्।

**After V. 8**

SK, SG, SA add:—

नाक्षाणां न च चक्राणां न रथानां न वाजिनाम्।

SA alone, further, adds:—

मोहयित्वा तु तान् सर्वान् स तत्र शस्त्रतेजसा।
अर्दयामास तैर्बाणैरर्जुनः समितिंजयः॥ १॥
दुर्योधनं त्रिसप्तत्या शकुनिं पंचभिः शरैः।
द्रोणमेकेन बाणेन कृपं द्वाभ्यां महाबलः॥ २॥
अशीत्या सूतपुत्रं तु षष्ट्या द्रौणिं तथैव च।
दुःशासनमुखान्सर्वान्स तत्र शस्त्रतेजसा॥
अर्दयामास तैर्बाणैः पांडवोऽस्त्रभृतां वरः॥ ३॥

**After V. 9**

ST adds:—

अर्जुनः प्रययौ भाति पुरंदर इवामरः।
गांडीवं धनुरादाय मोहयन्सर्वपार्थिवान्॥ १॥

---

## ADHYĀYA 59

[ *NORTHERN RECENSION* ]

**After V. 12**

Edns and MSS add:—

प्रशान्त कुरवः सर्वे योधाश्च सह सैनिकाः।

### After V. 18a

Edns and MSS add:—

पाण्डवस्य रथात्तूर्णं शलभानामिवायतिम् ।

### After V. 43b

Edns & MSS add:—

उभौ विश्रुतकर्माणावुभौ तीव्रपराक्रमौ ।
उभौ सदृशकर्माणावुभौ युधि सुदुर्जयौ ॥ १ ॥

ABEFHL omit the second line.

### Afte V. 49

AF add:—

व्यामुह्यत तदा भीष्मस्तस्थौ किंचिदिवान्तरम् ।

[ *SOUTHERN RECENSION.* ]

### Before V. 1

SK, SG, SA add:—

वैशंपायन उवाच ।
एवं विद्राव्य तत्सैन्यं पार्थो भीष्ममुपाद्रवत् ।
त्रस्तेषु सर्वसैन्येषु कौरव्यस्य महात्मनः ॥ १ ॥
बाणान् धनुषि संधाय चतुरः पाकशासनिः ।
भीष्मं च प्राहिणोद्धीतस्तं द्वाभ्यामभ्यवादयत् ॥ २ ॥
तस्य कर्णांतिकं गत्वा द्वावन्यौ तां च कौशलं ।
सोऽप्याशीरवदद्भीष्मः कौन्तेयो जयतामिति ॥ ३ ॥
नरसिंहमुपायांतं जिगीषन्तं परान् रणे ।
वृषसेनोऽभ्ययात्तूर्णं योद्धुकामो धनंजयं ॥ ४ ॥
वैकर्तनात्मजो वीरः संग्रामे लोकविश्रुतः ।
शौर्यवीर्यादिभिः कर्णाद्बिंबाद्बिंब इवोद्धृतः ॥ ५ ॥
आत्मना युध्यतस्तस्य वृषसेनस्य पांडवः ।
मुहूर्तं तस्य तद्दृष्ट्वा हस्तलाघवपौरुषे ॥
तुतोष च ततः पार्थो वृषसेनपराक्रमं ॥ ६ ॥
तस्य पार्थस्तदाक्षिप्रं क्षुरधारेण कार्मुकं ।
न्यकृंतद्गृध्रपत्रेण जांबूनदपरिष्कृतम् ॥ ७ ॥
अथैनं पंचभिर्भूयः प्रत्यविध्यत्स्तनांतरे ।
स पार्थबाणाभिहतो रथात्प्रस्कंद्य दुद्रुवे ॥ ८ ॥
दुःशासनो विकर्णश्च शकुनिश्च विविंशतिः ।
आयान्तं भीमधन्वानं पर्यकीर्यन्त पांडवं ॥ ९ ॥

तेषां पार्थो रणे क्रुद्धः शरैः सन्नतपर्वभिः ।
युगं ध्वजं शरासं च चिच्छेद तरसा रणे ॥ १० ॥
ते निकृत्तध्वजाः सर्वे छिन्नकार्मुकवेष्टनाः ।
रणमध्यादपययुः पार्थबाणाभिपीडिताः ॥ ११ ॥
ततः प्रहस्य बीभत्सुर्वैराटिमिदमब्रवीत् ।
एतं मे प्रापयेदानीं तालं सौवर्णमुच्छ्रितं ॥ १२ ॥
मेघमध्ये यथाविद्युदुज्ज्वलन्ती पुनः पुनः ।
असौ शान्तनवो भीष्मस्तत्र याहि परंतप ॥ १३ ॥
अस्त्राणि तस्य दिव्यानि दर्शयिष्यामि संयुगे ।
घोररूपाणि चित्राणि लघूनि च गुरूणि च ॥ १४ ॥
अस्माकं पोषको नित्यमाबाल्यान्मत्स्यभूमिप ।
श्रेयस्कामी सदास्माकं योगक्षेमकरः सदा ॥ १५ ॥
तस्यांक वर्धितो बाल्ये तद्योत्स्येऽनेन सांप्रतं ।
अस्माकं धार्तराष्ट्राणां शमकामो दिवानिशं ॥ १६ ॥
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा वैराटिः पार्थसारथिः ।
वाहयच्चोदितस्तेन रथं भीष्मरथं प्रति ॥ १७ ॥
तं रथं चोदितं दृष्ट्वा फल्गुनस्य रथोत्तमं ।
वायुनेव महामेघं सहसाभिसमीरितम् ॥ १८ ॥
तं प्रत्ययाच्च गांगेयो रथेनादित्यवर्चसा ।
आयान्तमर्जुनं दृष्ट्वा भीष्मः परपुरंजयः ॥
प्रत्युज्जगाम युद्धार्थी महर्षभमिवर्षभः ॥ १९ ॥

SG, SA? *omit* v. 2, 3, 5 & 6.
SA omits v. 14
SG, SA omit verses 15 & 16.
SA omits verse 15a
ST reads v. 17 above after our v. 4.

### After V. 4

ST adds:—

अथास्त्रवित्तमायान्तं प्रेक्ष्य पार्थः पितामहं ।
यत्र शान्तनवो भीष्मस्तत्र मां प्रापयस्व भो ॥ १ ॥

### After V. 5

SK, SG, SA read:—

देवदत्तं महाशंखं प्रदध्मौ युधि वीर्यवान् ।
तौ शंखनादावत्यर्थं भीष्मपांडवयोस्तदा ॥
नादयामासतुर्द्यां च खं च भूमिं च सर्वशः ॥ १ ॥
अन्तरिक्षे च जल्पन्ति सर्वे देवाः सवासवाः ।
यदर्जुनः कुरून् सर्वान् प्राक्रन्तच्छस्त्रतेजसा ॥ २ ॥
कुरुश्रेष्ठाविमौ वीरौ रणे भीष्मधनंजयौ ।
सर्वास्त्रकुशलौ वीरावप्रमत्तौ रणे सदा ॥ ३ ॥
उभौ देवमनुष्येषु विश्रुतौ स्वपराक्रमैः ।
उभौ परमसंरब्धावुभौ दीप्तधनुर्धरौ ॥ ४ ॥
समागतौ नरव्याघ्रौ व्याघ्राविव तरस्विनौ ।
उभौ मद्दशकर्माणौ सूर्यस्याग्नेश्च भारत ॥ ५ ॥
वासुदेवस्य सदृशौ कार्तवीर्यसमावुभौ ।
उभौ विश्रुतकर्माणावुभो शूरौ महाबलौ ॥ ६ ॥
सर्वास्त्रविदुषां श्रेष्ठौ सर्वशस्त्रभृतां वरौ ।
अग्नेरिंद्रस्य सोमस्य यमस्य धनदस्य च ॥ ७ ॥
अनयोः सदृशं वीर्यं मित्रस्य वरुणस्य च ।
को वा कुंतीसुतं युद्धे द्वैरथेनोपयास्यति ॥ ८ ॥
ऋते शान्तनवादन्यः क्षत्रियो भुवि विद्यते ।
इति संपूजयामासुर्भीष्मं दृष्ट्वार्जुनं गतं ॥
त रणे संप्रहृष्यन्तं दृष्ट्वा देवाः सवासवाः ॥ ९ ॥
अथ बहुविधतूर्यशंखघोषैर्विविधरवै सह सिंहनादमिश्रैः !
कुरुवृषभमपूजयन्कुरूणां बलममराधिपसैन्यसप्रभं तत् ॥ १० ॥

End of Adh ( SK 62 ) here.

### After V. 7

SK, SG, SA add·—

सारथिं च हयांश्चास्य विव्याध दशभिः शरैः ।
उरस्यताडयत्पार्थं त्रिभिरेवायसैः शरैः ॥ १ ॥
ततोऽर्जुनः शरैस्तीक्ष्णैर्विध्वा कुरुपितामहम् ॥ २ ॥

### After V. 12

ST adds·—

प्रेक्षन्त कुरव· सर्वे योधाश्च सहसैनिकाः ।

SK, SG, SA further add:—

संततं शरजालाभिराकाशं समपद्यत ।
अंबुदैरिव धाराभिस्तयोः कार्मुकनिःसृतैः ॥

After V. 17

SK, SG, SA add:—

ततः कनकपुंखाग्रैः शितैः सन्नतपर्वभिः ।
पतद्भिः खगवाजैश्च द्यौरासीत्संवृता शरैः ॥ १ ॥
ततः प्रासृजदुग्राणि शरजालानि पांडवः ।
तावन्ति शरजालानि भीष्मः पार्थाय प्राहिणोत् ॥ २ ॥
साश्वं ससूतं सरथं च पार्थम् ।
समाचिनोद्भारतो वत्सदन्तैः ॥
प्रच्छादयामास दिशश्च सर्वाः ।
नभश्च बाणैस्तपनीयपुंखैः ॥ ३ ॥

After V. 18a

ST adds:—

पाण्डवस्य रथात्तूर्णं शलभानामिवायुतम् ।

After V. 21

ST adds:—

महेष्वासो महेन्द्रेण शिक्षितो ब्रह्मणा च यत् ।
द्रोणेन च सदा धीरः शिक्षितः फल्गुनो मुदा ॥ १ ॥
जिष्णुः प्रक्रीडीतः पृष्टः स्कन्देन च पिनाकिना ।
अर्जुनश्चाग्निना दत्तं गांडीवमुपलक्ष्य सः ॥ २ ॥

After V. 24a

ST adds:—

भीष्मार्जुनौ समीक्ष्याजौ देवपुत्राविवाद्भुतौ ।
गांडीवौ समरे वीरौ समर्थौ समलाघवौ ॥ १ ॥
तावुभौ समदीप्ताक्षौ महावीर्यौ समौजसौ ।
समयुद्धासंभ्रान्तौ समव्यायतनायुधौ ॥ २ ॥
तावुभौ देवपुत्राभौ लाघवात्प्रशशंसिरे ।
त्रैलोक्येऽत्र समो नास्ति ताभ्यां स्वर्गे परे भुवि ॥ ३ ॥

After V. 25

ST adds:—

भमानुपमचिन्त्यं तु जगद्विस्मयकारकम् ।

### After V. 42

SK, SG, SA add:—

उभौ विश्रुतकर्माणावुभौ शूरौ महीक्षिताम् ।

### After V. 44

SK adds:—

अश्वत्थामा ततोऽभ्येत्य द्रुतं कर्णमभाषत ।
अहमेको हनिष्यामि समेतान् सर्वपांडवान् ॥ १ ॥
इति कर्ण समक्षं मे सभामध्ये त्वयोदितम् ।
न तु तत्कृतमेकस्माद्भीतो धावसि सूतज ॥ २ ॥
वैचित्रवीर्यजाः सर्वे त्वामाश्रित्य पृथासुतान् ।
जेतुमिच्छन्ति संग्रामे भवान्युध्यस्व फल्गुनं ॥ ३ ॥
अश्वत्थामोदितं वाक्यं श्रुत्वा दुर्योधनस्तदा ।
प्रत्युवाच रुषा द्रौणिं कर्णप्रियचिकीर्षया ॥ ४ ॥
मा मानभंगं विप्रेन्द्र कुरु विश्रुतकर्मणः ।
मानभंगेन राज्ञां तु बलहानिर्भविष्यति ॥ ५ ॥
शूरा वदन्ति संग्रामे वाचा कर्माणि कुर्वते ।
पराक्रमन्ति संग्रामे स्वस्य वीर्यानुसारतः ॥ ६ ॥
तस्मात्त्वं नार्हसि भवान् गर्हितुं शूरसंमतं ।
राज्ञैवमुक्तः स द्रौणिर्गतकोपोऽभवत्तदा ॥ ७ ॥

### After V. 50

SK adds:—

पराक्रमे च शौर्ये च वीर्ये सत्त्वे बले रणे ।
शस्त्रास्त्रेषु च सर्वेषु लाघवे दूरपातने ॥ १ ॥
यस्य नास्ति समो लोके पितृदत्तवरश्च यः ।
जितश्रमो जितारातिर्निस्तंद्रिः खेदवर्जितः ॥
यः स्वेच्छामरणः शूरः पितृशुश्रूषणे रतः ॥ २ ॥
दुर्योधनहितार्थाय युध्वा पार्थेन संगरे ।
पृथासुतहितार्थाय पराजित इवाभवत् ॥ ३ ॥

S. cl. further adds:—

वैशंपायन उवाच ।

भीष्मं विजित्य संग्रामे कुरूणां मिषतां रणे ।
ततो युद्धमनाः प्रायात्पार्थः पंच महारथान् ॥ १ ॥
आददानश्च नाराचान्विमृशन्निषुधी अपि ।
संस्पृशानश्च गाण्डीवं भूयः कर्णं समभ्यगात् ॥ २ ॥

द्रौणिरुवाच ।

कर्ण यत्तत्सभामध्ये वह्वद्धं प्रभाषसे ।
न मे युधि समोऽस्तीति तदिदं प्रत्युपस्थितम् ॥ ३ ॥
एषोऽन्तक इव क्रुद्धः सर्वभूतावमर्दनः ।
अदूरात्प्रत्युपस्थाय जृंभते केसरी यथा ॥
न पलायस्व शूरश्चेत्स्थित्वा युध्यस्व फल्गुनम् ॥ ४ ॥
नाहं बिभेमि बीभत्सोः कृष्णाद्वा देवकीसुतात् ।

कर्ण उवाच ।

पाण्डवेभ्योपि सर्वेभ्यः क्षत्रधर्ममनुव्रतः ॥ ५ ॥
सत्वाधिकानां शूराणां धनुर्वेदोपजीविनाम् ।
दर्शनाज्जायते दर्पः स्वरश्च न विषीदति ॥ ६ ॥
पश्यत्वाचार्यपुत्रो मामर्जुनेन समं युधि ।
युध्यमानं सुसंयुक्तं दैवं तु दुरतिक्रमम् ॥ ७ ॥

अश्वत्थामोवाच ।

को दोषः कर्ण शूराणां वाचा साकं हि पौरुषम् ।
विद्यते यदि तल्लोके गुणोत्तरमिहोच्यते ॥ ८ ॥
युध्यस्व त्वमभीः पार्थं प्रपलायस्व मा रणात् ।
उक्तं वचः स्मरन्कर्ण नाहमित्यादि संयुगे ॥ ९ ॥

वैशंपायन उवाच ।

तं समन्ताद्रथाः पञ्च परिवार्य धनञ्जयम् ।
त इषून्सम्यगस्यन्तो मुमुक्षंतोपि जीवितात् ॥ १० ॥
ते लाभमिव मन्वानाः क्षिप्रमार्च्छन्धनञ्जयम् ।
शरौघान्सम्यगस्यंतो जीमूता इव वार्षिकाः ॥ ११ ॥
बहुभिर्निशितैर्बाणैर्विविधैर्लोमवाहिभिः ।
आद्रवन्प्रत्यवस्थाय प्रत्यविध्यन्धनञ्जयम् ॥ १२ ॥
ततः प्रहस्य बीभत्सुः सर्वशस्त्रभृतां वरः ।
दिव्यमस्त्रं विकुर्वाणः प्रत्ययाद्रथसत्तमान् ॥ १३ ॥
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ।
एवं गाण्डीवनिर्मुक्तैः शरैः प्राच्छादयद्दिशः ॥ १४ ॥
न रथानां न नागानां न ध्वजानां न वाजिनाम् ।
अविद्धं निशितैर्बाणैरासीद्द्व्यंगुलमन्तरम् ॥ १५ ॥
सर्वे शान्तिपरा योधाः स्वचित्तं नाभिजज्ञिरे ।
हस्तिनोऽभ्याध विग्रस्ता व्यपलीयन्त भारत ॥ १६ ॥
यथा नलवनं नागः प्रभिन्नः षाष्टिहायनः ।
एवं सर्वानपामृद्नादर्जुनः शस्त्रतेजसा ॥ १७ ॥

गाण्डीवस्य तु घोषेण पृथिवी समकम्पत ।
मनांसि धार्तराष्ट्राणामभ्यकृन्तद्धनञ्जयः ॥ १८ ॥
ततो विगाह्य सैन्यानां मध्यं शस्त्रभृतां वरः ।
सारथिं समरे शूरस्त्वभ्यभाषत वीर्यवान् ॥ १९ ॥
संनियम्य हयानेतान्मन्दं वाहय सारथे ।
आचार्यपुत्रं समरे योधयिष्येऽपराजितम् ॥ २० ॥
पुरा ह्येष मया युक्तः स मे भवति पृष्ठतः ॥ २१ ॥
एवमुक्तेऽर्जुनेनासावश्वत्थामरथं प्रति ।
विराटपुत्रो जवनान्भृशमश्वानचोदयत् ॥ २२ ॥

कर्ण उवाच ।

एषोपयाति बीभत्सुर्व्यथितो गाढवेदनः ।
तं तु तत्रैव यास्यामि नासौ मुच्येत जीवितात् ॥ २३ ॥

द्रोण उवाच ।

नासौ भयेन निर्यातो महात्मा पाकशासनिः ।
नैवं भीता निवर्तन्ते न पुनर्गाढवेदनाः ॥ २४ ॥
यद्येनमभिसंरब्धं पुनरेवाभियास्यसि ।
बहून्यस्त्राणि जानीते न पुनर्मोक्ष्यते भवान् ॥ २५ ॥
दिष्ट्या दुर्योधनो मुक्तो दिष्ट्या गावः पलायिताः ।
मुक्तो दिष्ट्या च संग्रामे किं रणेन करिष्यसि ॥ २६ ॥
क्रोशमात्रमपाक्रम्य बलमन्वानयामहे ।
अन्वागतबलाः पार्थं पुनरेवाभियास्यथ ॥ २७ ॥

4 C omitted in ST, SG, SA. vv. 8 and 9 with अश्वत्थामोवाच omitted in ST, SG, SA. v. 11 *b* repeated in SG, ST. After v. 12.

SA reads for v. 21:—

पुरा सार्थी भवत्येषामयं शब्दोत्र तिष्ठताम् ।

---

## ADHYĀYA 60.

[ *NORTHERN RECENSION.* ]

After V. 15

AHM adds—

न मोक्ष्यसे सोऽद्य महीं समग्रां ।
यानानि वस्त्राण्यथ भोजनानि ॥

युद्धात्पलायन्धृतराष्ट्रपुत्र ।
सुवर्णमालांवरकुंडलानि ॥ १ ॥
हाराश्च चेड्डूर्यकृतोपचाराः ।
च्युतस्य राज्यात्तव नाद्य राजन् ॥
यथा भविष्यन्ति जितस्य तस्य ॥ २ ॥

H M omit v. 2

**After V 19**

K adds:—

भीतं विवस्त्रं विरथं यतोऽहं ।
विसंज्ञमाजौ विकलं विवस्त्रं ॥
विमुक्तकेशं च पलायमानं ।
प्राप्तं तवाहं शरणं वदन्तम् ॥ १ ॥
तवास्मि चेति प्रलपंतमेवं ।
रक्षेति मां वादिनमेव वादीन् ॥
पराङ्मुखात्राहमहो निहन्मि ।
यतस्ततो जीव सुयोधन त्वम् ॥ २ ॥
वचांसि चेत्त्वं स्मरसि स्वकीया- ।
न्युक्तान्यहो द्यूतजये सभायाम् ॥
ऊरुं स्वकं दर्शयता समक्ष- ।
मस्मान्समाक्षिप्य जगाद कृष्णां ॥ ३ ॥
मृता यथैते किल पांडुपुत्राः ।
व्याघ्रा यथा चर्ममयाश्च सर्पाः ॥
प्रभग्नदंष्ट्राश्च सम्कर्षपंढा- ।
स्तिला यथारण्यभवास्तथैते ॥ ४ ॥
जनो यथा काकयवान् जगाद ।
पांडूंस्तथा नामधरांस्तु विद्धि ॥
समाविशास्त्वंगमिदं ममेति ।
राज्यस्य मेऽलंकरण भव त्वम् ॥ ५ ॥
द्रोणस्य भीष्मस्य कृपस्य चैव ।
यच्छृण्वतस्त्वं बहुधालपत्मो ॥
तदेहि भो न त्वकजस्य सैन्यैः ।
सहापि मामेकरथं रथैः स्वैः ॥ ६ ॥
सर्वैः स्वयोधैर्बहुभिः समं त्वं ।
युध्यस्व मामेकमपीह वीरम् ॥
जीवन्विमोक्षे न पलायमानो ।
मंद स्वयुक्तं स्मर तत्सभायाम् ॥ ७ ॥

परीप्स युद्धेन कुरून् समक्षम्।
प्राणान्मया बाहुबलाभिसृष्टान्॥

L adds the last 2 lines only.

### [ *SOUTHERN RECENSION.* ]

### Before V. 1

अर्जुन उवाच।

SK, SG, SA add:—

दक्षिणामेव तु दिशं हयानुत्तर वाहय।
पुरा सार्थी भवत्येषामयं शब्दोऽत्र तिष्ठताम्॥ १॥
अश्वत्थाम्नः प्रतिरथं प्राचीमुद्याहि सारथे।
अचिराद् द्रष्टुमिच्छामि गुरुपुत्रं यशस्विनम्॥ २॥

वैशंपायन उवाच।

मोहयित्वा तु तान्सर्वान्धनुर्घोषेण पांडवः।
प्रसव्यं चैवमावृत्य क्रोशार्धे प्राद्रवत्तदा॥ ३॥
यथा सततगो वायुः सुपर्णश्चापि शीघ्रगः।
तथा पार्थरथः शीघ्रमाकाशे पर्यवर्तत॥ ४॥
मुहूर्तोपरते शब्दे प्रतियाते धनंजये।
हस्त्यश्वरथपादातं पुरस्कृत्य महारथाः॥ ५॥
द्रोणभीष्ममुखाः सर्वे सैन्यानां जघने ययुः।
यत्ताः पार्थमपश्यन्तः सहिताः शरविक्षताः॥ ६॥

सैनिका ऊचुः।

दिष्ट्या दुर्योधनो मुक्तः सैन्यं भूयिष्ठमागतम्।
क्रोशमात्रमतिक्रम्य बलमन्वानयामहे॥
यात यत्र वनं गुल्मं नदीमन्वश्मकां प्रति॥ ७॥

वैशंपायन उवाच।

अथ दुर्योधनो दृष्ट्वा भग्नं स्वं बलमाहवे।
अमृष्यमाणः क्रोधेन प्रतिमार्गे धनंजयम्॥ ८॥
न्यवर्तत कुरुश्रेष्ठः स्वेनानीकेन संवृतः।
वार्यमाणो दुराधर्षैर्भीष्मद्रोणकृपैर्भृशम्॥ ९॥

ततोऽर्जुनश्चित्रमुदारवेगं।
समीक्ष्य गांडीवमुवाच वाक्यं॥
भोगींद्रकल्पं भुवनेषु रूढ-।
मभेद्यमच्छेद्यमदारमार्जं॥ १०॥

इदं त्विदानीमनयं कुरूणाम् ।
शिवं धनुः शत्रुनिबर्हणं च ॥
अत्याशुगं वेगवदाशुकर्तृ ।
आवारणीयं महते रणाय ॥ ११ ॥

प्रदारणं शत्रुवरूथिनीना- ।
मनीकजित्संयतिवज्रकल्पम् ॥
वैधव्यदं शत्रुनितम्बिनीनाम् ।
सुखप्रदं कौरववंशजानाम् ॥ १२ ॥

प्रयाहि यत्रैष सुयोधनो हि ।
तं पातयिष्यामि शरैः सुतीक्ष्णैः ॥
आचार्यपुत्रं च सुयोधनं च ।
पितामहं सूतसुतं च संख्ये ॥ १३ ॥

द्रोणं कृपं चैव निवार्य सर्वान् ।
शिरो हरिष्यामि सुयोधनस्य ॥ १४ ॥

वैशंपायन उवाच ।

तदुत्तरश्चित्रमुदारवेगं ।
धनुश्च दृष्ट्वा निशितान्शरांश्च ॥
भीतोऽब्रवीदर्जुनमाजिमध्ये ।
नाहं तवाश्वान्विषहे नियन्तुम् ॥ १५ ॥

तमब्रवीन्मात्स्यसुतं प्रहस्य ।
गांडीवधन्वा द्विषतां निहंता ॥
मया सहायेन कुतो भयं ते ।
येह्युत्तराश्वानुपमंत्रयस्व ॥ १६ ॥

आश्वासितस्तेन धनंजयेन ।
वैराटिरश्वानतुदज्जवेन ॥
विस्फारयंस्तद्धनुरग्रवेगम् ।
युयुत्समानः पुनरेव जिष्णुः ॥ १७ ॥

गांडीवशब्देन तु तत्र तत्र ।
भूमौ निपेतुर्यहयोऽतिवेलम् ॥
शंखस्य शब्देन तु वानरस्य ।
नादेन ते योधवराः समन्तात् ॥ १८ ॥

अर्जुन उवाच ।

एषोऽतिमानी धृतराष्ट्रपुत्रः ।
सेनामुखे सर्वसमृद्धतेजाः ॥

पराजयं नित्यममृष्यमाणो ।
निवर्तते युद्धमनाः पुरस्तात् ॥ १९ ॥
तमेव याहि प्रसमीक्ष्य युक्तः ।
सुयोधनं तत्र सहानुजं च ॥ २० ॥

वैशंपायन उवाच ।

तमापतंतं प्रसमीक्ष्य सर्वे ।
कुरुप्रवीराः सहसाभ्यगच्छन् ॥
प्रहस्य वीरः स तु तानतीत्य ।
दुर्योधने द्वौ निचखान बाणौ ॥ २१ ॥

तेनार्दितो नाग इव प्रभिन्नः ।
पार्थेन विद्धो धृतराष्ट्रपुत्रः ॥
युयुत्समानोऽतिरथेन संख्ये ।
स्वयं विगृह्यार्जुनमाससाद ॥ २२ ॥

v. 10 *cd* & 12 *cd* omitted in SG, SA.

**After V. 15**

S. cl. adds:—

तस्मिन्महेष्वासवरेऽतिविद्धे ।
धनंजयेनाप्रतिमेन युद्धे ॥
सर्वाणि सैन्यानि भयार्दितानि ।
त्रासं ययुः पार्थमुदीक्ष्य तानि ॥ १ ॥

ततस्तु ते शांतिपराश्च सर्वे ।
दृष्ट्वार्जुनं नागमिव प्रभिन्नम् ॥
उच्चैर्नदन्तं बलमस्तमाजौ ।
मध्ये स्थितं सिंहमिवर्षभाणाम् ॥ २ ॥

गांडीवशब्देन तु पांडवस्य ।
योधा निपेतुः सहसा रथेभ्यः ॥
भयार्दिताः पार्थशराभितप्ताः ।
सिंहाभिपन्ना इव वारणेंद्राः ॥ ३ ॥

संरक्तनेत्रः पुनरिंद्रकर्मा ।
वैकर्तनं द्वादशभिः पृषत्कैः ॥
विश्रास्य तेषां द्रवतां समैक्षत् ।
दुःशासनं चैकरथेन पार्थः ॥ ४ ॥

कर्णोऽब्रवीत्पार्थशराभितप्तो ।
दुर्योधनं दुष्प्रसहं च दृष्ट्वा ॥

दृष्टोऽर्जुनोऽयं प्रतियाम शीघ्रम् ।
श्रेयो विधास्याम इतो गतेन ॥ ५ ॥

मन्ये त्वया तात कृतं च कार्यम् ।
यदर्जुनोऽस्माभिरिहाद्य दृष्टः ॥
भूयो वनं गच्छतु सव्यसाची ।
पश्यामि पूर्णं समयं न तेषाम् ॥ ६ ॥

वैशंपायन उवाच ।

शरार्दितास्ते युधि पांडवेन ।
प्रसस्रुरन्योन्यमथाह्वयन्तः ॥
कर्णोऽब्रवीदापतत्येष जिष्णु- ।
र्दुर्योधनं संपरिवार्य यामः ॥ ७ ॥

सर्वास्त्रविद्वारणयूथपाभः ।
काले प्रहर्ता युधि शात्रवाणाम् ॥
अयं च पार्थः पुनरागतो नो ।
मूलं च रक्ष्यं भरतर्षभाणाम् ॥ ८ ॥

समीक्ष्य पार्थं तरसा पतंतम् ।
दुर्योधनः कालमिवात्तशस्त्रम् ॥
भयार्तरूपः शरणं प्रपेदे ।
द्रोणं च कर्णं च कृपं च भीष्मम् ॥ ९ ॥

तं भीतरूपं शरणं व्रजन्तम् ।
दुर्योधनं शत्रुसहो निषंगी ॥
इत्यब्रवीत्प्रीतमनाः किरीटी ।
बाणाभितप्तं रुधिरं वमन्तम् ॥ १० ॥

( *ST omits the first two verses.* )

**After V. 16**

S. cl. adds:—

न भोक्ष्यसे सोऽद्य महीं समग्राम् ।
यानानि वस्त्राण्यथ भोजनानि ॥
कल्याणगन्धीनि च चन्दनानि ।
युद्धात्परावृत्य तु भोक्ष्यसे किम् ॥ १ ॥

सुवर्णमाल्यानि च कुण्डलानि ।
दारांश्च वैडूर्यकृतोपधानान् ॥
च्युतस्य युद्धाच्च तु शंगदाप्दा- ।
स्त्वया भविष्यन्ति तथाद्य पाप ॥ २ ॥

न भोगहेतोर्वरचन्दनं च।
स्त्रियश्च मुख्या मधुरप्रलापाः॥
युद्धात्प्रयातस्य नरेन्द्रसूनो।
परे च लोके फलिता न चेह॥ ३॥

ST omits 2 *b* and v. 3 and reads instead:—

मृदंगशंखध्वनिरम्यगीतो।
यथानुपूर्वं न तथा भविष्यति॥

**After V 17**

ST adds:—

युधिष्ठिरस्य प्रियकृच्च भ्राता।
राजन्यवीयानहमस्मि तस्य॥
योगं तवेदं भुवि नः सहेयम्।
दुर्योधनोऽसीति कृतं पुरस्तात्॥ १॥

**After V. 18a**

S. cl. adds:

दुर्योधनस्त्वं प्रथितोऽसि नाम्ना।
सुयोधनः सच्चिकृतिप्रधानः॥ १॥

**After V. 19**

ST adds:—

न पश्चान्न पुरस्ताद्वा तव पश्यामि किंचन।
वयोमे न परीक्षस्व जीवितं त्विदमात्मनः॥ १॥

---

## ADHYĀYA 61.

### [ *NORTHERN RECENSION* ]

**Before V. 1**

H adds:—

ततो दुर्योधनः क्रुद्धो व्याक्षिपद्वदनुत्तमम्।
धृतिं कृत्वां सुविपुलां प्रत्युवाच धनंजयम्॥ १॥
नाहमिन्द्रादपि क्रुद्धाद्बिभेमि भरतर्षभ।
भुक्त्वा सुविपुलं राज्यं भोगांश्चैव पृथग्विधान्॥ २॥
पार्थाहं युद्धसमयं पालयिष्यामि सर्वदा।
एवमुक्त्वा महाराज प्रतोदित इव द्विपः॥
अनन्तभोगस्तेजस्वी प्रधर्षित इवोरगः॥ ३॥

After V. 20

Edns and MSS add:—

शान्तिं परां प्राप्य यदास्थितोऽभूः ।
उत्सृज्य बाणांश्च धनुर्विचित्रम् ॥ १ ॥

After V. 21

L adds:—

अद्यापि चैतन्यमहो तवात्र ।
नास्त्येव राजन्गतचारिकस्य ॥
संभालयात्मानममित्रसाह ।
क ते गतं वीरमदीनसत्व ॥ १ ॥
योधांश्च सर्वानभिवीक्ष्य नग्नां-।
स्तस्मात्र वाच्यं धृतराष्ट्रपुत्र ॥ १ ॥

After V. 22b

M adds:—

युष्मान्समेतान् कुपितानहन्यात् ।
तस्मात्पुरं जयाम स नोस्तु लाभः ॥

After V. 23b

L adds:—

नीतानि वस्त्राणि च फाल्गुनेन ।
समीक्ष्य राजा हृदि लज्जितश्च ॥ १ ॥

Before V. 31

H adds:—

विपण्यचेता मयि विह्वलांगो ।
राजन्पुरस्कृत्य ययौ स्वदेशम् ॥ १ ॥

M adds:—

विपणरूपा भयपीडितांगा ।
जग्मुः पुरस्कृत्य यथाप्रदेशम् ॥ १ ॥

After V. 38

Edns and MSS add:—

विवेश हृष्टो नगरं महामना ।
बृहन्नलारूपमुपेत्य सारथिः ॥ १ ॥

[ *SOUTHERN RECENSION.* ]

After V. 2

S. cl. adds:—

ततो दुर्योधनः क्रुद्धो विक्षिपन्धनुरुत्तमम् ।
धृतिं कृत्वा सुविपुलां प्रत्युवाच धनंजयम् ॥ १ ॥

सोहमिंद्रादभिक्रुद्धान्न विभेमीह भारत ।
भुक्त्वा सुविपुलं राज्यं वित्तानि च सुखानि च ॥ २ ॥
किमर्थं युद्धसमये पलायिष्ये नरोत्तम ।
एवमुक्त्वा महाराजः प्रत्ययुध्यत भारत ॥ ३ ॥
संन्यवर्तत शीघ्राश्वस्तोत्रार्दित इव द्विपः ।
आक्रान्तभोगस्तेजस्वी धनुर्वक्र इवोरगः ।
रथं रथेन संगम्य योधयामास पाण्डवम् ॥ ४ ॥

**After V. 3**

SK adds:—

गान्धारराजः शकुनिर्निवृत्य ।
द्रौणिश्च सर्वास्त्रविदां वरिष्ठः ॥
ररक्षतुः कौरवमभ्युपेत्य ।
पार्थान्नृवीरौ युधि सव्यतश्च ॥ १ ॥

**After V. 10**

SK adds:—

संमोहनास्त्रप्रभवैः शरौघैः ।
विनष्टदेहाश्च निपत्य योधाः ॥
निःसत्ववेगाः कुरुराजसैन्याः ।
कुड्योपमास्तस्थुरनीहमानाः ॥ १ ॥

**After V. 15c**

SK adds:—

नानाविधान्यद्भुतवर्णकानि ।
महान्ति चीनांशुदुकूलकानि ॥
पट्टांशुकानि विविधानि मनोज्ञकानि ।
हारांश्च राज्ञां मणिभूषणानि ॥
सुवर्णनिष्काभरणानि मारिष ।
माणिक्यबाह्वंगदकंकणानि ॥
अन्यानि राज्ञां मणिभूषणानि ।
वस्त्राण्युपादाय महारथानाम् ॥

**After V. 15**

SK adds:—

राज्ञश्च सर्वान्कृतसंनिकाशान् ।
संमोहनास्त्रेण विसंज्ञकल्पान् ॥
नासाग्रविन्यस्तकरांगुलीकः ।
पार्थो जहास स्मयमानचेताः ॥

ST adds:—

ततो विसंज्ञेषु परेषु पार्थो ।
वैराटिमामंत्र्य च तं शशास ॥
निर्याहि को ह्यत्वरितो रथेन ।
यावद्विसंज्ञाः कुरवः समेताः ॥ १ ॥

**After V. 18**

ST adds:—

ततः स शब्दो व्यधमत्तु भीमम् ।
तच्चास्त्रवर्षं च स नेमिघोषः ॥

**After V. 20**

S. cl. except SA adds:—

शान्तिं परां प्राप्य यथास्थितस्त्वं ।
उत्सृज्य बाणांश्च धनुश्च चित्रम् ॥

**After V. 22b**

SK adds:—

संमोहनास्त्रप्रतिमोहिताः स्थ ।
यूयं न जानीथ धनापहारम् ॥
पश्यामि वस्त्राभरणानि राजन् ।
विराटपुत्रेण समाहृतानि ॥ १ ॥

नृपेषु सर्वेषु च मोहितेषु ।
हन्तुं यदीच्छेत्सुहृनिष्पतीति ॥
तदा तु धर्मात्मतया नृवीरो ।
न चाहनत्त्वो बलभित्तनूजः ॥ २ ॥

भाग्येन युष्मानवधीन्न पार्थः ।
सन्धिं कुरूणामनुमन्यमानः ॥
तद्यात यूयं सह सैनिकैस्तैः ।
हतावशिष्टैर्गजसाह्वयं पुरम् ॥ ३ ॥

ST reads instead of the above *vv.*—

दक्षः कृतास्त्रो निहतश्च पूर्व- ।
मतोन्यथा संशय एव तस्मात् ॥
मानस्त्वयार्थे निहतश्च तस्य ।
तत्संवृतस्यैतदलं पृथैव ॥ १ ॥

जितेषु सर्वेषु महारथेषु ।
गोषु प्रणीतासु च पार्थिवेन्द्र ॥ २ ॥

### After V. 25

S. cl. adds:—

तेषामनीकानि निरीक्ष्य पार्थो ।
विकीर्णयानध्वजकार्मुकाणि ॥
गाण्डीवधन्वा प्रहसन्कुरूणाम् ।
शंखं प्रदध्मौ बलवान्बलेन ॥ १ ॥

ते शंखशब्दं तुमुलं निशम्य ।
ध्वजस्य शब्दं च ततोन्तरिक्षे ॥
गाण्डीवशब्देन मुहुर्मुहुस्ते ।
भीता ययुः सर्वधनं विहाय ॥ २ ॥

तानर्जुनो दूरतरं विभज्य ।
धनं च सर्वं निखिलं निवर्त्य ॥
आपृच्छ्य तान्दूरमनुप्रयात्वा ।
धनंजयस्तत्र कुरून्महात्मा ॥
गुरूंश्च सर्वानभिवाद्य बाणैः ।
न्यवर्ततोदग्रमनाः शरैः सह ॥ ३ ॥

SA omits 3 *ab*.

### After V. 27b

SK, SG add:—

अराजवंशस्य किमर्थमेतत् ।
नित्यं न धार्यं मकुटं त्वयेति ॥
संपातितं भूमितले सरत्नम् ।
प्रीतस्ततो मात्स्यसुतो बभूव ॥ १ ॥

SA[2] adds:—

तथाम विश्राव्य ततो निवृत्तः ॥

### After V. 30

SK, SG, SA add:—

धनंजयं सिंहमिवात्तशस्त्रम् ।
गा वै विजित्याभिमुखं प्रयान्तम् ॥
उदीक्षितुं पार्थिवास्ते न शेकुः ।
यथैव मध्याह्नगतं हि सूर्यम् ॥ १ ॥

रक्तानि वासांसि च तानि गृह्य ।
रणोत्कटो नाग इव प्रभिन्नः ॥
जित्वा च वैराटिमुवाच पार्थः ।
प्रहृष्टरूपो रथिनां वरिष्ठः ॥ २ ॥

S. cl. further adds:—

उद्घुष्यतां ते विजयोऽद्य शीघ्रम् ।
गात्रं तु ते सेवतु माल्यगन्धः ॥
माता तु ते नन्दतु बान्धवाश्च ।
त्वामद्य दृष्ट्वा समुदीर्णहर्षम् ॥ १ ॥

ST adds after the above verse:—

देवाश्च गन्धर्वगणाश्च पार्थम् ।
राजर्षयश्चापि मुदं प्रतीताः ॥
संपूजयन्तो जयमेत्य सर्वे ।
ययुः पुरस्कृत्य तदा महेन्द्रम् ॥

**After V. 38**

SK, ST add:—

बृहन्नलारूपमथो विधाय ।
मायात्स मात्स्यो नगरं प्रवेष्टुम् ॥

---

## ADHYĀYA 62.

[ *NORTHERN RECENSION.* ]

**After V. 7a**

Edns CGKLM add:—

हस्तिनापुरमुद्दिश्य सर्वे दीना ययुस्तदा ॥

**After V. 8**

K adds:—

अर्जुन उवाच ।
अग्रे प्रयान्तु नगरं घोषयन्तु च ते जयम् ।

**After V 11**

HK add:—

प्रहृष्टास्तेथ गोपालाः प्रविश्य नगरं तथा ।
ऊचुर्जयं विराटस्य दिष्ट्या गोधनमाहृतम् ॥ १ ॥

( K has this addition before v 11)

[ *SOUTHERN RECENSION.* ]

**After V. 4**

S. cl. adds:—

प्राणानन्तर्मनोयातान्प्रयाचिष्यामहे वयम् ।
वयं चार्जुन ते दासा ह्यनुरक्ता ह्यनाथकाः ॥ १ ॥

अर्जुन उवाच ।
अनाथान्दुःखितान्दीनान्कृशान्वृद्धान्पराजितान् ।
न्यस्तशस्त्रान्निराशांश्च नाहं हन्मि कृताञ्जलीन् ॥ २ ॥
भवन्तो यान्तु विस्रब्धा निर्भया अमृता यथा ।
मम पादरजो लक्ष्म्या जीवन्तु सुचिरं भुवि ॥ ३ ॥

ST adds after v. 1:—

अनुजानीह्यनाथांश्च न वध्याः प्राणयाचकाः ।
तव पादरजोधीनाः प्रयाचिष्याम जीवितम् ॥ १ ॥
वयमर्जुन ते दासाः प्राणान् रक्षितुमर्हसि ।
भ्रातृदासाश्च ते सर्वे ह्यनुकम्प्यास्त्वया रणे ॥ २ ॥

**After V. 6**

S. cl. adds:—

ततो निवृत्ताः कुरवो भग्नाश्च दिवमास्थिताः ।
प्रयाताः सर्वतस्तत्र नमस्कृत्य धनंजयम् ॥
एवं दत्ताभयास्तेन ततो याताः कुरून्प्रति ॥ १ ॥
स कर्म कृत्वा परमार्यकर्मा ।
निहत्य शत्रून्द्विषतां निहन्ता ॥ २ ॥

1 *a*, *b* omitted in SG, SA. *c* omitted in SG, ST, SA.

**After V. 7a**

SK, SG add:—

परस्परमवेक्ष्यैव जग्मुस्ते हृतवाससः ॥

**After V. 11**

SK adds:—

मया जिता सा ध्वजिनी कुरूणाम् ।
मया च गावो विजिता द्विपङ्क्तयः ॥
एवं तु कामं नगरं प्रविश्य ।
मयाऽऽत्मना कर्म कृतं ब्रवीत ॥

---

## ADHYĀYA 63.

**[ *NORTHERN RECENSION.* ]**

**After V. 3a**

Edns CGHK add:—

उपासांचक्रिरे सर्वे सह पार्थैः परंतपाः ।

After V. 12

N. cl. except F add:—

एवं स राजा मत्स्यानां विराटो वाहिनीपतिः ।
व्यादिदेशाथ तान् क्षिप्रं वाहिनीं चतुरंगिणीम् ॥ १ ॥
कुमारमाशु जानीत यदि जीवति वा न वा ।
यस्य यन्ता गतः षण्ढो मन्येहं स न जीवति ॥ २ ॥

वैशंपायन उवाच ।

तमब्रवीद्धर्मराजो विहस्य ।
विराटराजं तु भृशाभितप्तम् ॥
बृहन्नला सारथिश्चेन्नरेन्द्र ।
परे न नेष्यन्ति तवाद्य गास्ताः ॥ ३ ॥
सर्वान्महीपान्सहितान्कुरूंश्च ।
तथैव देवासुरसिद्धयक्षान् ॥
अलं विजेतुं समरे सुतस्ते ।
स्वनुष्ठितः सारथिना हि तेन ॥ ४ ॥

L omits verse 4. E omits its first three quarters.

After V. 18a

N. cl. except F add:—

श्रुत्वा स विजयं तस्य कुमारस्यामितौजसः ।

After V. 27

Edns & MSS add:—

प्रियं तु ते चिकीर्षामि वर्ततां यदि मन्यसे ।

After V. 45a

L adds:—

पूरयित्वा च सौवर्णं पानीयस्य च भाजनम् ।

After V. 45

D adds:—

विराटोस्याब्रवीत्तत्र किमेतत्क्रियतामिति ।
सैरन्ध्रि ब्रूहि तत्वेन मम प्रश्नमशेषतः ॥ १ ॥

सैरन्ध्रि उवाच ।

यदिदं शोणितं राजन् कंकस्य पतति क्षितौ ।
इदं च राष्ट्रं ते क्षिप्रं विनश्येत न संशयः ॥ २ ॥
न च द्वादश वर्षाणि वर्षयेत पुरंदरः ।
ईतयश्च प्रवर्तन्ते न सस्यं जायते क्वचित् ॥ ३ ॥
अशुभं स्याच्च राजेन्द्र नृपस्य च पुरस्य च ।

**After V. 51b**

H adds:—

एतत्तस्य महाभाग व्रतमस्ति समाहितम् ।

[ *SOUTHERN RECENSION.* ]

**After V 5a**

SK adds:—

प्रविश्यान्तःपुरं रम्यं स्त्रीशतैरुपशोभितम् ।

**After V. 9**

S. cl. adds:—

गवां शतसहस्राणि अभिभूय ममात्मजम् ।
कुरवः कालयन्ति स्म सर्वे युद्धविशारदाः ॥ १ ॥

**After V.12**

S. cl. adds:—

एवं स राजा मात्स्यानां महानक्षौहिणीपतिः ।
व्यादिदेशाथ स क्षिप्रं वाहिनीं चतुरंगिणीम् ॥
कुमारमाशु जानीत यदि जीवति वा न वा ।
यस्य यन्ता गतः षण्ढो मन्येऽहं स न जीवति ॥ २ ॥

तमब्रवीद्धर्मसुतो विराट-।
मार्तं विदित्वा कुरुभिः प्रतप्तम् ॥
बृहन्नलासारथिश्चेन्नरेन्द्र ।
परे न नेष्यन्ति तवाद्य गाश्च ॥ ३ ॥

सर्वान्महीपान्सहितान्कुरूंश्च ।
तथैव देवासुरनागयक्षान् ॥
अलं विजेतुं समरे सुतस्ते ।
अनुष्ठितः सारथिना हि तेन ॥ ४ ॥

**After V. 17**

SK adds:—

देवेन्द्रसारथिश्चैव मातलिः ख्यातविक्रमः ।
कृष्णस्य सारथिश्चैव न बृहन्नलया समौ ॥

**After V. 18a**

S. cl. adds:—

श्रुत्वा तु विजयं तस्य कुमारस्यामितौजसः

After V. 18

S. cl. adds:—

गते त्वनुज्ञने तस्मिन्दूतवाक्यं निशम्य च ।
उत्तरस्य जयात्प्रीतो विराटः प्रत्यभाषत ॥ १ ॥

After V. 20

S. cl. adds:—

भवन्तु ते लब्धजये सुते मे ।
पौराश्च मर्त्याश्च परे च नार्यः ॥
ते शुक्लवस्त्राः प्रभवन्तु मार्गे ।
सुगंधमाल्याभरणाश्च नार्यः ॥ १ ॥
भजन्तु सर्वा गणिकाः सुतं मे ।
नार्यश्च कन्याः सह सैनिकाश्च ॥
स्वलंकृतास्ताः सुभगाः सुवेषाः ।
पुत्रस्य पन्थानमनुव्रजन्तु ॥ २ ॥

After V. 24b

S. cl. adds:—

तथैव वाद्यानि च वंशशब्दाः ।
कांस्यं सतालं मधुरं च गीतम् ॥
आदाय नार्यो नगरान्निरीयुः ॥

and then reads the last quarter of v.

SG, ST omit the first line.

After V. 24

S. cl. adds:—

ते ब्राह्मणाः शान्तिपराः प्रधानाः ।
स्वाध्यायवेदाध्ययनक्रमज्ञाः ।
स्वस्तिक्रियागीतजपप्रधानाः ॥

SG, ST add to the above:—

प्रत्युद्ययुस्तं च विराटसूनुम् ॥

After V. 25

S. cl. adds:—

त्रिगर्ताः कुरवः सर्वे संग्रामे निर्जिता मया ।
प्रविश्यान्तःपुरं हृष्टा द्यूतं दीव्याम ब्राह्मण ॥ १ ।

*b* omitted in SG, ST.

The whole verse is omitted in SA.

**After V. 26a**

SK adds:—

आदाय व्यजनं त्वं च पार्श्वतोऽनन्तरा भव ।

**After V. 27**

SK, SG, ST add:—

प्रियं तु ते चिकीर्षामि वर्ततां यदि रोचते ।
द्यूतं कर्तुं न वाञ्छामि नरेन्द्र जनसंसदि ॥

The last line is in SA[2] also.

**After V. 30**

S. cl. adds :—

निःसंशयं स कितवः पश्चात्तप्यति पाण्डवः ।
विविधानां च रत्नानां धनानां च पराजये ॥ १ ॥
अभीप्सितविनाशश्च वाक्पारुष्यमनन्तरम् ।
अविश्वास्यं बुधैर्नित्यमेकाह्ना द्रव्यनाशनम् ॥ २ ॥

**After V. 31**

S. cl adds:—

एवमाभाष्य वाक्यैस्तु क्रीडतस्तौ नरोत्तमौ ।

SG ST add after this:—

विराट उवाच ।
अक्षानाहर सैरन्ध्रि कल्प्यतामासनं मम ।
आदाय चासनं भद्रे पार्श्वेचानन्तरा भव ॥

**After V. 32**

S. cl. adds :—

कुरवोऽतिरथाः सर्वे देवैरपि सुदुर्जयाः ।

**After V. 33a**

S. cl. adds:—

दिष्ट्या ते विजिता गावः कुरवश्च पराजिताः ।
अत्यद्भुततमं मन्ये उत्तरश्चेत्कुरून् जयेत् ॥ १ ॥

**After V. 34a**

S. cl. adds:—

तादृशेन तु योधेन महेष्वासेन धीमता ।
कुरवो निर्जिता युद्धे तत्र किं ब्राह्मणाद्भुतम् ॥ १ ॥

युधिष्ठिर उवाच ।

यन्ता तथाविधो यस्य रथे तिष्ठति वीर्यवान् ।
यदि तद्दुष्करं कुर्यात्तत्र किं नाद्भुतं भवेत् ॥ २ ॥

**After V. 35a**

S. cl. adds:—

पुमांसो बहवो दृष्टाः सूताश्च बहवो मया ।
विक्रम्य यन्ता योद्धा च न मे दृष्टः कदाचन ।
विप्रियं न चरेद्राज्ञामनुकूलं प्रियं वदेत् ।
आचरन्विप्रियं राज्ञां न जातु सुखमेधते ॥ २ ॥

**After V. 36**

S. cl. adds:—

वैशंपायन उवाच ।

ततोऽब्रवीत्पुनः कंकः प्रहस्य कुरुवर्धनः ।
बृहन्नलाया राजेन्द्र घुष्यतां नगरे जयः ॥ १ ॥
उत्तरेण तु सारथ्यं कृतं नूनं भविष्यति ।
निमित्तं किंचिदुत्पन्नं तर्कश्चापि दृढो मम ॥ २ ।
यतो जानामि राजेन्द्र नान्यथा तद्भविष्यति ।
कुरवोऽपि महावीर्या देवैरपि सुदुर्जयाः ।
ससोमवरुणादित्यैः सयक्षेशहुताशनैः ॥ ३ ॥

**After V. 37a**

S. cl. adds:—

अश्वत्थामा विकर्णश्च सोमदत्तो जयद्रथः ।
भूरिश्रवाः शलो भूरिर्जलसंधिश्च वीर्यवान् ॥ १ ।
दुर्योधनो दुष्प्रसहो दुःशासनविविंशती ।
वृषसेनोऽश्ववेगश्च वायुवेगसुवर्चसौ ॥ २ ॥
बाल्हीकः शूरसेनश्च युयुत्सुश्च परंतपः ।
सौबलः शकुनिश्चैव द्युमत्सेनश्च साल्वराट् ॥ ३ ॥
अन्ये च बहवः शूरा नानाजनपदेश्वराः ।
कृपेणाचार्यमुख्येन सहिताः कुरवो नृपाः ॥ ४ ॥
सज्जकार्मुकनिस्त्रिंशा रथिनो रथयूथपाः ।
अन्ये चैव महावीर्या राजपुत्रा महारथाः ॥ ५ ॥

**After V. 38a**

S cl. adds:—

तद्बलं न जयेत्क्रुद्धो भीष्मद्रोणादिभिर्वृतम् ॥

### After V. 39

S. cl. adds:—

किमेवं पुरुषो लोके दिवि वा भुवि विद्यते ।
वैशंपायन उवाच ।
तेन संक्षुभितो राजा दीर्यमाणेन चेतसा ॥ १ ॥
अब्रवीद्वचनं क्रूरमजानन्वै युधिष्ठिरम् ।
कंक मा ब्रूहि मे वाक्यं प्रतिकूलं द्विजोत्तम ॥ २ ॥

v. 1 omitted in SA.

### After V. 42a

S. cl. adds:—

तस्य तक्षकभोगाभं बाहुमुत्क्षिप्य दक्षिणम् ।
विराटः प्राहनत्क्रुद्धः कर्णमाश्रित्य दक्षिणम् ॥ १ ॥

### After V. 43a

S. cl. adds:—

अक्षेणाभिहतो राजा विराटेन युधिष्ठिरः ।
तूष्णीमासीन्महाबाहुः कृष्णां पश्यन्सुदुःखिताम्ः ॥ १ ॥
तस्य रक्तोत्पलनिभं शिरसः शोणितं तदा ।
प्रावर्तत महाबाहोरभिघातान्महात्मनः ॥ २ ॥

### After V. 44

S. cl. adds:—

सा विषण्णा च भीता च क्रुद्धा च द्रुपदात्मजा ।
बाष्पं नियम्य कृच्छ्रेण भर्तुर्निःश्रेयसैषिणी ॥ १ ॥
उत्तरीयेण सूक्ष्मेण तूर्णं जग्राह शोणितम् ।
निगृह्य रक्तं वस्त्रेण सैरन्ध्री दुःखमोहिता ॥ २ ॥

### After V. 45a

Ṣ. cl. adds:—

युधिष्ठिरस्य राजेन्द्र द्रुपदेन्द्रसुता तदा ॥ १ ॥
विराट उवाच ।
सैरंध्रि किमिदं रक्तमुत्तरीयेण गृह्यते ।
कोत्र हेतुर्विशालाक्षि तन्ममाचक्ष्व तत्वतः ॥ २ ॥
सैरन्ध्र्युवाच
रक्तबिंदूनि यावन्ति कंकस्य धरणीतल ।
तावद्वर्षाणि राष्ट्रे ते अनावृष्टिर्भविष्यति ॥ ३ ॥
एतन्निमित्तं मात्स्येंद्र कंकस्य रुधिरं मया ।
गृहीतमुत्तरीयेण विनाशो मा भवेत्तव ॥ ४ ॥

SK alone continues:—

यतीशं यो विहन्येत तस्यायुर्विनशिष्यति ।
यो यतीशं नियम्येत सहस्रं यातना यमे ॥ ५ ॥
यतौ रक्तं दर्शयति यावत्पांसुरगृह्यत ।
तावंतः पितृलोकस्थाः पितरः प्रपतंत्यधः ॥ ६ ॥
इति ज्ञात्वा विराटेन्द्र धृतं रक्तं च वाससा ।
मया तव हितार्थाय त्वयि प्रणयकारणात् ॥ ७ ॥

S. cl. beginning a new Adh., continues:—

जनमेयन उवाच ।

युद्धं तु मानुषं द्रष्टुमागतास्त्रिदशाः पुरा ।
किमकुर्वन्त ते पश्चात्कथयस्व ममानघ ॥ १ ॥

वैशंपायन उवाच ।

वासवप्रमुखाः सर्वे देवाः सर्पिपुरोगमाः ।
यक्षगन्धर्वसंघाश्च गणा अप्सरसां तथा ॥ २ ॥
युद्धं तु मानुषं दृष्ट्वा कुरूणां फल्गुनस्य च ।
एकस्य च बहूनां च रौद्रमत्युग्रदर्शनम् ॥ ३ ॥
अस्त्राणामथ दिव्यानां प्रयोगानथ संग्रहान् ।
लघु सुष्ठु च चित्रं च कृतीनां च प्रयत्नतः ॥ ४ ॥
भीष्मं शारद्वतं द्रोणं कर्णं गाण्डीवधन्वना ।
जितानन्यान्भूमिपालान्दृष्ट्वा जग्मुर्दिवौकसः ॥ ५ ॥
सर्वे ते परितुष्टाश्च प्रशस्य च मुहुर्मुहुः ।
असंगगतिना तेन विमानेनाशुगामिना ॥
प्रतिजग्मुरसंगास्ते त्रिदिवं च दिवौकसः ॥ ६ ॥

SK only continues:—

कुरवो निर्जिताः सर्वे भीष्मद्रोणकृपादयः ।
अजय्यास्त्रिदशैः सर्वैः सेन्द्रैः सर्वैः सुरासुरैः ॥ १ ॥
पार्थेनैकेन संग्रामे विस्मयो नो महानहो ।
कस्मिन्मुहूर्ते संजातः कस्य धर्मस्य वा फलम् ॥ २ ॥
किमाश्चर्यं फल्गुनेस्मिन्यो रुद्रेण न्ययोधयत् ।
निवातकवचानाजौ यस्त्रिंशत्कोटिसंमितान् ॥ ३ ॥
तस्य धैतत्किमाश्चर्यं न्नुवन्त इति ते सुराः ।
जग्मुः सुरालयं दृष्ट्वा विस्मयाविष्टचेतसः ॥ ४ ॥

S. cl. adds:—

कुरवोऽर्जुनबाणैश्च ताडिताः शरविक्षताः ।
कुरूनभिमुखा याताः समग्रबलवाहनाः ॥ १ ॥
विराटनगराच्चैव गजाश्वरथसंकुलाः ।
योधैः क्षत्रियदायादैर्बलवद्भिरधिष्ठिताः ॥ २ ॥
विराटप्रहिता सेना नगराच्छीघ्रयायिनी ।
उत्तरं सह सूतेन प्रत्ययात्तमरिंदमम् ॥ ३ ॥
तस्मिंस्तूर्यशताकीर्णे हस्त्यश्वरथसंकुले ।
प्रहर्षः स्त्रीकुमाराणां तुमुलः समपद्यत ॥ ४ ॥
अर्जुनस्तु ततो दृष्ट्वा सैन्ये रेणुं समुत्थितम् ।
सैन्यध्वजं निशम्याथ वैराटिं समभाषत ॥ ५ ॥
नगरे तुमुलः शब्दो रेणुश्चाक्रमते नभः ।
किंनु खल्वपयातास्ते कुरवो नगरं गताः ॥ ६ ॥
ते चैव निर्जितास्माभिर्महेष्वासाः सुतेजसः ।
आमुंच कवचं वीर चोदयस्व च वाजिनः ॥
जवेनाभिप्रपद्यस्व विराटनगरं प्रति ॥ ७ ॥
न तावत्तलनिर्घोषं गाण्डीवस्य च निःस्वनम् ।
ध्वजं वा दर्शयिष्यामि अथवा स्वजनो भवेत् ॥ ८ ॥

उत्तर उवाच ।

सेनाग्रमेतन्मात्स्यानां गणिकाश्च स्वलंकृताः ।
कन्या रथेषु दृश्यन्ते योधा विविधवाससः ॥ ९ ॥
उत्तरामत्र पश्यामि सखीभिः परिवारिताम् ।
अनीकिन्यः प्रदृश्यन्ते हस्तिनोऽश्वाश्च वर्मिताः ॥ १०
रथिनश्च पदाताश्च बहवो न च शस्त्रिणः ।
विराटवचनात्सर्वे संहृष्टाः प्रतिभान्ति मे ॥
न च मेऽत्र प्रतीघातः चित्तस्य स्वजने यथा ॥ ११

वैशंपायन उवाच ।

ततः शीघ्रं समासाद्य उत्तरं स्वजनो बहु ।
परस्परमभिव्यग्रं सस्वजे तं समागतम् ॥ १२ ॥

जना ऊचुः ।

प्रीतिमान्पुरुषव्याघ्रो हर्षयुक्तः पुनः पुनः ।
दिष्ट्या जयसि भद्रं ते दिष्ट्या सूतो बृहन्नला ॥
दिष्ट्या संग्राममागम्य भयं तव न किंचन ॥ १३ ॥

उत्तर उवाच ।

अजैषीदेष तान् जिष्णुः कुरूनेकरथो रणे।
एतस्य बाहुवीर्यं तद्येन गावो जिता मया।
कुरवो निर्जिता यस्मात्संग्रामेऽमिततेजसः ॥ १४ ॥
अकार्षीदेष तत्कर्म देवपुत्रोपमो युवा।
एष तत्पुरुषव्याघ्रो विक्षोभ्य कुरुमण्डलम् ।
गावः प्रसह्य विजिता रणे मां चाभ्यपालयत् ॥ १५ ॥

वैशंपायन उवाच ।

उत्तरस्य वचः श्रुत्वा शंसमानस्य चार्जुनम् ।
चोदिता राजपुत्रेण जयं मंगलवादिनः ॥ १६ ॥
ततो गन्धैश्च माल्यैश्च धूपैश्च वसुसंभृतैः ।
कन्याः पार्थममित्रघ्नं किरंत्यः समपूजयन् ॥ १७ ॥

v. 5 omitted in SG, ST, SA.

***After V. 46***

S. cl. adds:—

भेर्यश्च तूर्याणि च वेणवश्च ।
विचित्रवेषाः प्रमदा जनाश्च ॥
पुरो विराटस्य महाबलस्य ।
निष्क्रम्यभूमिंजयमभ्यनंदन् ॥ १ ॥
प्रशस्यमानस्तु जयेन तत्र ।
पुत्रो विराटस्य न हृष्यति स्म ॥
संभाष्यमाणस्तु जयेन तत्र ।
सोऽतर्मनाः पाडवमीक्षमाणः ॥ २ ॥
पुत्र्यै विराटस्य ततो वराणि ।
वस्त्राण्यदात्पाण्डुसुतः सखीभ्यः ॥
सभाजयंश्चापि समागतास्ता ।
दृष्ट्वा जयं तत्र बलं कुमार्यः ॥ ३ ॥

1 *b* omitted in SA[2] which reads पुरो विराटस्य महाबलस्य
SA पृष्ठतोभ्यनंदन्तत्पुरस्य for निष्क्रम्य &c.
SA reads for 2 *a,b* प्रशस्यमानस्य जयेन पुत्रो विराटराजस्य न हृष्यते स्म ।
SG, ST, आभाजयन्त्यभिसमागतानि for सभाजयंश्चापि etc.
SA समागतश्चापि समागतस्तत्र दिव्या जयप्रकुर्ला कुमार्यः ।

After V. 48a

S. cl. adds:—

राजन्पृथुयशास्तुभ्यं जित्वा शत्रून्समागतः ॥

After V. 48

S. cl. adds:—

कुमारो योधमुख्यैश्च गणिकाभिश्च संवृतः ।
पौरजानपदैर्युक्तः पूज्यमानो जयाशिषा ॥ १ ॥

After V. 50

Edns MSS, and S. cl. add:—

व्रतस्था हि महाबाहो व्रतमेतत्समाहितम् ।

After V. 52

S. cl. adds:—

इंद्रं वापि कुबेरं वा यमं वा वरुणं तथा ।
मम शोणितकर्तारं मृद्गीयात्किं पुनर्नरम् ॥ १ ॥

क्षणमात्रं तु तत्रैव द्वारि तिष्ठतु वीर्यवान् ।
इति प्रोवाच धर्मात्मा युधिष्ठिर उदारधीः ॥ २ ॥

इत्युक्त्वा क्षमया युक्तो धर्मराजो घृणान्वितः ।
सभायां सह मात्स्येन तूष्णीमुपाविवेश ह ॥ ३ ॥

---

## ADHYĀYA 64.

[ *NORTHERN RECENSION.* ]

After V. 9

D adds:—

इत्युक्त्वा मार्जयामास शोणितं स नराधिपः ।

After V. 14

K² adds:—

रामं यो जितवान्संख्ये भार्गवं सुमहाबलम् ।
क्षत्रियांतकरं धीरं तेजोराशिं दुरासदम् ॥ १ ॥

अस्त्रशिष्यं महाबाहुमजेयं दैवतैरपि ।
कालाग्निरुद्रसंकाशं कथमासीत्समागमः ॥ २ ॥

After V. 21a

Edns and MSS add:—

नूनं प्रकाल्य तान्सर्वांस्त्वया युद्धे नरर्षभान् ।

After V. 31

AK add:—

हयानां च गजानां च शूराणां च धनुष्मताम् ।
निहतानि सहस्राणि प्रभग्ना कुरुवाहिनी ॥ १ ॥

[ *SOUTHERN RECENSION* ]

After V. 1

SK adds:—

पश्यन्युधिष्ठिरं दृष्ट्या वक्रया चरणौ पितुः ।
अभिवाद्य ततो दृष्ट्वा कंकस्य रुधिरस्रुतम् ॥ १ ॥
हृदये दह्यत तदा मृत्युग्रस्त इवोत्तरः ॥

*After V. 3a*

SK adds:—

को वा जिगमिषुर्मृत्युं केन स्पृष्टः पदोरगः ॥

SK, SG, SA add:—

श्रोत्रियो ब्राह्मणश्रेष्ठ इन्द्रासनरतिक्षमः ।
पूजनीयोऽभिवाद्यश्च न प्रबाध्योऽयमीदृशः ॥ १ ॥

SK alone continues:—

वैशंपायन उवाच ।

स पुत्रस्य वचः श्रुत्वा विराटो राष्ट्रवर्धनः ।
प्रत्युवाचोत्तरं वाक्यं साध्वसाध्वस्तमानसः ॥ १ ॥
पुत्र ते विजयं श्रुत्वा प्रहृष्टोऽहं मुदा भृशम् ।
अक्षक्रीडनयानेन कालक्षेपमकारिषम् ॥ २ ॥
तत्राजयत्कुरून्सर्वानुत्तरो राष्ट्रवर्धनः ।
इत्युक्तं हि मया पुत्र नेति कंको बृहन्नला ॥ ३ ॥
अजयत्सा कुरून्सर्वानिति मामब्रवीन्मुहुः ।
प्रशंसिते मया पुत्र विजये तव विश्रुते ॥ ४ ॥
बृहन्नलाया विजयं कंकोऽस्तुवत वै रुषा ।

After V. 4

S. cl. adds:—

बृहन्नलाप्रशंसाभिरभ्यसूयमहं तदा ।
ताडितोऽयं मया पुत्र दुरात्मा शत्रुपक्षवत् ॥ १ ॥

SK alone continues:—

ताडितोऽयं यतिः कंक इत्युक्तं तद्वचोत्तरः ।
श्रुत्वा पितुर्भृशं क्रुद्धः पितरं वाक्यमब्रवीत् ॥ १ ॥

### After V. 5

SK adds:—

यावन्न क्षयमायाति कुलं सर्वमशेषतः ।
स्फीतं वृद्धं च मात्स्यानामयं तावत्प्रसाद्यताम् ॥ १ ॥
प्रणम्य पादयोरस्य दण्डवत्क्षितिमण्डले ।
प्रगृह्य पादौ पाणिभ्यामयं तावत्प्रसाद्यताम् ॥ २ ॥
दक्षेण पाणिना स्पृष्ट्वा शपे त्वां क्षपितं मया ।
इति यावद्वदेत्कंक अयं तावत्प्रसाद्यताम् ॥ ३ ॥

### After V.

SG, ST add:—

शोणिते तु व्यतिक्रान्ते पुत्रो राजानमब्रवीत् ।
न युक्तमेव तस्यात्र द्वारि स्थातुं यशस्विन ॥ १ ॥
अनुत्तमभुजस्यास्य श्लाघ्यस्याद्भुतकर्मणः ।
क्षिप्रं प्रवेश्यतां सूतः षण्डकाख्यः परन्तप ॥ २ ॥
एवं तस्य वचः श्रुत्वा राजा चाज्ञापयात्पुनः ।
बृहन्नलामानयध्वं शीघ्रमत्रैव भारत ॥ ३ ॥
राज्ञश्चाज्ञां पुरस्कृत्य समीपपरिवर्तिनः ।
प्रावेशयन्सभां शीघ्रं लज्जमानां बृहन्नलाम् ॥ ४ ॥

### After V. 11a

S. cl. adds:—

परिष्वज्य दृढं राजा प्रवेश्य भवनोत्तमम् ।

### Before V. 15

S. cl. adds:—

यस्य तद्विश्रुतं लोके महद्वृत्तमनुत्तमम् ।
पितुः कृते कृतं घोरं ब्रह्मचर्यमनुत्तमम् ॥ १ ॥
योऽयोधीत्समरे रामं जामदग्न्यं प्रतापिनम् ।
भीष्मोऽसौ पुरुषव्याघ्र न च युद्धे पराजितः ॥ २ ॥
पराक्रमी च दुर्धर्षो विद्वान् शूरो जितेन्द्रियः ।
दृढवेधी क्षिप्रकारी विश्रुतः सर्वकर्मसु ॥ ३ ॥

### After V. 15

SK adds:—

सर्वशस्त्रभृतां श्रेष्ठः सर्वलोकेषु विश्रुतः ।

**After V. 17**

S. cl. adds:—

सर्वे चैव महावीर्या धार्तराष्ट्रा महारथाः ।
तैस्तैर्वीरैश्च ते तात कथमासीत्समागमः ॥ १ ॥

SA *omits this whole verse.*

**After V. 21**

SG, ST add:—

परिगृह्य विनिर्मुक्तो लब्धवान्परवान्पुनः ।
उत्तर क्षत्रियश्रेष्ठ येनोपायेन शाश्वतान् ॥
विनिर्जैषीश्च संग्रामे ब्रूहि तत्त्वं ममात्मज ॥ १ ॥

**After V.  a**

SG, ST add:—

नूनं प्रकंपिताः सर्वे त्वया युधि नरर्षभाः ।

***After V. 27a***

SK adds:—

न हास्तिनपुरे भोगाः भोक्तुं शक्याः पलायता ।

**After V. 32**

S. cl. adds:—

हयाना च गजानां च शूराणां च धनुष्मताम् ।
निहतानि सहस्राणि भग्ना च कुरुवाहिनी ॥ १ ॥
सूतपुत्रं शरैर्विद्धा हयान्हत्वा महारथः ।
अस्त्रेण मोहयित्वा तं रक्तवस्त्रं समाददे ॥ २ ॥

SK, SA continue after the above:—

चतुर्भिः पुनरानर्च्छेद्भीष्मं शान्तनवं शरैः ।
शतं विध्वा हयांश्चाशु नास्य वस्त्रं समाददे ॥ १ ॥
*दुर्योधनं च शल्यान्वापौर्विद्ध्वाथ सप्तभिः ।*
तं स विध्वा हयांश्चास्य पीतवस्त्रं समाददे ॥ २ ॥
द्रोणं कृपं च शल्यान्सोमदत्तं जयद्रथम् ।
भूरिश्रवसमिन्द्राभं शकुनिं च महारथम् ॥ ३ ॥
त्रिभिस्त्रिभिः स विध्वा तु दुःशासनमुखानपि ।
विविधानि च वस्त्राणि महार्हाण्याजहार सः ॥ ४ ॥

SG; ST *read 1a only.*

S. cl. further adds:—

द्वाभ्यां शराभ्यां विध्वाथ तथाचार्यसुतं रणे ।
चापं छित्वा विकर्णस्य नीले चादत्त वाससी ॥ १ ॥

SG, ST omit last line.

**After V. 34**

SK, SG, ST add:—

तस्मै दास्यामि तां पुत्रीं ग्रामांश्चैव तु हाटकान् ।
स्फुरितं कटिसूत्रं च स्त्रीसहस्रशतानि च ॥ १ ॥

**After V. 37a**

S. cl. adds:—

सह पुत्रेण मात्स्यस्य मन्त्रयित्वा धनंजयः ।
इत्येवं ब्रूहि राजानं विराटं समुपस्थितम् ॥
इत्युक्त्वा सहसा पार्थः प्रविश्यांतःपुरं शुभम् ।

**After V. 38**

S. cl. beginning a new Adh. ( SK 73 ) adds:—

वैशंपायन उवाच ।

प्रदाय वस्त्राणि किरीटमाली ।
विराटगेहे मुदितः सखीभ्यः ॥
कृत्वा महत्कर्म तदाजिमध्ये ।
दिदृक्षया सोऽभिजगाम पार्थम् ॥ १ ॥
तं प्रेक्षमाणस्त्वथ धर्मराजम् ।
पप्रच्छ पार्थोऽथ सभीमसेनम् ॥
किं धर्मराजो हि यथापुरं माम् ।
मुखं प्रतिच्छाद्य न चाह किंचित् ॥ २ ॥
तमेवमुक्त्वा परिशंकमानम् ।
दृष्ट्वार्जुनं भीमसेनं च राजा ॥
तदाब्रवीत्तावभिवीक्ष्य राजन् ।
युधिष्ठिरस्तत्परिमृज्य रक्तम् ॥ ३ ॥
दुरात्मना त्वय्यभिपूज्यमाने ।
विराटराज्ञाभिहतोऽस्मि पार्थ ॥
तस्मात्प्रहाराद्रुधिरस्य बिंदून् ।
पश्यन्न चेमे पृथिवीं स्पृशेयुः ॥ ४ ॥
इति प्रतिछाद्य मुखं ततोऽहम् ।
मन्युं नियच्छन्नुपविष्ट आसम् ॥
शुभार्हराष्ट्रं न खिलीकृतं भवेत् ।
वयं तु यस्मिन्सुखिनोऽभवाम ॥ ५ ॥
क्रुद्धे तु वीरे त्वयि चाप्रतीते ।
राजा विराटो न लभेत शर्म ॥
अजानता तेन च शौर्यभाजौ ।
छन्नस्य सत्रेण बलं च पार्थ ॥ ६ ॥

इदं विराटेन मयि प्रयुक्तम्।
ां वीक्षमाणो न गतोऽस्मि हर्षम् ॥ ६ ॥

वैशंपायन उवाच।

तेनाप्रमेयेन महाबलेन।
तस्मिंस्तथोक्ते शममास्थितेन॥
तं भीमसेनो बलवानमर्षी।
धनंजयं क्रुद्धमुवाच वाक्यम् ॥ ७ ॥

न पार्थ नित्यं क्षमकालमाह।
बृहस्पतिर्ज्ञानवतां वरिष्ठः॥
क्षमीह सर्वैः परिभूयतेऽसौ।
यथा भुजंगो विषवीर्यहीनः॥ ८ ॥

विराटमद्यैव निहत्य शीघ्रम्।
सपुत्रपौत्रं सकुलं ससैन्यम्॥
योक्ष्यामहे धर्मसुतं च राज्ये।
अद्यैव शीघ्रं त्वरितेप मात्स्यः॥ ९ ॥

अनेन पांचालसुताथ कृष्णा।
उपेक्षिता कीचकेनाभियुक्ता॥
तस्मादयं नार्हति राजशब्दम्।
राजा भव त्वं नृप पार्थ वीर्यात् ॥ १० ॥

राजा कुरूणां च युधिष्ठिरोऽयम्।
मात्स्येषु राजा भवतु प्रवीरः॥
तं मात्स्यदेहं शतधा भिनद्मि।
पूर्णोदकं कुंभमिवाश्मनीह॥ ११ ॥

अर्जुन उवाच।

भवतः क्षमया राजन्सर्वे दोषाश्च नोऽभवन्।
तं मात्स्यं सबलं हत्वा सपुत्रज्ञातिबांधवम् ॥ १२ ॥
पश्चाच्चैव कुरून्सर्वान् हनिष्यामि न संशयः।
भीमसेनश्च ये चान्ये तथैवेति तमब्रुवन्॥ १३ ॥

तमब्रवीद्धर्मसुतो महात्मा।
क्षमी वदान्यः कुपितं च भीमम्॥
न प्रत्युपस्थास्यति चेत्सदारः।
प्रसादने सम्यगथास्तु वध्यः॥ १४ ॥

न हंतव्यो दुरात्मायं विराटश्चापि तेऽर्जुन।
श्वःप्रभाते प्रवेक्ष्यामः सभां सिंहासनेष्वपि ॥ १५॥
राजवेषेण संयुक्ताः स्थानमस्य स्वलंकृताः।
विराटो यदि तत्रस्थान् राजालंकारशोभितान् ॥ १६ ॥
राजलक्षणसंपन्नान्यदि तत्र न मंस्यते।
पश्चाद्धन्यामहे पार्थ विराटं सहबांधवम् ॥ १७ ॥

SG, ST, SA omit 5 *b*

SG, ST, SA omit स्थानमस्यस्वलंकृताः 16 *a* and 16 *b* and राजलक्षणसंपन्नान् of 17 *a*.

A r 39

S. cl. adds:—

न्यवसंश्चैव तां रात्रिं नशा धर्मवत्सलाः।

SA[1] omits this lin

Afte *l*. 40

S. cl. adds:—

तां रात्रिमवसत्प्रीतः संप्रहृष्टेन चेतसा।

---

## ADHYĀYA 65.

[ *NORTHERN RECENSION.* ]

### Before V. 5

( D adds this After v. 5 )

K adds:—

अचिन्तयत्कथमिमे सभामागम्य भूपिताः।
अतिष्ठन्देवसंकाशाः कथन्नु प्राविशन्निह ॥ १ ॥

### After V. 5a

BDEN add:—

राजासनगतं दृष्ट्वा नृपतिर्विस्मितोऽभवत्।

DN add after the above:—

किमिदं को विधिर्ह्यय भयार्त इव पार्थिवः।

### After V. 14

Edns and MSS add:—

सच्चयैश्च धनैश्चैव शक्रवैश्रवणोपमः।

### After V. 16a

K adds:—

अस्य प्रभावात्सर्वेऽपि भ्रातरोऽमी वयं नृप।
महाप्रभावसंयुक्ता महाबलपराक्रमाः ॥ १ ॥
अस्यैव तपसास्माकं प्रभावाः सन्त्यनेकशः।
विनास्य मनुजैस्तुल्या वयं सर्वे भवाम भो ॥ २॥
यावदेतस्य चादेशं तिष्ठामो वयमादृताः।
पालयन्तः सुरैस्तावदभिपूज्यतमाश्च ह ॥ ३ ॥

### After V. 17

M adds:—

सर्वे च राजन् राजानो धनेश्वरमिवामराः।

### After V.

K adds:—

छलेन यावद्रिपुभिः सत्यपाशेन बंधितः।
अभूत्तावन्मनुष्येषु सर्वसाधारणोह्ययम् ॥ १ ॥
त्रयोदशमवर्षस्य नष्टचर्या व्रतं त्विदम्।
पारितं त्वत्समक्षं वै तन्निस्तीर्णोऽद्य पांडवः॥२॥
यथावद्व्रतचीर्णोऽयं मेघमध्याद्यथा रविः।
भवेत्प्रतापासह्यस्तु तद्वत्पश्येनमप्यहो ॥ ३ ॥
योग्यस्त्वयं नरपतिः मन्ये शक्रासनस्य च।
तस्मान्मा विस्मयस्तेऽस्तु न मृषा प्रब्रवीमि ते ॥ ४ ॥

[ *SOUTHERN RECENSION.* ]

### After V. 4a

SK adds:—

तस्यां रात्र्यां व्यतीतायां प्रातःकृत्यं समाप्य च।
गोसुवर्णादिकं दत्वा ब्राह्मणेभ्यो यथाविधि ॥ १ ॥

### After V. 5a

SG, ST add:—

देवा इव वपुष्मन्तो द्युतिमन्तो महौजसः।
सरोषो हृष्टहृदयश्चिन्तयामास वीर्यवान्।
ते तु शूराः कुतः प्राप्ता आसनेषु समागतः॥ १ ॥

S. cl. adds:—

राजवेषानुपादाय पार्थिवो विस्मितोऽभवत्।
किमिदं को विधिस्त्वेष भयार्त इव पार्थिवः॥
पुरुषप्रवरान् दृष्ट्वा विषादमगमन्नृपः ॥ १ ॥

### After V. 14

S. cl. adds—

धनैश्च संचयैश्चैव शक्रवैश्रवणोपमः।

### After V. 19

S. cl. adds—

वाजिनां च शतं राजन् सहस्राण्ययुतानि च।

---

## ADHYĀYA 66

### [ *NORTHERN RECENSION* ]

### After V. 11a

Edns BCEGHKLM add.—

तदार्जुनस्य वैराटिः कथयामास विक्रमम्।

### After V. 16

H adds:—

भूतपूर्वं न कस्यापि हर्षेणोत्फुल्ललोचनः।
अनेन राजन् वीरेण भीष्मद्रोणमुखा रथाः॥
दुर्योधनेन सहिताः भीमकर्माजयद्रणे॥ १॥
अनेन मत्तमातंगा वमंतो रुधिरं बहु।
हिरण्यकक्षान् संग्रामे दन्ताभ्यामगमन्महीम्॥ २

AE read the first line after v. 17*a*. K reads v. 2 after
Edns and MSS except H add:—

वैशंपायन उवाच।
एवं निवेद्य तान् पार्थान् पाण्डवान् पंच भूपतेः।
ततोऽर्जुनस्य वैराटिः कथयामास विक्रमम्॥ १॥

### After V 17a

BE add—

विराटनृपतेरग्रे हर्षेणोत्फुल्ललोचनः।

KLN add:—

महेंद्रकल्पस्य तदा संप्रहृष्टतनूरुहः।

### After V. 19a

AFHK add:—

तस्य तत्कर्म वीरस्य न मया तात तत्कृतम्।
एष भीतं द्रवन्तं मां देवपुत्रो न्यवारयत्॥
अस्य बाहुबलेनास्मि जीवन्नभ्यागतः पुनः॥ १॥

K omits the first line.

After V. 23

Ends & MSS add:—

एतेषां बाहुवीर्येण अस्माकं विजयो मृधे ।

After V. 30

K adds:—

पृच्छेऽहं कारणं किंचिदुच्यतां तद्यथातथम् ।
देवानामपि शक्तिर्वः रूपप्रावर्तकारिणी ॥ १ ॥
मन्येऽप्यहं यथापूर्वं रूपं वो नाधुना तथा ।
यदा मनुष्यसामान्यमभूदेतर्हि देववत् ॥ २ ॥
रूपं कान्ति बलं धैर्यं गुणाः सर्वेऽप्यनीदृशाः ।
सूर्याग्निरुद्रवज्जाता यूयं देवोपमाः क्षणात् ॥ ३ ॥

युधिष्ठिर उवाच ।

सत्यशौचतपोभिर्नो गुणै प्रीताः सुरा ददुः ।
धर्मदुर्गाप्रभृतयो रूपप्रावर्तद्गुणान् ॥ ४ ॥

[ *SOUTHERN RECENSION.* ]

After V. 5a

SG, ST add:—

शतं षडधिकं हत्वा द्रौपदीमभ्यनन्दयत् ।

After V. 5

SG, ST add —

मल्लानन्यान् बहून् हत्वा मल्लराजं महाबलम् ।
सभायां तव राजेन्द्र भीम एषोऽहनच्छठम् ॥

S. cl. adds after the above:—

हिडिंबं च बकं चैव किर्मीरं च जटासुरम् ।
हत्वा निष्कंटकं चक्रे अरण्यं सर्वतः शुभम् ॥ १ ॥

After V. 8

S. cl. adds:—

द्रुपदस्य प्रिया पुत्री धृष्टद्युम्नस्य चानुजा ।
अग्निकुंडात्समुद्भूता द्रौपदी त्ववगम्यतां ॥ १ ॥

भीम उवाच ।

अस्त्रशो दुर्लभः कश्चित्केवलं पृथिवीमनु ।
धनुर्भृतामतिश्रेष्ठः कौन्तेयोऽय धनंजयः ॥ २ ॥
एतेन खांडवं तस्य ह्यकामस्य शतक्रतोः ।
दग्धं नागवनं चैव सहनागैर्नराधिप ॥ ३ ॥

वर्षे च शरवर्षेण वारितं दुर्जयेन वै ।
कस्माहारिताः सर्वे पार्थिवाः पृथिवीतले ॥ ४ ॥

स्त्रीवेषं कृतवानेष तव राजन्निवेशने ।
बृहन्नलेति यामाहुरर्जुनं जयतां वरम् ॥ ५ ॥

SA omits 5 *b*.

**After V. 16**

SK adds:—

वैशंपायन उवाच ।

एवं निवेद्य तान् पार्थान् पांडवान् पंच भूपतेः ।
ततोऽर्जुनस्य वैराटिः कथयामास विक्रमम् ॥ १ ॥

**After V. 19**

SK adds:—

जायते रोमहर्षो मे संस्मृत्यास्य धनुर्ध्वनिं ।
ध्वजस्थं वानरं भूतैराक्रोशंतं सहानुगैः ॥ १ ॥

नाददानं शरान् घोरान् न मुंचंतं शरोत्करान् ।
न कार्मुकं विकर्षन्तमेनं पश्यामि संयुगे ॥ २ ॥

एतद्धनुःप्रमुक्ताश्च शराः पुंखानुपुंखिनः ।
नालक्ष्येषु रणे पेतुर्नाराचा रक्तभोजनाः ॥ ३ ॥

तीक्ष्णनाराचसंकृत्तशिरोबाहूरुवक्षसाम् ।
कलेवराणि दृश्यन्ते योधानां साश्वसादिनां ॥ ४ ॥

अनेन तटिनी तत्र शोणितांबुप्रवाहिनी ।
प्रवर्तिता भीमरूपा यां स्मृत्वाद्यापि मे मनः ।
प्रकंपते चंडवायुकंपिता कदली यथा ॥ ५ ॥

S. cl. adds after the above:—

अनेन राजन् वीरेण भीष्मद्रोणमुखा रथाः ।
दुर्योधनेन सहिता निर्जिता भीमकर्मणा ॥ १ ॥

अयं भीतं द्रवन्तं मां देवपुत्रो न्यवारयत् ।
यस्य बाहुबलेनास्मि जीवन्प्रत्यागतः पुरम् ॥ २ ॥

**After V. 20a**

S. cl. adds:—

धनंजयं परिष्वज्य पांडवानथ सर्वशः ।
धर्मराजं नमस्कृत्य राजा राज्येऽभिषेचितम् ॥ १ ॥

**Before V. 20b**

S. cl. beginning a new Adh. ( SK 76 ) adds:—

वैशंपायन उवाच ।

विराटस्य वचः श्रुत्वा पार्थिवस्य महात्मनः ।

**After V. 21a**

S. cl. adds:—

तेजस्वी बलवान् शूरो राजराजेश्वरः प्रभुः ।

**After V. 21**

S. cl. adds:—

वयं च सर्वे सामात्याः कुन्तीपुत्रं युधिष्ठिरम् ।
प्रसाद्याभ्युपतिष्ठामो राजन् किं करवामहे ॥ १ ॥
राजंस्त्वमसि संग्रामे गृहीतस्तेन मोक्षितः ।
एतेषां बाहुवीर्येण गावश्च विजितास्त्वया ॥ २ ॥
कुरवो निर्जिता यस्मात्संग्रामेऽमिततेजसः ।
एष तत्सर्वमकरोत् कुन्तीपुत्रो युधिष्ठिरः ॥ ३ ॥

**After V. 22a**

SG, ST, SK add:—

अर्घार्हश्चाभिवाद्यश्च प्राप्तकालं च मे मतं ।

**After V. 22**

S. cl. adds:—

न ह्येते कुपिता शेषं कुर्युराशीविषोपमाः ।
तस्माच्छीघ्रं प्रपद्येम कुन्तीपुत्रं युधिष्ठिरम् ॥ १ ॥
प्रसादयाम्यहं तत्र सह पार्थैर्महात्मभिः ।
उत्तरामग्रतः कृत्वा शिरःस्नातां कृतांजलिः ॥ २ ॥
जानाम्यहमिदं सर्वमेषां तु बलपौरुषम् ।
कुले च जन्म महति फल्गुनस्य च विक्रमम् ॥ ३ ॥

वैशंपायन उवाच ।

उत्तरात्पांडवाञ्श्रुत्वा विराटो रिपुसूदनः ।
उत्तरं चापि संप्रेक्ष्य प्राप्तकालमचिंतयत् ॥ ४ ॥
ततो विराटः सामात्यः सहपुत्रः सबांधवः ।
उत्तरामग्रतः कृत्वा शिरःस्नातां कृतांजलिः ॥
भूमौ निपतितस्तूर्णं पांडवस्य समीपतः ॥ ५ ॥

विराट उवाच ।

प्रसीदतु महाराजो धर्मपुत्रो युधिष्ठिरः ।
प्रच्छन्नरूपवेषत्वान्नाभिदृष्टस्तृणैर्वृतः ॥
शिरसाभिप्रपन्नोऽस्मि सपुत्रपरिचारकः ॥ ६ ॥

SG, ST omit 3 *b*.

SA[1] omits verses 3 *a*, *b* and 4 *a*.

**After V. 25a**

S. cl. adds:—

अवमत्य कृतं सर्वमज्ञानात्प्राकृते यथा ॥

**After V. 25**

S. cl. adds:—

यदिदं मामकं राष्ट्रं पुरं राज्यं च पार्थिव ।
सदंडकोशं विसृजे तव वश्योऽस्मि पार्थिव ॥
वयं च सर्वे सामात्या भवन्तं शरणं गताः ॥ १ ॥

वैशंपायन उवाच ।

तं धर्मराजः पतितं महीतले ।
सबंधुवर्गं प्रसमीक्ष्य पार्थिवम् ॥
उवाच वाक्यं परलोकदर्शनः ।
प्रनष्टमन्युर्गतशोकमत्सरः ॥ २ ॥
न ते भयं पार्थिव विद्यते मयि ।
प्रतीतरूपोऽस्म्यनुचिन्त्य मानसम् ॥
एतत्त्वया सम्यगिहोपपादितम् ।
द्विजैरमात्यैः सदशैश्च पांडितैः ॥ ३ ॥
इमां च कन्यां समलंकृतां भृशम् ।
समीक्ष्य तुष्टोऽस्मि नरेन्द्रसत्तम ॥ ४ ॥
क्षान्तमेतन्महाबाहो यन्मां वदसि पार्थिव ।
न चैव किंचित्पश्यामि विकृतं ते नराधिप ॥ ५ ॥

**After V. 31a**

S cl. adds—

विभक्तमेतद्भवतां नोत्कठां कर्तुमर्हथ ।
अविभक्तं भवाद्भिर्मे न संदेहो नराधिपाः ॥ १ ॥

SG, ST, SA omit 1 *b*.

After V. 31

S. cl. adds:—

( SK. begins Adhy. 77 )

इदं सनगरं राष्ट्रं सजनं सवधूजनम् ।
युष्मभ्यं संप्रदास्यामि भोक्ष्याम्युच्छिष्टमेव च ॥ १ ॥
अहं वृद्धश्चिरं राजन्भुक्तभोगश्चिरं सुखम् ।
राज्यं दत्वा तु युष्मभ्यं प्रव्रजिष्यामि काननम् ॥ २ ॥

After V. 33

S cl. adds:—

वयं वनान्तरात्प्राप्ता न ते राज्यं गृहामहे ।
किन्तु दुर्योधनादीनां राज्ञां राज्यं गृहामहे ॥ १ ॥

---

## ADHYĀYA 67.

[ *NORTHERN RECENSION.* ]

After V. 18a

Edns and MSS add:—

समस्ताक्षौहिणीपाला यज्वानो भूरिदक्षिणाः ।

After V. 19a

Edns BCDGHKN add:—

पूजयामास विधिवत् सभृत्यबलवाहनान् ।

After V. 21a

*Edns and MSS add:—*

अनाधृष्टिस्तथाक्रूरः साम्बो निशठ एव च ।

After. V. 21

K adds:—

अन्येऽपि बहवः शूरा नृपाः प्रीतिपरायणाः ।
विभ्यन् केऽपि समाजग्मुः पांडवेभ्यो हितैषिणः ॥

After V. 25

Edns and MSS add:—

ततो विवाहो विधिवद्ववृधे मत्स्यपार्थयोः ।

KLM add:—

अनेकशः समाजग्मुः नानादिग्भ्यो नराधिपाः ।
विराटनगरं प्राप्य हस्त्यश्वरथसादिनः ॥ १ ॥
नानादेशोद्भवाश्चैव रत्नानि सुबहूनि च ।
वस्त्राणि च महार्हाणि दिव्यान्याभरणानि च ॥ २ ॥
रौक्म्यं चोच्चावचं वस्त्रं श्लक्ष्णाणि च मृदूनि च ।
मणिकांचनचित्राणि दिव्यान्याभरणानि च ॥ ३ ॥
अश्वान् तित्तिरिकल्मापान् श्वेताश्वांश्च सहस्रशः ।
विवाहार्थमनुप्राप्ताः साभद्रस्य महात्मनः ॥ ४ ॥
मंगलेन च संयुक्तं ब्रह्मघोषेण नादितम् ।
वेदोद्गीतैः सामभिश्च स्तुतिभिर्ब्रह्मचारिणाम् ॥ ५ ॥
वेदी विरचिता तत्र सर्वरत्नविभूषिता ।
हृष्टपुष्टजनाकीर्णाः सर्वशः शुक्लवाससः ॥ ६ ॥
नानादेशोद्भवाश्चैव गायनास्तत्र चागताः ।
समेताः सर्वशस्तत्र ब्राह्मणा वेदपारगाः ॥ ७ ॥

**After V. 28**

H adds:—

तंत्रीनादमहानादैर्विस्पष्टस्वननादितैः ।
तथानर्तकनृत्यद्भिः......चैव गायनैः ॥
वाद्यद्भिश्चारुवाद्यं च नरैर्मुदितमानसैः ॥ १ ॥

**After V. 34a**

H adds—

सुभद्रायांकमारोप्य स्नुषां तां वरवर्णिनीं ।
कुपिता तत्र पांचाली निर्गच्छन्तीव मन्दिरात् ।
अर्जुनेन तदा कृष्णस्तांगृहीत्वा समानयत् ॥ १ ॥
स्नुषा तव महाभागे पुत्रोऽयं नात्र संशयः ॥ २ ॥
तस्या अंके समारोप्य वधूवरमनोहरम् ।
सुभद्रा पादलग्नापि कृष्णेन सह भामिनी ॥ ३ ॥
संतोषं परमं प्राप्ता पांचाली वरवर्णिनी ॥ ४ ॥

**After V. 35**

AFL add—

प्रादान्मत्स्यपतिर्हृष्टः प्रीत्यर्थमभिमन्यवे ।

Edns CDGHKN add:—

हुत्वा सम्यक् समिद्धाग्निमर्चयित्वा द्विजन्मनः ।
राज्यं बलं च कोशं च सर्वमात्मानमेव च ॥ १ ॥

DKN add after the above:—

न्यवेदयत्पांडवेभ्यो विराटः प्रीतिमांस्तदा ।

**After V. 37**

Edns and MSS add:—

भोजनानि च हृद्यानि पानानि विविधानि च ।

[ *SOUTHERN RECENSION.* ]

**After V. 13**

S. cl. adds:—

प्रतिगृह्य स्नुपार्थे वै दर्शयन् व्रतमात्मनः ।
शीलशौचसमाचारं लोकस्यावेद्य फल्गुनः ॥ १ ॥
लोके विख्याप्य माहात्म्यं यशश्च स परंतपः ।
कृतार्थः शुचिरव्यग्रस्तुष्टिमानभवत्तदा ॥ २ ॥

युधिष्ठिर उवाच ।

राजन्प्रीतोऽस्मि भद्रं ते सखा मेऽसि परंतप ।
सुखमध्युषिताः सर्वे अज्ञातास्त्वयि पार्थिव ॥ ३ ॥

वैशंपायन उवाच ।

विराटनगरे राजा धर्मात्मा संशितव्रतः ।
पूजितश्चाभिषिक्तश्च रत्नैश्च शतशोऽर्चितः ॥ ४ ॥

तथा ब्रुवन्तं प्रसमीक्ष्य राजा ।
परं प्रहृष्टः स्वजनेन तेन ॥
स्नेहात्परिष्वज्य नृपो भुजाभ्याम् ।
ददौ महार्थं कुरुपांडवानाम् ॥ ५ ॥

युद्धात्प्रयाताः कुरवो हि मार्गे ।
समेत्य सर्वे हितमेव तत्र ॥
आचार्यपुत्रः शकुनिश्च राजा ।
दुर्योधनः सूतपुत्रश्च कर्णः ॥ ६ ॥

संमंत्र्य राजन् सहिताः समर्थाः ।
समादिशन् दूतमथो समग्राः ॥

युधिष्ठिरश्चापि सुसंप्रहृष्टः ।
दुर्योधनाद्दूतमपश्यदागतम् ॥ ७ ॥

स चाब्रवीद्धर्मराजं समेत्य ।
युधिष्ठिरं पांडवमुग्रवीर्यम् ॥

धनंजयेनासि पुनर्वनाय ।
प्रव्राजितः समये तिष्ठ पार्थ ॥

त्रयोदशे ह्येव कीरीटमाली ।
संवत्सरे पांडवेयोऽद्य दृष्टः ॥ ८ ॥

वैशंपायन उवाच ।

ततोऽब्रवीद्धर्मसुतः प्रहस्य ।
क्षिप्रं गत्वा ब्रूहि सुयोधनं तम् ॥

पितामहः शान्तनवो ब्रवीतु ।
पूर्णो न पूर्णोऽद्य त्रयोदशो नः ॥ ९ ॥

संवत्सरांते तु धनंजयेन ।
विष्फारितं गांडिवमाजिमध्ये ॥

पूर्णो न पूर्णो न इति ब्रवीतु ।
यदस्य सत्यं मम तत्प्रमाणम् ॥ १० ॥

तेनैवमुक्तः स निवृत्य दूतः ।
दुर्योधनं प्राप्य शशंस तत्वम् ॥

समेत्य दूतेन स राजपुत्रो ।
दुर्योधनो मंत्रयामास तत्र ॥ ११ ॥

भीष्मेण कर्णेन कृपेण चैव ।
द्रोणेन भूरिश्रवसा च सार्धम् ॥

संमंत्र्य रात्रौ बहुभिः सुहृद्भिः ।
भीष्मोऽब्रवीद्धार्तराष्ट्रं महात्मा ॥

तीर्णप्रतिज्ञेन धनंजयेन ।
विष्फारितं गांडिवमाजिमध्ये ॥ १२ ॥

वैशंपायन उवाच ।

नेच्छंत्यसत्येन सुरेंद्रलोकम् ।
पांडोः सुता ब्रह्मणश्चापि लोकम् ॥

तथ्यं च ते पथ्यमहं ब्रवीमि ।
स्वर्ग्यं यशस्यं परलोकपथ्यम् ॥ १३ ॥

कुन्तीसुतैस्त्वं समुपैहि संधिम्।
भुंक्ष्व स्वराज्यं सह पाण्डवेयैः॥
युध्यस्व नो चेत् स्थिरबुद्धिराजौ।
कुन्तीसुतैर्यद्यपि राज्यमिच्छेः॥ १४॥
शान्त न शक्यं कपटेन भोक्तुम्।
राज्यं परेषां महतां बलीनाम्।
जित्वा शत्रून् भुंक्ष्व राज्यं समग्रम्।
हतो भवान् भोक्ष्यति वह्निलोकम्॥ १५॥

वैशंपायन उवाच।

ततः स भागीरथिसूनुवाक्यम्।
निशम्य गांधारितनूद्भवो नृपः॥
उवाच भीष्मं प्रमुखे च पित्रोः।
महीं न दद्यामणुमात्रिकामपि॥ १६॥
निहन्मि पाण्डुदरसंभवान् वा।
हतोऽस्मि तैर्वा सुरलोकमेमि॥
ते धार्तराष्ट्राः समयं निशाम्य।
तीर्णप्रतिज्ञस्य धनंजयस्य॥
संचिन्त्य सर्वे सहिताः सुहृद्भिः।
सपार्थिवाः स्वानि गृहाणि जग्मुः॥ १७॥

SA[1] omits यत्र &c ( 10 b. )

SA[1] omits संवत्सरान्ते to भवन्तु।

SG, ST, SA omit verses 13, 14, 15,16 and 17 a

**After V 14**

SG, ST add·—

विराटेन सपुत्रेण पूज्यमानाः समावसन्।

S. cl. adds:—

दूतानमित्रेषु सर्वेषु प्रातिसंबंधिकेष्वपि।
प्रेषयामास कौन्तेयो विराटश्च महीपतिः॥ १॥

**After V 18a**

S cl. adds.—

समस्तार्श्वाहिणीपाला यज्वानो भूरिदक्षिणाः।

### After V. 20

SK, SG, ST add:--

तस्मिन् काले निशम्याथ दूतवाक्यं जनार्दनः ।
दयितं स्वस्रियं पुत्रं सुभद्रायाः सुमानितम् ॥ १ ॥
अभिमन्युं समादाय रामेण सहितस्तदा ।
सर्वयादवमुख्यैश्च संवृतः परवीरहा ॥
शंखदुंदुभिनिर्घोषैर्विराटनगरं ययौ ॥ २ ॥

### After V. 21a

S. cl. adds:—

अनाधृष्टिस्तथाक्रूरः साम्बो निशठ एव च
प्रद्युम्नश्चमहाबाहुरुल्मुकश्च महाबलः ॥ १ ॥

### After V. 21

SK, SG, ST add:--

कृष्णेन सहिताः सर्वे पांडवान् द्रष्टुमागताः

### After V. 24

SK, SG, ST add:—

वासुदेवं तथायान्तं श्रुत्वा पांडुसुतास्तदा ।
मात्स्येन सहिताः सर्वे प्रत्युद्याता जनार्दनम् ॥ १ ॥
शंखदुन्दुभिनिर्घोषैर्मंगलैश्च जनार्दनम् ।
ववन्दुर्मुदिताः सर्वे पादयोस्तस्य पांडवाः ।
मात्स्येन सहिताः सर्वे आनंदाश्रुपरिप्लुताः ॥ २ ॥

पांडवा ऊचुः ।

तव कृष्ण प्रसादाद्वै वर्षाण्येतानि सर्वशः ।
त्रयोदशोऽपि दाशार्ह यथा स समयः कृतः ॥ ३ ॥
उषिताः स्मो जगन्नाथ त्वं नाथो नो जनार्दन ।
रक्षस्व देवदेवेश त्वामार्य शरणं गताः ॥ ४ ॥

वैशंपायन उवाच ।

तान् वन्दमानान् सहसा परिष्वज्य जनार्दनः ।
विराटस्य सहायांस्तान् सर्वयादवसंवृतः ॥ ५ ॥
यथार्हं पूजयामास मुदा परमया युतः ।
वृष्णिवीराश्च तान् सर्वान्यथार्हं प्रतिपेदिरे

